# कुमारसम्भवम् ।

अष्टमसर्गावधिसप्तदशसर्गपर्य्यन्तम् ।

## महाकवि-श्रीकालिदास-प्रणीतम् ।

बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितयाव्याख्यया समलङ्कृतम् ।



चतुर्थसंस्करणम् ।

कलिकातानगर्य्यां

सरस्वतीयन्त्रे

मुद्रितम् ।

इं १८८७ ।

## विज्ञापनम् ।

आसीदितःपूर्व्वं १९२५ पञ्चविंशत्युत्तरोनविंशतिशततमवर्षे भारतवर्षे मालवदेशे उज्जयिनी नाम राजधानी। तत्र असीम गुण-धाम-विक्रमादित्यनामा नृपतिर्बभूव। तस्य धन्वन्तरिप्रभृतिषु नवसु कविवरेषु कालिदास एव प्रथितयशा महाकविरासीत्। तेन च रघुवंशकुमारसम्भवमेघदूताभिधं काव्यत्रयं, स्मृतिचन्द्रिका ज्योतिर्विदाभरणनामकं कालज्ञानशास्त्रं च क्रमेण निर्माय तदुत्तरं मालविकाग्निमित्रविक्रमोर्वशीशाकुन्तलाभिधानि दृश्यकाव्यानि प्रणीतानि।

तत्कृतिषु च सप्तदशसर्गात्मककुमारसम्भवनामकेऽस्मिन् महाकाव्ये वीररस एवाङ्गी अन्ये रसा अङ्गानि। कार्त्तिकेयो नायकः तारकासुरः प्रतिनायकः। एतत् काव्यं कविना शैवपुराणान्तर्गततारकासुरवधकथामाश्रित्य प्रणीतम् किन्तु तत्र पार्व्वतीतपस्यानन्तरं पार्व्वतीं प्रति प्रसन्नेन महादेवेन स्वयम्बरविधानकर्त्तव्यतया उपदेशः इह तु सप्तर्षिमण्डलस्य तत्प्रार्थनार्थं हिमवन्तं प्रति प्रेषणमित्येवं कविकल्पितं न तु तत् पुराणकथामूलमित्येव विशेषः। अस्मिंश्च काव्ये प्राथमिकाः सप्त सर्गा एव सर्व्वत्र सुप्रसिद्धाः व्याख्यातृभिश्च प्रायेण त एव सर्गा व्याख्याताः। तदुत्तरसर्गेषु तु पार्व्वतीपरमेश्वरयोः सम्भोगशृङ्गारवर्णनेन रसाभासतया तेष्वनादरणीयत्वेन लोकेषु प्रचाराभावः व्याख्यातृणामुपेक्षा च। किन्तु अध्यापकेन श्रीमत्तारानाथतर्कवाचस्पतिना तु केवलमत ऊर्द्धं सप्तदशसर्गपर्य्यन्तमुद्रितम्।

एषु सप्तसु सर्गेषु मध्ये प्रथमे, हिमालयवर्णनम्; दाक्षायणीशरीरत्यागेन पार्व्वतीजन्मग्रहणम्, पार्व्वतीवर्णनम्, नारदेन पार्व्वत्याः शिव-

कलत्रयोग्यताकथनं, हिमालयस्यान्यवराभिलाषान्निवृत्तिः, दाक्षायणी-वियोगानन्तरं शिवस्य हैमवत्प्रान्ते तपश्चर्य्यावर्णनं, पितृपदेशात् पार्व्वत्या-स्तदाराधनम् । द्वितीये, तारकासुरविप्रकृतैर्देवैः ब्रह्मसमीपे गमनं, ब्रह्मणः स्तुतिः, प्रसन्नेन ब्रह्मणा सह देवानां कथोपकथनम्, तारकासुर-वधप्रार्थनम्, तत्र शिवपुत्त्रस्यैवोत्पत्त्या तद्वध इति ब्रह्मणा उपदिष्टे तदुपा-यार्थं कामदेवस्य स्मरणम् । तृतीये, कामदेवेन सह वासवस्य कथोपकथ-नम्, शिवध्यानभङ्गार्थं कामदेवप्रेषणम्, रतिवसन्ताभ्यां सह कामस्य शिवाश्रमे गमनं, वसन्तवर्णनं, ध्यानभङ्गार्थोद्यतस्य कामस्य शिवेन भस्मी-करणम् । चतुर्थे, रतिविलापः, वसन्तं प्रति अनुमरणार्थं रत्या चितायाः प्रार्थनं, मरणोद्यताया रत्या आकाशवाण्या पुनः कामसङ्गस्य भावितया समाश्वासनम् । पञ्चमे, पार्व्वत्या पित्राज्ञया सखीभ्यां सह तपस्यार्थं गौरीशिखरगमनं तपश्चरणञ्च, तुष्टेन शिवेन परीक्षार्थं ब्रह्मचारिवेशेनागत्य पार्व्वतीं प्रति तपश्चरणकारणस्य प्रश्ने कृते पार्व्वत्या सखीमुखेन तदुत्तरस्य दानं, ब्रह्मचारिणा शिवस्यानुपादेयतायाः प्रतिपादनं, अतः क्रुद्धायाः पार्व्वत्याः तमुपालभ्य स्थानान्तरगमनोद्योगः, तेन प्रसन्नेन शिवेन स्वरूपा-लम्बनेन पार्व्वतीहस्तग्रहणं, शिवम्प्रति पार्व्वत्या विवाहार्थं पितुः प्रार्थनोपदेशः । षष्ठे, शिवेन सप्तर्षिस्मरणं, आगतेषु तेषु हिमवन्तम्प्रति पार्व्वतीयाच्ञार्थं प्रेषणम्, हिमालयसमीपे आगतैश्च तैः शिवार्थं पार्व्वतीप्रार्थनं, हिमवता मेनकानुमत्या शिवार्थं भिक्षारूपेण दानस्याङ्गी-कारः, त्रिदिनोत्तरं विवाहस्य दिनस्थिरीकरणम्, शिवमभिधाय सप्तर्षि-मण्डलस्य स्वस्थाने गमनम् । सप्तमे, वरकन्ययोर्वैवाहिकवेशरचना, वर-यात्रिकाणामोषधिप्रस्थगमनम्, विवाहक्रियासम्पादनम्, देवानां प्रार्थनया कामं प्रति शिवस्य प्रसादः, पार्व्वत्या सह शिवस्य कौतुकागारे प्रवेशः, इत्येते दर्शिताः । अष्टमसर्गादौ तु वर्णनीयाः पदार्था अग्रे दर्शयिष्यन्ते ।

एतच्च काव्यं मल्लिनाथसूरिविरचितटीकयालङ्कृतं किन्तु मल्लिनाथ-धृतव्याकरणसूत्राणि सर्व्वेषां दुर्बोधतया तेषां चिह्नद्वारा तत्तत् सूत्र-

पाठाध्यायपादादिसंख्या प्रकाशिता, तेन तदनुसारेण सूत्रावलोकनं तेषां सुकरमिति। प्रथमसर्गस्य मुद्रणं अत्रभवता श्रीमदानन्दचन्द्रवेदान्तवागीशेन कृतम्। ततो मया यावच्छक्यं परिशोधितम्। तथापि सर्व्वथा परिशुद्धमिति वक्तुमशक्यं भ्रमात् प्रमादाच्च यत्किञ्चिदशुद्धं जातं विद्वद्भिस्तत् शोधनीयम्।

१८६८ खृष्टाब्दः।
हरिनाभि।

श्रीकेदारनाथ शर्म्मा।

# सञ्जीवनी टीका।

मङ्गलाचरणम्।

मातापितृभ्यां जगतो नमो वामार्द्धजानये।
सद्यो दक्षिणदृक्पातसङ्कुचद्वामदृष्टये॥

अन्तरायतिमिरोपशान्तये
शान्तपावनमचिन्त्यवैभवम्।
तं नरं वपुषि कुञ्जरं मुखे
मन्महे किमपि तुन्दिलं महः॥

शरणं करवाणि शर्मदं ते
चरणं वाणि! चराचरोपजीव्यम्।
करुणामसृणैः कटाक्षपातैः
कुरु मामम्ब! कृतार्थसार्थवाहम्॥

प्रतिज्ञा।

इहान्वयमुखेनैव सर्व्वं व्याख्यायते मया।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते॥
भारती कालिदासस्य दुर्व्याख्या विषमूर्च्छिता।
एषा सञ्जीवनी व्याख्या तामद्योज्जीवयिष्यति॥

# कुमारसम्भवम्।

## प्रथमः सर्गः।

अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः।
पूर्व्वापरौ तोयनिधी वगाह्य
स्थितः पृथिव्या इव मानदण्डः॥ १॥

अत्रभवान् कालिदासः कुमारसम्भवं काव्यं चिकीर्षुः 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इति शास्त्रात् काव्यादौ वक्ष्यमाणार्थानुगुणं वस्तु निर्दिशति अस्तीति। (उत्तरस्यां दिशि) अनेनास्य देवभूमित्वं सूच्यते। (देवतात्मा) देवता आत्मा अधिष्ठाता यस्य सः, एतेनास्य वक्ष्यमाणमेनकापरिणयपार्व्वतीजननादिचेतनव्यवहारयोग्यत्वसिद्धिः। हिमस्यालयः स्थानमिति (हिमालयो नाम) हिमालय इति प्रसिद्धः। अधिको राजा अधिराजः, राजाहःसखिभ्यष्टच् (१) न गच्छन्तीति नगाः अचलाः तेषामधिराजः (नगाधिराजः) (अस्ति)। कथम्भूतः (पूर्व्वापरौ) प्राच्यपश्चिमौ (तोयनिधी) समुद्रौ (वगाह्य) प्रविश्य। अतएव (पृथिव्याः) भूमेर्मानं हस्तादिना परिच्छेदः, भावे ल्युट्, तस्य दण्डः (मानदण्डः) यद्वा मीयतेऽनेनेति मानः करणे लुट् स चासौ दण्डश्च सः (इव)

(१) पा० ५।४।९१ सू०।

यं सर्व्वशैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोहदक्षे ।

(स्थितः) आयामपरिच्छेदकदण्ड इव स्थित इत्यर्थः। पूर्व्वापरसागरावगाहित्वञ्चास्य हिमालयस्यास्त्येव । उक्तञ्च ब्रह्माण्डपुराणे, कैलासो हिमवांश्चैव दक्षिणे वर्षपर्व्वतौ । पूर्व्वपश्चायतावेतावर्णवान्तरुपस्थितौ ॥ अत्र हिमाचलस्योभयाब्धिव्याप्तिसाम्यान्मानदण्डत्वेनोत्प्रेक्षणादुत्प्रेक्षालङ्कारः । प्रकृते अप्रकृतगुणक्रियादिसम्बन्धादप्रकृतत्वेन प्रकृतस्य सम्भावनमुत्प्रेक्षेत्यलङ्कारसर्व्वस्वकारः । अस्मिन् सर्गे प्रायेण वृत्तमुपजातिः क्वचिदिन्द्रवज्रोपेन्द्रवज्रे च । तल्लक्षणन्तु स्यादिन्द्रवज्रा यदि तौ जगौ गः। उपेन्द्रवज्रा जतजास्ततो गौ । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति ॥ १ ॥

इतःपरं षोडशभिः श्लोकैर्हिमाद्रिं वर्णयति । तत्र नगाधिराजत्वं निर्वोढुमाह यमिति । सर्व्वे च ते शैलाश्च (सर्व्वशैलाः) पूर्व्वकालैकसर्व्वजरत्पुराणनवकेवलाः समानाधिकरणेनेति (१) समासः । (यं) हिमालयं (वत्सं) (परिकल्प्य) विधाय (दोहदक्षे) दोहनसमर्थे (मेरौ) (दोग्धरि) (स्थिते) सति । यस्य च भावेन भावलक्षणमिति सप्तमी । (पृथूपदिष्टां) पृथुना वैण्येन उपदिष्टां दृष्टकया प्रदर्शितां (धरित्रीं) गोरूपधरामिति शेषः । गौर्भूत्वा तु वसुन्धरेति विष्णुपुराणात् । अकथितं चेति (२) कर्म्मत्वम् । भास्वन्ति च भास्वत्यश्च (भास्वन्ति) द्युतिमन्ति ओषधिविशेषणाच्चैतत् नपुंसकमनपुंसकेनेत्यादिना(३) नपुंसकैकशेषः। (रत्नानि)

---

(१) पा० २ । १ । ४९ सू० । (२) पा० १ । ४ । ५१ सू० ।
(३) पा० १ । २ । ६९ सू० ।

भास्वन्ति रत्नानि महौषधीश्च
पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥ २ ॥

मणीन् जातिश्रेष्ठवस्तूनि च । रत्नं श्रेष्ठे मणावपीति विश्वः । जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते इति यादवः। (महौषधीश्च) सञ्जीवनीप्रभृतीश्च चीरत्वेन परिणता इति शेषः । ताः चीरपरिणामिनीरिति विष्णुपुराणात् । (दुदुहुः) दुहियाचीत्यादिना (१) द्विकर्म्मकत्वम् । अत्र प्रयोजकत्वेऽपि शैलानां पयभिर्हलैः कर्षति ग्रामं ग्रामणीरितिवत् तत्समर्थाचरणात्कर्तृत्त्वेन व्यपदेशः । दुहेः स्वरितत्वेप्यकर्त्रभिप्रायविवक्षायां परस्मैपदम् । अत्रार्थे प्रमाणम् । गौर्भूमिरचलाः सर्व्वे कर्तारोऽत्र पयांसि च । ओषध्यश्चैव भास्वन्ति रत्नानि विविधानि च । वत्सश्च हिमवानासीद्दोग्धा मेरुर्महागिरिरिति । एतेन वत्सस्य मातुः प्रेमास्पदत्वादस्य सारग्राहित्वङ्गम्यते तथाचास्य नगस्य रत्नविशेषभोक्तृत्वान्नगाधिराजत्वं युक्तमिति भावः । अत्र हिमवद्वर्णनस्य प्रकृतत्वात् तद्गतौषधिरत्नानां द्वयानामपि प्रकृतत्वात्तेषां दोहनक्रियारूपसमानधर्म्मसम्बन्धादौपम्यस्य गम्यत्वात् केवलप्राकरणिकविषयस्तुल्ययोगितानामालङ्कारः । तदुक्तं प्रस्तुतानां तथान्येषां केवलंतुल्यधर्म्मतः । औपम्यङ्गम्यते यत्र सा मता तुल्ययोगिता । नचात्र रूपकपरिणामाद्यलङ्कारशङ्का कार्य्या तेषामारोपहेतुत्वात् हिमहेमाचलादिषु वत्सत्वदोग्धृत्वादीनामागमसिद्धत्वेनानारोप्यमाणत्वादिति ॥ २ ॥

---

(१) पा०, भा० १ । ४ । ५१ सू० ।
दुह्याच् पच् दण्ड् रुधि प्रच्छि चिब्रू शासि जिमन्थ् मुषां ।
कर्म्मयुक्स्यादकथितं तथास्यान्नी हृ कृष् वहामिति सिद्धान्तकौमुदी

अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम्।
एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः॥ ३॥
यश्चाप्सरोविभ्रममण्डनानां
सम्पादयित्रीं शिखरैर्बिभर्त्ति।

ननु हिमदोषदूषितस्य तस्यात्यन्तमनभिगम्यत्वाच्छिन्निया इव सर्व्वमपि सौभाग्यं विफलमित्याशङ्क्याह

अनन्तेति। प्रभवत्यस्मादिति प्रभवः कारणम्। अनन्तानामपरिमितानां रत्नानां श्रेष्ठवस्तूनां प्रभवस्य (अनन्तरत्नप्रभवस्य) (यस्य) हिमाद्रेः (हिमं) कर्त्तृ सुभगस्य भावः सौभाग्यम्। हृद्भगसिन्ध्वन्ते पूर्व्वपदस्येत्युभयपदवृद्धिः (१)। तद्विलुम्पतीति (सौभाग्यविलोपि) सौन्दर्य्यविघातकं (न जातं) नाभूत्। (हि) तथाहि (एको दोषः) (गुणसन्निपाते) इन्दोः किरणेष्वङ्क इव निमज्जति) अन्तर्लीयत इत्यर्थः। न हि स्वल्पो दोषोऽमितगुणाभिभावक एव किन्तु कश्चिदिन्दुकलङ्कादिवद्गुणैरभिभूयते अन्यथा सर्व्वस्यवस्तुहानिप्रसङ्गादिति भावः। अत्रोपमानुप्राणितोऽर्थान्तरन्यासालङ्कारः। तल्लक्षणन्तु ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किञ्चन। तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुन इति दण्डी॥३॥

यश्चेति। (च) किञ्चेति चकारार्थः (यः) हिमाद्रिः (अप्सरोविभ्रममण्डनानां) अप्सरसां विभ्रममण्डनानि विलासालङ्करणानि

---

(१) पा० ७। ३। १९ सू०।

वलाहकच्छेदविभक्तरागा-
मकालसन्ध्यामिव धातुमत्ताम् ॥ ४ ॥
आमेखलं सञ्चरतां घनानां
छायामधः सानुगतां निषेव्य।

अथवा विभ्रमो विपरीतन्यासः विभ्रमस्त्वरया काले भूषास्थानविपर्यय इति दशरूपकात्। तेन मण्डनानि तेषां (सम्पादयित्रीम्) एतद्धातुरागदर्शिन्योऽप्सरसः सन्ध्याभ्रमेण प्रसाधनाय त्वरयन्तीति भावः। तथात्वे भ्रान्तिमदलङ्कारो व्यज्यते। कर्तृकर्मणोः कृतीति कर्मणि षष्ठी(१)। वारीणां वाहाः वलाहकाः पृषोदरादित्वात्साधुः। तेषां छेदेषु खण्डेषु विभक्तः सङ्क्रमितो रागो यया ताम् (वलाहकच्छेदविभक्तरागां) एतेनाद्रेरभ्रङ्कषत्वं गम्यते। इदं विशेषणद्वयं सन्ध्यायामपि योज्यम्। (धातुमत्तां) धातवः सिन्दूरगैरिकादयोऽस्य सन्तीति धातुमान्। नित्ययोगे मतुप्। तस्य भावः धातुमत्ता ताम्। धातुयोगित्वमिति सम्बन्धोऽपि वाच्यार्थः। समासकृत्तद्धितेषु संबन्धाभिधानं भावप्रत्ययेनेति वचनात् लक्षणया नित्यानुषङ्गिकधातुमित्यर्थः। (अकालसन्ध्यामिव) अनियतकालप्राप्तसन्ध्यामिव (शिखरैर्बिभर्त्ति) धत्ते। अत्र सन्ध्याशब्दस्य जातिवाचित्वाज्जात्युत्प्रेक्षा ॥ ४ ॥

आमेखलमिति। (सिद्धाः) अणिमादिसिद्धाः देवयोनिविशेषाः पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनय इत्यमरः। आ मेखलाभ्यः (आमेखलं) नितम्बपर्यन्तम्। मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोरिति विश्वः। आङ्मर्यादाभिविध्योरित्यव्ययीभावः(२)। (सञ्चरतां घनानां) मेघानाम् अधः सानूनि मेघमण्डला-

(१) पा० २।२।६६ सू०। (२) पा० २।१।१३ सू०।

उद्वेजिता वृष्टिभिराश्रयन्ते
शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥ ५ ॥
पदं तुषारस्रुतिधौतरक्तं
यस्मिन्नदृष्ट्वापि हतद्विपानाम् ।
विदन्ति मार्गं नखरन्ध्रमुक्तै-
र्मुक्ताफलैः केशरिणां किराताः ॥ ६ ॥

इधस्तटानि गतां प्राप्ताम् । (अधःसानुगतां) । द्वितीयाश्रितातीत-पतितगतात्यस्तप्राप्तापन्नैरिति समासः (१) । (छायां) अनातपम् । छाया सूर्यप्रिया, कान्तिः, प्रतिबिम्बमनातपमित्यमरः । (निषेव्य) (वृष्टिभिरुद्वेजिताः) क्षोभिताः सन्तः । उद्वेजस्त्विमिते क्षोभे भये मन्थरगामिनीति शब्दार्णवः । (यस्य) हिमाद्रेः (आतपवन्ति) सातपानि (शृङ्गाणि) (आश्रयन्ते) आश्रित्य स्थिता इत्यर्थः । अतिमेघमण्डलमस्यौन्नत्यमिति भावः ॥ ५ ॥

पदमिति । (यस्मिन्) अद्रौ (किराताः) (तुषारस्रुतिधौतरक्तं) तुषारस्रुतिभिर्हिमनिष्यन्दैः धौतं क्षालितं रक्तं शोणितं यस्य तत् तथोक्तम् । अतो दुर्ग्रहमिति भावः । हताः द्विपाः गजाः यैस्तेषां (हतद्विपानां) (केशरिणां) सिंहानां (पदं) पादप्रक्षेपस्थानं (अदृष्ट्वापि) नखरन्ध्रे नखच्छिद्रैर्मुक्तैः (नखरन्ध्रमुक्तैः मुक्ताफलैः) (मार्गं विदन्ति) जानन्ति । अत्र व्याधाः सिंहघातिनो गजेन्द्राश्च मुक्ताकरा इति भावः । करीन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्यु-द्भववेणुजानि । मुक्ताफलानि प्रथितानि लोके तेषान्तु शुक्त्युद्भवमेव भूरि ॥ ६ ॥

---

(१) पा० २ । १ । २४ सू० ।

न्यस्ताक्षरा धातुरसेन यत्र
भूर्ज्जत्वचः कुञ्जरविन्दुशोणाः।
व्रजन्ति विद्याधरसुन्दरीणा-
मनङ्गलेखक्रिययोपयोगम्॥ ७॥
यः पूरयन् कीचकरन्ध्रभागान्
दरीमुखोत्थेन समीरणेन।

न्यस्तेति। (यत्र) हिमाद्रौ (धातुरसेन) सिन्दूरादिद्रवेण। शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रस इत्यमरः। (न्यस्ताक्षराः) लिखितवर्णाः अतएव (कुञ्जरविन्दुशोणाः) कुञ्जरस्य ये विन्दवः काये वयोविशेषभाविनः पद्मकाख्याः। पद्मकं विन्दुजालकमित्यमरः। त इव शोणाः रक्तवर्णाः लिखितभागेष्विति शेषः। (भूर्जत्वचः) भूर्जपत्रवल्कलानि। भुर्जपत्रो भुजो भूर्जा मृदुत्वक् चर्मिका अपीति यादवः। (विद्याधरसुन्दरीणाम्) (अनङ्गलेखक्रिययोपयोगं) लिख्यन्ते येषु ते लेखाः पत्रिका अनङ्गस्य लेखाः तेषां क्रियया कामव्यञ्जकलेखकरणेनेत्यर्थः। उपयोगमुपकारं (व्रजन्ति) दिव्याङ्गनाविहारयोग्योऽयं शैल इति भावः॥ ७॥

य इति। (यः) हिमाद्रिः (दरीमुखोत्थेन) दरी गुहा सैव मुखं तस्मादुत्थेन उत्पन्नेन। आतश्चोपसर्गे इति कप्रत्ययः (१)। (समीरणेन) वायुना (कीचकरन्ध्रभागान्) कीचकाः वेणुविशेषाः। वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धता इत्यमरः। तेषां रन्ध्रभागान् छिद्रप्रदेशान् (पूरयन्) धमयन्। वांशिकोपि वंशरन्ध्राणि

---

(१) पा॰ ३। १। १३६ सू॰।

उद्गास्यतामिच्छति किन्नराणां
तानप्रदायित्वमिवोपगन्तुम् ॥ ८ ॥
कपोलकण्डूः करिभिर्विनेतुं
विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्रुतक्षीरतया प्रसूतः
सानूनि गन्धः सुरभीकरोति ॥ ९ ॥

मुखमारुतेन पूरयतीति प्रसिद्धिः । (उद्गास्यतां) देवयोनित्वादुच्चैर्गान्धारग्रामेण गानं करिष्यताम् । उक्तञ्च नारदेन । षड्जमध्यमनामानौ ग्रामौ गायन्ति मानवाः । नतु गान्धारनामानं स लभ्यो देवयोनिभिरिति । (किन्नराणां) देवगायकानां (तानप्रदायित्वम्) । तानो नाम स्वरान्तरप्रवर्त्तको रागस्थितिप्रवृत्त्यादिहेतुरंशापरनामा वंशवाद्यसाध्यः प्रधानभूतः स्वरविशेषः । तानस्त्वंशस्वरोमत इत्यभिनवगुप्तः । गाता यं यं स्वरं गच्छेत्तं तं वंशेन तानयेदिति भरतः । तत्प्रदानशीलत्वं तानप्रदायित्वं वांशिकत्वं (उपगन्तुं) (इच्छतीव) इत्युत्प्रेक्षा सा च दरीमुखोत्थेनेत्येकदेशविवर्त्तिरूपकोज्जीविता मुखसाध्यत्वात्तानप्रदायित्वस्य । यत्रावयवरूपणादवयविरूपणं गम्यते तदेकदेशविवर्त्तिरूपकम् । गम्यते चात्र अवयविनः पुंसोरूपणं यच्छब्दनिर्दिष्टे हिमाद्रावित्यलं बहुना ॥ ८ ॥

कपोलेति । (यत्र) हिमाद्रौ (करिभिः) गजैः (कपोलकण्डूः) गण्डस्थलकण्डूः (विनेतुं) अपनेतुं (विघट्टितानां) घर्षितानां (सरलद्रुमाणां) सम्बन्धिन्या (स्रुतक्षीरतया) स्रुतानि करिकपोलघर्षणात् क्षरितानि क्षीराणि येषां तेषां भावस्तत्ता तया हेतुना (प्रसूतः) उत्पन्नः (गन्धः) (सानूनि) (सुरभीकरोति) एतेनास्य गजाकर-

वनेचराणां वनितासखानां
दरीगृहोत्सङ्गनिषक्तभासः।
भवन्ति यत्रौषधयो रजन्या-
मतैलपूराः सुरतप्रदीपाः॥ १०॥

त्वङ्गम्यते। तथा च गजायुर्वेदे हिमवद्विन्ध्यमलया गजानां प्रभवा नगा इति॥ ९॥

वनेचराणामिति। (यत्र) हिमाद्रौ (रजन्यां) दर्यः कन्दरा एव गृहास्तेषामुत्सङ्गेष्वभ्यन्तरेषु निषक्ताः संक्रान्ता भासो यासान्ताः (दरीगृहोत्सङ्गनिषक्तभासः) (ओषधयः) तृणज्योतींषि। अम्भावोषधिषु च तेजो निधाय रविरस्तं यातीत्यागमः। (वनितासखानां) वनितानां सखायो वनितासखाः। राजाहस्सखिभ्यष्टच्(१)। तेषां रममाणानामित्यर्थः। वने चरन्तीति वनेचराः किराताः। चरेष्टः इति टप्रत्ययः(२)। तत्पुरुषे कृति बहुलम् इत्यलुक्(३)। तेषां (वनेचराणाम्) (अतैलपूराः) अनपेक्षिततैलसेका इत्यर्थः। सुरतेषु रतकर्म्मणि प्रदीपाः (सुरतप्रदीपाः) भवन्ति। अत्र ओषधीष्वारोप्यमाणस्य प्रदीपत्वस्य प्रकृतसुरतोपयोगित्वात्परिणामालङ्कारः। तदुक्तम् आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इति। तथा प्रदीपकारणतैलपूरणनिषेधादकारणकार्य्योत्पत्तिलक्षणा विभावना चेत्युभयोः संसृष्टिः॥ १०॥

---

(१) पा० ५। ४। ९१ सू०।

(२) पा० ३। २। १६ सू०।

(३) पा० ६। ३। १४ सू०।

उद्वेजयत्यङ्गुलिपार्ष्णिभागान्
मार्गे शिलीभूतहिमेऽपि यत्र ।
न दुर्व्वहश्रोणिपयोधरार्त्ता
भिन्दन्ति मन्दां गतिमश्वमुख्यः ॥ ११ ॥
दिवाकराद्रक्षति यो गुहासु
लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैः शिरसां सतीव ॥ १२ ॥

उद्वेजयतीति । (यत्र) हिमाद्रौ शिलीभूतं घनीभूतं हिमं यत्र तस्मिन् (शिलीभूतहिमे) अतएव (अङ्गुलिपार्ष्णिभागान्) अङ्गुलीनां पार्ष्णीनाञ्च भागान् प्रदेशान् ( उद्वेजयति ) अतिशैत्यात् क्लेशयति (अपि) (मार्गे) (दुर्व्वहश्रोणिपयोधरार्त्ताः) श्रोणयश्च पयोधराश्च श्रोणिपयोधरम् । दुर्व्वहेण दुर्द्धरेण श्रोणिपयोधरेण आर्त्ताः पीडिताः आङ्पूर्व्वाद्दच्छतेः क्तः । उपसर्गादृति धाताविति वृद्धिः (१) । अश्वानां मुखानीव मुखानि यासां ताः (अश्वमुख्यः) किन्नरस्त्रियः । उष्ट्रमुखवत्समासः । स्यात्किन्नरः किम्पुरुषस्तुरङ्गवदनो मयुरित्यमरः । (मन्दां) मन्थरां (गतिं) (न भिन्दन्ति) न त्यजन्तीत्यर्थः । पादपीडाकरेऽप्यतिभारभङ्गुरशरीरतया न शीघ्रं गन्तुं शक्यत इति भावः ॥ ११ ॥

दिवाकरादिति । ( यः ) हिमाद्रिः (दिवा) दिवसे ( भीतं ) भयाविष्टं (इव) उलूकमिति च ध्वनिः । (गुहासु लीनं) (अन्ध

(१) पा० ६ । १ । ९१ सू० ।

लाङ्गूलविक्षेपविसर्पिशोभै-
रितस्ततश्चन्द्रमरीचिगौरैः।
यस्यार्थयुक्तं गिरिराजशब्दं
कुर्वन्ति बालव्यजनैश्चमर्यः॥ १३॥

कारं) ध्वान्तं दिवा दिनं करोतीति दिवाकरस्तस्मात् (दिवाकरात्)। दिवाविभानिशाप्रभाभास्करेत्यादिना टप्रत्ययः (१)। भीतार्थानां भयहेतुः इत्यपादानत्वात्पञ्चमी (२)। (रक्षति) त्रायते। ननु क्षुद्र-संरक्षणमनर्हमित्याशङ्क्याह क्षुद्र इति। (उच्चैःशिरसां) उन्नतानां (शरणं प्रपन्ने) शरणागते (क्षुद्रे) नीचे (अपि) (सति) सज्जने (इव) (नूनं) (ममत्वं) ममायमित्यभिमानः अस्तीति शेषः। ममशब्दात् त्वप्रत्ययः। अर्थान्तरन्यासोऽलङ्कारः॥ १२॥

लाङ्गूलेति। (चमर्य्यः) मृगीविशेषाः (इतस्ततः) (लाङ्गूलवि-क्षेपविसर्पिशोभैः) लाङ्गूलानि बालधयः। पुच्छोऽस्त्री लोमलाङ्गूले बालहस्तश्च बालधिरित्यमरः। तेषां विक्षेपैर्विधूननैर्विसर्पिण्यो विसृमरा शोभाः कान्तयो येषां तैः (चन्द्रमरीचिगौरैः) चन्द्रमरी-चिभिरिव गौरैः शुभ्रैः। गौरः करीषे सिद्धार्थे शुक्ले पीतेऽरुणे-ऽपि चेति यादवः। उपमानानि सामान्यवचनैः इति समासः(३)। (बालव्यजनैः) चामरैः (यस्य) हिमाद्रेः (गिरिराजशब्दं) गिरि-राज इति संज्ञाम् (अर्थयुक्ताम्) अभिधेयवन्तं (कुर्वन्ति)। राजा-नोहि छत्रचामरादिचिह्निता इति भावः॥ १३॥

---

(१) पा० ३। २। २१ सू०।
(२) पा० १। ४। २५ सू०।
(३) पा० २। १। ५५ सू०।

यत्रांशुकाक्षेपविलज्जितानां
यदृच्छया किम्पुरुषाङ्गनानाम् ।
दरीगृहद्वारविलम्बिबिम्बा-
स्तिरस्करिण्यो जलदा भवन्ति ॥ १४ ॥
भागीरथीनिर्झरशीकराणां
वोढा मुहुः कम्पितदेवदारुः ।
यद्वायुरन्विष्टमृगैः किरातै-
रासेव्यते भिन्नशिखण्डिबर्हः ॥ १५ ॥

यत्रेति । (यत्र) हिमाद्रौ (अंशुकाक्षेपविलज्जितानां) अंशुकाक्षेपेण वस्त्रापहरणेन विलज्जितानां (किम्पुरुषाङ्गनानां (किन्नरस्त्रीणां (यदृच्छया) दैवगत्या (दरीगृहद्वारविलम्बिबिम्बाः) दरीगृहद्वारेषु विलम्बिबिम्बाः लम्बमानमण्डलाः (जलदाः) (तिरस्करिण्यः) जवनिकाः (भवन्ति) । प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सेत्यमरः । तिरसोऽन्यतरस्यामिति सत्वम् (१) । अत्र जलदेष्वारोप्यमाणस्य तिरस्करिणीत्वस्य प्रकृतोपयोगित्वात्परिणामालङ्कारः ॥ १४ ॥

भागीरथीति । (भागीरथीनिर्झरशीकराणां) गङ्गाप्रवाहपाथःकणानाम् । कर्म्मणि षष्ठी । (वोढा) प्रापकः वहेस्तृच् । (मुहुः) पुनः पुनः सद्यो वा । पौनः पुन्ये भृशार्थे च सद्यो वा स्यान्मुहुःपदमिति वैजयन्ती । (कम्पितदेवदारुः) कम्पिताः देवदारवो येन

(१) पा० ८ । ३ । ४२ सू० ।

सप्तर्षिहस्तावचितावशेषा-
ण्यधो विवस्वान् परिवर्त्तमानः ।
पद्मानि यस्याग्रसरोरुहाणि
प्रबोधयत्यूर्द्ध्वमुखैर्मयूखैः ॥ १६ ॥
यज्ञाङ्गयोनित्वमवेक्ष्य यस्य
सारं धरित्रीधरणक्षमञ्च ।

स तथोक्तः । (भिन्नशिखण्डिबर्हैः) भिन्नानि विश्लेषितानि शिखण्डिनां बर्हाणि गतिलाघवार्थं किरातकटिबद्धानि येन स तथोक्तः । क्रमाद्विशेषणत्रयेण शैत्यसौरभ्यमान्द्यान्युक्तानि । (यद्वायुः) यस्य हिमाद्रेर्वायुः (अन्विष्टमृगैः) मार्गितमृगैः श्रान्तैरिति भावः । अन्विष्टं मार्गितं मृगितमित्यमरः । (किरातैः) (आसेव्यते) ॥१५॥

सप्तर्षीति । (सप्तर्षिहस्तावचितावशेषाणि) सप्त च ते ऋषयश्च सप्तर्षयः । दिक्सङ्ख्ये संज्ञायाम् इति (१) समासः । तेषां हस्तैरवचितेभ्यो लूनेभ्यः अवशेषाण्यवशिष्टानि । शेषोऽप्रधाने सन्तापे त्रिष्वन्यत्रोपयुज्यत इति केशवः । कर्म्मणि घञ्प्रत्ययः । अनेन पद्मानां साफल्यं सूचितम् । (यस्य) हिमाद्रेः रोहन्तीति रुहाणि । इगुपधज्ञाप्रीकिरः कः इति (२) कप्रत्ययः । (अग्रसरोरुहाणि) अग्रे उपरि यानि सरांसि तेषु रुहाणि (पद्मानि) (अधः परिवर्त्तमानः) भ्रमन् (विवस्वान्) सूर्य्यः (ऊर्द्ध्वमुखैः मयूखैः प्रबोधयति) विकासयति न कदाचिदधोमुखैः अतिमार्त्तण्डमण्डलत्वादग्रभूमेरिति भावः । सप्तर्षिमण्डलं ध्रुवादप्यूर्द्ध्वमिति ज्योतिषिकाः अतस्तेषामग्रसरोरुहभागित्वं युक्तम् ॥ १६ ॥

यज्ञाङ्गेति । (यस्य) हिमाद्रेः (यज्ञाङ्गयोनित्वं) यज्ञाङ्गानां

(१) पा० २ । १ । ५० सू० । (२) पा० ३ । १ । १३५ सू० ।

प्रजापतिः कल्पितयज्ञभागं
शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥ १७ ॥
स मानसीं मेरुसखः पितॄणां
कन्यां कुलस्य स्थितये स्थितिज्ञः ।
मेनां मुनीनामपि माननीया-
मात्मानुरूपां विधिनोपयेमे ॥ १८ ॥

यज्ञसाधनानां सोमलतादीनां योनिः प्रभवः तस्य भावस्तत्त्वम् । यज्ञाङ्गार्थं मया सृष्टो हिमवानचलेश्वर इति विष्णुपुराणात् । (धरित्रीधरणक्षमं) भूभारधरणयोग्यं (सारं) बलं (च) । सारो बले स्थिरांशे चेत्यमरः । (अवेक्ष्य) ज्ञात्वा (प्रजापतिः) (स्वयं) एव (कल्पितयज्ञभागं) कल्पितो यज्ञभागो यस्मिन् तत्तथोक्तम् । सोमस्य राज्ञः कुलङ्गः इन्दोः शृङ्गी समुद्रस्य शिशुमारो हिमवतो हस्तीति स्मृतेः इति भावः । (शैलाधिपत्यं) शैलानामाधिपत्यम् अधिपतित्वम् । पत्यन्तपुरोहितादिभ्यो यक् इति (१) यक्प्रत्ययः । (अन्वतिष्ठत् ) ददाति स्मेत्यर्थः । उक्तञ्च ब्रह्माण्डपुराणे । शैलानां हिमवन्तञ्च नदीनाञ्चैव सागरम् । गन्धर्व्वाणामधिपतिञ्चक्रे चित्ररथं विधिः इति ॥ १७ ॥

सम्प्रति कथां प्रस्तौति ।

स मानसीमिति । मेरोः सखा (मेरुसखः) बन्धुसम्पन्न इति भावः । (स्थितिज्ञः) मर्य्यादाभिज्ञः अनेन स्मृतसम्पत्तिः सूच्यते । (सः) हिमवान् (पितॄणां मानसीं) मनःसङ्कल्पजन्याम् । (मुनीनामपि माननीयां) योगब्रह्मवादाभ्यां पूज्यामित्यर्थः । उक्तञ्च विष्णुपुराणे । तेभ्यः स्वभास्वरं जज्ञे मेनका हरिणी तथा । ते उभे

(१) पा० ५ । १ । १२८सू० ।

कालक्रमेणाथ तयोः प्रवृत्ते
स्वरूपयोग्ये सुरतप्रसङ्गे।
मनोरमं यौवनमुद्वहन्त्या
गर्भोऽभवद्भूधरराजपत्न्याः ॥१६॥
असूत सा नागवधूपभोग्यं
मैनाकमम्भोनिधिबद्धसख्यम्।

ब्रह्मवादिन्यौ योगिन्यौ चाप्युभे द्विजेति। (आत्मानुरूपां) कुलशीलसौन्दर्यादिभिः सदृशीम्। (मेनां) मेनकादेवीति नामवतीं (कन्याम्) (कुलस्य स्थितये) प्रतिष्ठायै (विधिना) यथाशास्त्रेण (उपयेमे) परिणीतवान्। उपाद्यमः स्वीकरणे इत्यात्मनेपदम् (१)। तेषान्तु मानसी कन्या मेना नाम महागिरेः। पत्नी हिमवतो यस्याः पुत्रो मैनाक उच्यते इति ब्रह्माण्डपुराणात् ॥ १८ ॥

कालक्रमेणेति। (अथ) (कालक्रमेण) गच्छता कालेनेत्यर्थः। (तयोः) मेनकाहिमवतोः (स्वरूपयोग्ये) सौन्दर्यानुरूपे। यद्वा रूप्यते निरूप्यते अनेनेति रूपं ज्ञानं तद्योग्ये शास्त्रानुसारिणीत्यर्थः। (सुरतप्रसङ्गे) सुरतकर्मणि (प्रवृत्ते) सति (मनोरमं यौवनमुद्वहन्त्याः) (भूधरराजपत्न्याः) मेनकायाः (गर्भोऽभवत्) ॥ १६ ॥

असूतेति। (सा) मेना (नागवधूपभोग्यं) नागकन्यापरिणेतारमित्यर्थः। (अम्भोनिधिबद्धसख्यं) अम्भोनिधिना बद्धसख्यं समुद्रकृतमैत्रीकम्। सख्यमूलं सूचयति। (पक्षच्छिदि) पक्षच्छेत्तरि। सत्सूद्विषेत्यादिना क्विप्प्रत्ययः(२)। (वृत्रशत्रौ) (क्रुद्धे) कुपिते सति

(१) पा० १।३।५६ सू०। (२) पा० ३।२।६१ सू०।

क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्रा-
ववेदनाज्ञं कुलिशक्षतानाम् ॥ २० ॥
अथावमानेन पितुः प्रयुक्ता
दक्षस्य कन्या भवपूर्व्वपत्नी।

(अपि) (कुलिशक्षतानां) वज्रप्रहाराणाम्। सम्बन्धसामान्ये षष्ठी। जानातीति ज्ञः। इगुपधज्ञेति कप्रत्ययः(१)। वेदनानां ज्ञः अथवा वेदनां जानातीति वेदनाज्ञः। आतोऽनुपसर्गे कः इति कप्रत्ययः(२)। उपपदमतिङ् इति समासः (३) स न भवतीत्यवेदनाज्ञः तं (अवेदनाज्ञं) कुलिशक्षतवेदनानभिज्ञमित्यर्थः। सापेक्षत्वेऽपि गमकत्वात्समासः पक्षच्छेदोद्यतशक्रात् त्राणाय शरणागमनमनयोः सख्यमूलमिति भावः (मैनाकं) पुत्त्रम् (असूत)। सर्व्वपर्व्वतपक्षच्छेदेऽप्ययमच्छिन्नपक्ष एवेति मैनाकस्योत्कर्षः। तादृक्पुत्त्रवत्त्वं हिमाद्रेरिति सार्थकं मैनाकस्य वर्णनम्। पिता न ज्ञायते यस्या भ्राता यदि न विद्यते। नोपयच्छेत्तु तां कन्यां धर्म्मलोपभयात्सुधीरिति अभ्रातृककन्यापरिणयनिषेधात् प्रकृते पार्व्वती भ्रातृमत्येवेति सूचनार्थं मैनाकवर्णनमिति तात्पर्य्यार्थः ॥ २० ॥

अथेति। (अथ) मैनाकजननानन्तरं (दक्षस्य) प्रजापतेः (कन्या) (भवपूर्व्वपत्नी) भवस्य महादेवस्य पूर्व्वपत्नी पूर्व्वभार्य्या (सती) पतिव्रता। सती साध्वी पतिव्रतेत्यमरः। (सती) नाम देवी (पितुः) दक्षस्य। कर्त्तरि षष्ठी। (अवमानेन) सभर्त्तृवज्ञया

(१) पा० ३। १। १३५ सू०।
(२) पा० ३। २। ३ सू०।
(३) पा० २। २। १९ सू०।

सती सती योगविसृष्टदेहा
तां जन्मने शैलवधूं प्रपेदे ॥ २१ ॥
सा भूधराणामधिपेन तस्यां
समाधिमत्यामुदपादि भव्या ।
सम्यक्प्रयोगादपरिक्षतायां
नीताविवोत्साहगुणेन सम्पत् ॥ २२ ॥

(प्रयुक्ता) प्रेरिता (योगविसृष्टदेहा) योगेन योगमार्गेण विसृष्टदेहा त्यक्तदेहा सती । ( जन्मने ) पुनरुद्भवाय ( तां शैलवधूं ) मेनकां (प्रपेदे) । अत्र पुरा किल सती देवी दक्षाध्वरे तत्कृतां स्वभर्त्त-वज्ञामसहमाना पितरं प्रसूच उपेक्ष्य मत्कर्त्तृयकार्थं लज्जामातैव करिष्यतीति निर्द्धार्थ्य देवकार्य्याणि साधयितुञ्च योगाग्निना स्वश-रीरं ददाहेति पुरावृत्तकथानुसन्धेया ॥ २१ ॥

सेति । (भव्या) कल्याणी (सा) सती ( भूधराणामधिपेन ) हिमवता (समाधिमत्यां) नियमवत्यां (तस्यां) मेनकायां (सम्यक्-प्रयोगात्) साध्वाचरणाद्धेतोः (अपरिक्षतायाम्) अभ्रष्टायां (नीतौ) (उत्साहगुणेन) उत्साहशक्त्या कर्त्रा (सम्पदिव) (उदपादि) उत्पा-दिता । उत्पद्यते र्ण्यन्तात् कर्म्मणि लुङ् । चिण् भावकर्म्मणोः इति चिण्प्रत्ययः (१) । चिणो लुक् इति तस्य लुक् (२) ॥ २२ ॥

---

(१) पा० ३ । १ । ६६ सू० ।
(२) पा० ६ । ४ । १०४ सू० ।

प्रसन्नदिक् पांशुविविक्तवातं
शङ्खस्वनानन्तरपुष्पवृष्टि ।
शरीरिणां स्थावरजङ्गमानां
सुखाय तज्जन्मदिनं बभूव ॥ २३ ॥

तया दुहित्रा सुतरां सवित्री
स्फुरत्प्रभामण्डलया चकाशे ।
विदूरभूमिर्नवमेघशब्दा-
दुद्भिन्नया रत्नशलाकयेव ॥ २४ ॥

प्रसन्नेति । प्रसन्नाः निर्म्मलाः दिशो यस्मिन् तत् (प्रसन्नदिक्) ( पांशुविविक्तवातं ) पांशुविविक्ता रजोरहिता वाता यस्मिन् तत् तथोक्तम् । (शङ्खस्वनानन्तरपुष्पवृष्टि) शङ्खस्य स्वनात् स्वनस्य वा अनन्तरं पुष्पवृष्टिर्यस्मिन् तत्तथोक्तं तस्याः पार्व्वत्याः जन्मदिनम् (तज्जन्मदिनं) । (स्थावरजङ्गमानां) स्थितिशीलाः स्थावराः शैल-वृक्षादयः । स्थेशभासपिसकसोवरच् इति वरच्प्रत्ययः (१) । जङ्गम्यन्ते भृशं गच्छन्तीति जङ्गमाः देवतिर्य्यङ्मनुष्यादयः । स्थावराश्च जङ्गमाश्च तेषां द्वयानामपि (शरीरिणां) (सुखाय) आनन्दाय (बभूव) ॥ २३ ॥

तयेति । ( स्फुरत्प्रभामण्डलया ) (तया दुहित्रा) ( सवित्री ) जनयित्री । स्वरतिसूयतिसूतिधूञूदितो वा इतीडागमः (२) । विदूरस्याद्रेः प्रान्तभूमिः (विदूरभूमिः) अविदूरे विदूरस्य गिरे-

(१) पा० ३ । २ । १७५ सू० ।
(२) पा० ७ । २ । ४४ सू० ।

दिने दिने सा परिवर्द्धमाना
लब्धोदया चान्द्रमसीव लेखा।
पुपोष लावण्यमयान् विशेषान्
ज्योत्स्नान्तराणीव कलान्तराणि ॥ २५ ॥

रत्नाकरोधसः। काकतालीयसीमान्ते मणीनामाकरो भवेदिति बुद्धः। (नवमेघशब्दादुद्भिन्नया रत्नशलाकया) रत्नाङ्कुरेण (इव) (सुतरां चकाशे) रराज ॥ २४ ॥

दिने दिन इति। लब्ध उदयो यया सा (लब्धोदया) उत्पन्नेत्यर्थः। अभ्युदितेत्यन्यत्र। (दिने दिने) प्रतिदिनम्। नित्यवीप्सयोः इति वीप्सायां द्विरुक्तिः (१)। (परिवर्द्धमाना) उभयत्र समानमेतत्। (सा) बाला चन्द्रमसः इयं (चान्द्रमसी लेखेव) (लावण्यमयान्) कान्तिविशेषप्रचुरान्। मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यत इति भूपालः। (विशेषान्) अवयवान् विशेषोऽवयवे व्यक्ताविल्युत्पलमाला। ज्योत्स्नायाम् अन्तरमन्तर्द्धानं येषां तानि (ज्योत्स्नान्तराणि) ज्योत्स्नाया अन्तर्हितानि तन्मयानीति यावत्। अन्याः कलाः (कलान्तराणीव) सुप्सुपेति समासः। स्थानात्मीयान्यतादर्थ्यरन्ध्रान्तर्धिषु-चान्तरमिति शाश्वतः (पुपोष) उपचितवती। इयं वाक्योपमेत्याह दण्डी। तल्लक्षणन्तु वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते एकानेकेव शब्दत्वात्सातु वाक्योपमा द्विधा ॥ २५ ॥

---

(१) पा० ८। १। ४ सू०।

तां पार्व्वतीत्याभिजनेन नाम्ना
बन्धुप्रियां बन्धुजनो जुहाव ।
उमेति माता तपसो निषिद्धा
पश्चादुमाख्यां सुमुखी जगाम ॥ २६ ॥
महीभृतः पुत्त्रवतोऽपि दृष्टि-
स्तस्मिन्नपत्ये न जगाम तृप्तिम् ।

तामिति । (बन्धुप्रियां तां) बालां (बन्धुजनः) पित्रादिः । अभिजनादागतेन (आभिजनेन) पित्रादिपूर्व्वसम्बन्धोपाधिकेनेत्यर्थः । अभिजनाः पूर्व्वबान्धवा इति काशिका । (नाम्ना) पर्व्वतस्यापत्यं स्त्री पार्व्वती । तस्यापत्यम् इत्यण्प्रत्ययः (१) ! (इति (जुहाव) आहूतवान् । ह्वयतेर्लिटि रूपम् । पर्व्वतजन्यत्वोपाधिना (पार्व्वती) इति नाम्ना प्रसिद्धिरिति भावः । (पश्चात्) आभिजननामप्रवृत्त्यनन्तरं (मात्रा) जनन्या उ इति सम्बोधने । उइति वितर्कसम्बोधनपादपूरणेष्विति गणव्याख्याने । मा शब्दो निषेधे (उ) हे वत्से (मा) मा कुरु (इति) एवंरूपेण (तपसः) तपश्चर्य्यायाः । वारणार्थानामीप्सितः इत्यपादानत्वात्पञ्चमी(२) । (निषिद्धा) निवारिता सती (सुमुखी) सा बाला उमेत्याख्यां नामधेयम् (उमाख्यां जगाम) ॥ २६ ॥

महीभृत इति । पुत्राश्च दुहितरश्च पुत्राः भ्रातृपुत्रौ स्वसृदुहितृभ्याम् इत्येकशेषः (३) तेऽस्य सन्तीति पुत्रवान् । भूमार्थे

(१) पा० ४ । १ । ९२ सू०
(२) पा० १ । ४ । २७ सू० ।
(३) पा० १ । २ । ६८ सू० ।

अनन्तपुष्पस्य मधोर्हि चूते
द्विरेफमाला सविशेषसङ्गा ॥ २७ ॥
प्रभामहत्या शिखयेव दीप-
स्त्रिमार्गयेव त्रिदिवस्य मार्गः।
संस्कारवत्येव गिरा मनीषी
तया स पूतश्च विभूषितश्च ॥ २८ ॥

मतुप्। तस्य (पुत्रवतोऽपि) बह्वपत्यस्यापीत्यर्थः। (महीभृतः) हिमाद्रेः (दृष्टिः) चक्षुः (तस्मिन्नपत्ये) तोके। अपत्यं तोकं तयोः समे इत्यमरः। तस्यां पार्वत्यामित्यर्थः। (तृप्तिं) (न जगाम) (हि) तथाहि (अनन्तपुष्पस्य) नानाविधकुसुमस्यापि (मधोः) वसन्तस्य सम्बन्धिनी (द्विरेफमाला) भृङ्गपङ्क्तिः चूतस्य विकारे (चूते) चूतकुसुमे अवयवे च प्राण्योषधिवृक्षेभ्यः इति विकारार्थोत्पन्नस्याण्प्रत्ययस्य लुप्प्रकरणे (१) पुष्पमूलेषु बहुलम् इति पठनाल्लुक् (२)। (सविशेषसङ्गा) सविशेषः सातिशयः सङ्गो यस्याः सा तथोक्ता अत्यन्तासक्तेत्यर्थः ॥ २७ ॥

प्रभेति। (प्रभामहत्या) प्रकाशाधिकया (शिखया) ज्वालया (दीप इव) शिखादीपयोरवयवावयविभावाद्भेदेन व्यपदेशः। त्रयो मार्गा यस्यास्तया (त्रिमार्गया) मन्दाकिन्या तृतीया द्यौर्लोकइति त्रिदिवः स्वर्गः। वृत्तिविषये त्रिशब्दस्य त्रिभागवत्पूरणार्थत्वम्। पृषोदरादित्वाद्दिवशब्दादकारागमः पुंस्त्वं लोकात्। दीव्यतेर्घञर्थे कविधानम् दीव्यन्त्यत्र जना इति दिव इति क्षीरस्वामी। तस्य

(१) पा० ४।३।१३५ सू०। (२) ४।३।१६६ सू०

मन्दाकिनीसैकतवेदिकाभिः
सा कन्दुकैः कृत्रिमपुत्त्रकैश्च ।
रेमे मुहुर्मध्यगता सखीनां
क्रीड़ारसं निर्विशतीव बाल्ये ॥ २९ ॥

( त्रिदिवस्य मार्ग इव ) (संस्कारवत्या) संस्कारो व्याकरणजन्या शुद्धिः तद्वत्या (गिरा) वाचा । भट्टैषां वह्नीर्निहिताधिवाचीति श्रुतेरिति भावः । मनस ईषा मनीषा सास्यास्तीति (मनीषी) विद्वान् (इव) पृषोदरादित्वात्साधुः । (तया) पार्व्वत्या (सः) हिमवान् (पूतः) शोधितः (च) (विभूषितश्च) अत्र शिखागिरोरविशिष्टयोरुपमानानर्हत्वान्न विशेषणाधिक्यदोषः । इयं मालोपमा॥२८॥

मन्दाकिनीति । (सा) पार्व्वती (बाल्ये) वयसि क्रीडानां रसः स्वादः रुचिरिति यावत् तं ( क्रीडारसम् ) रसो गन्धे रसः स्वादे इति विश्वः । (निर्विशतीव) भुञ्जानेव । निर्वेशो भृतिभोगयोरिति विश्वः । आच्छीनद्योर्नुम् इति विकल्पान्नुमभावः (१) । (सखीनां मध्यगता) सती (मन्दाकिनीसैकतवेदिकाभिः) मन्दाकिन्याः सैकतेषु पुलिनेषु वेदिकाभिः (कन्दुकैः) (कृत्रिमपुत्त्रकैः) क्रियया निर्वृत्तैः कृत्रिमैः । ड्वितः क्त्रिः इति क्त्रिप्रत्ययः (२) । क्त्रेर्म्मित्यम् इति मबागमश्च (३) । पुत्रकैः पाञ्चालिकाभिः (च) । पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृतेत्यमरः । संज्ञायां कन् इति कन्प्रत्ययः (४) । (मुहुः) पुनः पुनः (रेमे) ॥ २९ ॥

---

(१) पा० ७ । १ । ८० सू० ।
(२) पा० ३ । ३ । ८८ सू० ।
(३) पा० ४ । ४ । २० सू० ।
(४) पा० ५ । ३८७ सू० ।

तां हंसमालाः शरदीव गङ्गां
महौषधिं नक्तमिवात्मभासः।
स्थिरोपदेशामुपदेशकाले
प्रपेदिरे प्राक्तनजन्मविद्याः ॥ ३० ॥

असम्भृतं मण्डनमङ्गयष्टे-
रनासवाख्यं करणं मदस्य।
कामस्य पुष्पव्यतिरिक्तमस्त्रं
बाल्यात्परं साथ वयः प्रपेदे ॥ ३१ ॥

तामिति। (स्थिरोपदेशां) स्थिरः स्थेयानुपदेशः प्रागभवीयो यस्यास्तादृशीं मेधाविनीमित्यर्थः। (तां) पार्व्वतीम् (उपदेशकाले) (प्राक्तनजन्मविद्याः) पूर्व्वजन्माभ्यस्तविद्या इत्यर्थः। (शरदि गङ्गां हंसमाला इव) (नक्तं) रात्रौ (महौषधिं) तृणविशेषम् (आत्मभासः) स्वदीप्तयः (इव) (प्रपेदिरे) उपमानसामर्थ्यादुपदेशमन्तरेणैवेति गम्यते ॥ ३० ॥

असम्भृतमिति। (अथ) (सा) पार्व्वती (अङ्गयष्टेः) (असम्भृतम्) अयत्नसिद्धं (मण्डनं) प्रसाधनम् (अनासवाख्यम्) आसवाख्यारहितं (मदस्य करणं) साधनं (कामस्य) (पुष्पव्यतिरिक्तमस्त्रम्) अस्त्रभूतं (बाल्यात्) शैशवात् (परम्) अनन्तरभावि (वयः) यौवनं (प्रपेदे) प्राप। यौवनेनैव हि युवतयः प्रसाध्यन्ते माद्यन्ते काम्यन्ते चेति भावः अत्र द्वितीयपादे आसवरूपकारणाभावेऽपि तत्कार्य्यमदोक्तेर्विभावनालङ्कारः। तदुक्तं कारणाभावे कार्य्योत्पत्तिर्विभावनेति। प्रथमतृतीययोस्तु आरोप्यमाणयोर्मण्डनमदनास्त्रयोः प्रकृतोपयोगात्परिणामालङ्कारः। तल्लक्षणन्तु १४ श्लोकव्याख्याने उक्तम् ॥३१॥

उन्मीलितं तूलिकयेव चित्रं
सूर्य्यांशुभिर्भिन्नमिवारविन्दम् ।
बभूव तस्याश्चतुरस्रशोभि
वपुर्व्विभक्तं नवयौवनेन ॥ ३२ ॥
अभ्युन्नताङ्गुष्ठनखप्रभाभि-
र्निक्षेपणाद्रागमिवोद्गिरन्तौ ।

उन्मीलितमिति । (नवयौवनेन) प्रथमयौवनेन (विभक्तम्) अभिव्यञ्जितं पीनजघनादिसंस्थानमित्यर्थः । (तस्याः) पार्व्वत्याः (वपुः) (तूलिकया) कूर्चिकया शलाकयेत्यर्थः । तूलिका कथिता लेख्यकूर्चिका तूलशय्ययोरिति विश्वः । (उन्मीलितं) रञ्जनद्रव्येणोद्भासितं समुत्कीर्णरूपमिति यावत् (चित्रं) आलेख्यं (इव) (सूर्य्यांशुभिर्भिन्नं) विकसितम् (अरविन्दं) पद्मं (इव) चतस्रः अस्रयः यस्य तच्चतुरस्रमन्यूनातिरिक्तं यथा तथा शोभत इति (चतुरस्रशोभि) ताच्छील्ये णिनिः । (बभूव) चित्रारविन्दयोस्तूलिकातरणिकिरणसम्बन्ध इव स्वतःसिद्धस्यैवाङ्गसौष्ठवस्य यौवनप्रादुर्भावोऽभिव्यञ्जको बभूवेत्यर्थः ॥ ३२ ॥

देवतानां रूपं पादाङ्गुष्ठप्रभृतिभ्यो वर्ण्यते मानुषाणां केशादारभ्येति धार्म्मिकाः सम्प्रति सप्तदशभिः श्लोकैः पार्व्वत्याः पादादिकेशान्तवर्णनमारभते ।

अभ्युन्नतेति । (अभ्युन्नताङ्गुष्ठनखप्रभाभिः) अभ्युन्नतयोरङ्गुष्ठनखयोः प्रभाभिर्निमित्तेन (निक्षेपणात्) निर्भरन्यासाद्धेतोः (रागं) अन्तर्गतं लौहित्यम् । रागः क्लेशादिके रक्ते मात्सर्य्ये लोहितादिष्विति शाश्वतः । (उद्गिरन्तौ) वमन्तौ बहिर्निःसारयन्तौ (इव) स्थिताविन्यर्थः । अत्रोद्गिरतेर्गौणार्थत्वान्न ग्राम्यतादोषः प्रतुरन

आजह्रतुस्तच्चरणौ पृथिव्यां
स्थलारविन्दश्रियमव्यवस्थाम् ॥ ३३ ॥
सा राजहंसैरिव सन्नताङ्गी
गतेषु लीलाञ्चितविक्रमेषु ।
व्यनीयत प्रत्युपदेशलुब्धै-
रादित्सुभिर्नूपुरशिञ्जितानि ॥ ३४ ॥

गुण एव । यथाह दण्डी । निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहत इति । तस्याश्चरणौ (तच्चरणौ) (पृथिव्यामव्यवस्थां) व्यवस्थारहितां सञ्चारिणीमित्यर्थः । (स्थलारविन्दश्रियमाजह्रतुः) स्थलविशेषणान्नियतलौहित्यलाभः । अत्र सामुद्रिकाः । यस्या रक्ततलौ पादावुन्नताग्रौ तलस्पृशौ । निगूढगुल्फौ निहतौ सा स्यान्नृपतिसम्मतेति । अत्रोपमानधर्मस्यारविन्दश्रियश्चरणयोरुपमेययोरसम्भवादरविन्दश्रियमिव श्रियमिति प्रतिबिम्बीकरणाक्षेपान्निदर्शनालङ्कारः । सा च सम्बन्धेऽसम्बन्धलक्षणातिशयोक्त्यनुप्राणिता अव्यवस्थामित्यनेन स्थलारविन्दस्य स्थैर्यसम्बन्धेऽपि असम्बन्धाभिधानात् । निदर्शनालक्षणन्तु । असम्भवद्धर्मयोगादुपमानोपमेययोः । प्रतिबिम्बक्रियागम्या यत्र सा स्यान्निदर्शनेति ॥ ३३ ॥

सेति । (प्रत्युपदेशलुब्धैः) गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थो नोपपद्यत इति न्यायादिति भावः । तदेव व्यनक्ति । (नूपुरशिञ्जितान्यादित्सुभिः) आदातुमिच्छुभिः मञ्जीरसिञ्चितमञ्जुकूजितोपदेशमिच्छद्भिरित्यर्थः । (राजहंसैः) (सन्नताङ्गी) कुचभारादिति भावः । (सा) पार्वती (लीलाञ्चितविक्रमेषु) लीलाभिर्विलासैः अञ्चिताः पूजिताः

वृत्तानुपूर्व्वे च न चातिदीर्घे
जङ्घे शुभे सृष्टवतस्तदीये।
शेषाङ्गनिर्म्माणविधौ विधातु-
र्लावण्य उत्पाद्य इवास यत्नः॥ ३५॥

विक्रमाः पादन्यासाः येषु तेषु। अञ्चेः पूजायाम् इतीडागमः(१) लीला विलासक्रिययोरित्यमरः। (गतेषु) विषये (व्यनीयतेव) विनीता किमु। अन्यथा कथमस्या हंसगमनमित्युत्प्रेक्षा॥ ३४॥

वृत्तेति। वृत्ते वर्तुले पूर्व्वमनुगते अनुपूर्व्वे गोपुच्छाकारे इत्यर्थः। वृत्ते च ते अनुपूर्व्वे च (वृत्तानुपूर्व्वे) च (नातिदीर्घे च) महाविभाषया न समासः। नञोविशेषणत्वस्य प्रयोगादेव ज्ञेयम्। (शुभे) मङ्गले तस्या इमे (तदीये) (जङ्घे) प्रसृते। जङ्घा तु प्रसृतेत्यमरः। (सृष्टवतः) निर्म्मितवतः (विधातुः) स्रष्टुः (शेषाङ्गनिर्म्माणविधौ) जङ्घाव्यतिरिक्तावयवनिर्म्माणार्थमित्यर्थः। (उत्पाद्य) पुनः सम्पाद्ये (लावण्ये) कान्तिविशेषे विषये। लावण्यलक्षणन्तु २५ श्लोकव्याख्याने उक्तम्। (यत्नः आसेव) बभूवेवेत्युत्प्रेक्षा। उपादानमन्तरेण कार्य्यस्य दुष्करत्वात्तदङ्गानाञ्च लावण्योपादानकत्वात्पूर्व्वसम्पादितस्य च जङ्घार्थमेव कार्त्स्न्येन विनियोगात्पुनर्लावण्यसम्पादने यत्नः स्यादेवेतरताहृक्सौन्दर्य्ये तज्जङ्घे इति भावः। आसेति बभूवार्थे तिङन्तप्रतिरूपकमव्ययमित्याह शाकटायनः। वल्लभस्तु न तिङन्तप्रतिरूपकमव्ययम् अस्तेर्भूरिति स्थादेशनियमात्ताहृक्तिङन्तस्यैवाभावात्(२)। किन्तु कवीनामयं प्रामादिकः प्रयोग इत्याह। वामनस्तु अस गतिदीप्त्यादानेष्विति धातो-

(१) पा० ७।२।५३ सू०। (२) पा० २।४।५२ सू०।

नागेन्द्रहस्तास्त्वचि कर्कशत्वा-
देकान्तशैत्यात्कदलीविशेषाः।
लब्ध्वापि लोके परिणाहि रूपं
जातास्तदूर्वोरुपमानवाह्याः॥ ३६ ॥
एतावता नन्वनुमेयशोभि
काञ्चीगुणस्थानमनिन्दितायाः।

लिंटि रूपमिदमित्याह। असेत्यनुदात्तेत् दीप्त्यर्थे आस दिदीपे प्रवृत्त इत्यर्थः॥ ३५ ॥

नागेति। नागेन्द्राणामैरावतादीनां हस्ताः कराः (नागेन्द्र-हस्ताः त्वचि) चर्म्मणि (कर्कशत्वात् (कदलीविशेषाः) रामरम्भादयः (एकान्तशैत्यात्) नियतशैत्याद्धेतोः (लोके) (परिणाहि) वैपुल्य-युक्तम्। परिणाहो विशालतेत्यमरः। (रूपं लब्ध्वापि) अपिशब्दा-त्करिकदलीमात्रस्य तादृक् परिणाहो नास्तीति भावः। तस्या ऊर्व्वोः (तदूर्व्वोः) (उपमानवाह्या जाताः) उपमानक्रियानर्हा बभूवुः। तदूर्व्वोर्न कार्कश्यं नाप्येकान्तशैत्यमिति भावः॥३६॥

एतावतेति। (अनिन्दितायाः) अनवद्यायाः पार्व्वत्याः (काञ्ची-गुणस्थानं) नितम्बविम्बम् (एतावता ननु) एतावतैव। प्रश्नाव-धारणानुज्ञाविनयामन्त्रणे नन्वित्यमरः। शोभत इति शोभि। आवश्यके णिनिः ततस्त्वप्रत्ययः। अनुमेयं शोभित्वं शोभा यस्य तत् (अनुमेयशोभि) त्वप्रत्ययस्तु गतार्थत्वान्नप्रयुक्तइत्याह वामनः। (पश्चात्) आदौ नैःस्पृह्येऽपि पश्चात्तपश्चर्य्यानन्तरमित्यर्थः। गिरौ शेतइति गिरिशः शिवः। गिरौ डश्छन्दसीति डप्रत्ययः (१)।

---

(१) पा० ३।२।१५ सू०।

आरोपितं यद्गिरिशेन पश्चा-
दनन्यनारीकमनीयमङ्कम् ॥ ३७ ॥
तस्याः प्रविष्टा नतनाभिरन्ध्रं
रराज तन्वी नवलोमराजिः ।

भाषायामपि क्वचिदिष्यते । अथवा गिरिः कैलासोऽस्यास्ति गिरिशः । लोमादित्वात् शप्रत्ययः । तेन (गिरिशेन) (अनन्यनारीकमनीयम्) अन्यासां नारीणां कमनीयः कामयितुं शक्यो न भवतीत्यनन्यनारीकमनीयः तम् (अङ्कं) निजोत्सङ्गं (आरोपितं) अधिरोपितमिति (यत्) एतावता लिङ्गेनेति पूर्व्वेणान्वयः । रोहतेर्ण्यन्तात्कर्म्मणि क्तः । रुहः पोऽन्यतरस्यामिति हकारस्य पकारः । गत्यर्थविवक्षायां द्विकर्म्मकत्वम् (१) । प्रधाने कर्म्मणि क्तः । गिरिजानितम्बबिम्बं विश्वातिशायिसौन्दर्य्यं गिरिशाङ्कारूढत्वात् व्यतिरेकेण नार्य्यन्तरनितम्बबिम्बवत् । विपक्षे हेत्वनुक्तिरेव बाधिका। दाक्षायणीनितम्बबिम्बस्य तु पक्षसपक्षयोरन्यतरभावानतिरक्तेर्निष्कलङ्कमनुमानमित्यलमस्थानसंरम्भेण ॥ ३७ ॥

तस्या इति । (नीवीं) वस्त्रग्रन्थिम् । स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि चेत्यमरः । (अतिक्रम्य) अतीत्य (नतनाभिरन्ध्रं) नतं निम्नं नाभिरन्ध्रं (प्रविष्टा) प्रविशन्ती (तन्वी) सूक्ष्मा (तस्याः) पार्व्वत्याः (नवलोमराजिः) (सितेतरस्य) असितस्य इन्द्रनीलस्येत्यर्थः । (तन्मेखलामध्यमणेः) तस्याः पार्व्वत्याः मेखला तन्मेखला । तस्या इत्यनुवृत्तौ पुनस्तच्छब्दोपादानं वाक्यान्तरत्वात्सोढ़व्यम् यद्वा तस्याः नीव्याः मेखला तन्मेखला तत्र तदवस्थानात् । तस्याः

(१) पा० ७ । ३ । ४३ सू० ।

नीवीमतिक्रम्य सितेतरस्य
तन्मेखलामध्यमणेरिवार्च्चिः ॥ ३८ ॥

मध्येन सा वेदिविलग्नमध्या
बलित्रयं चारु बभार बाला।
आरोहणार्थं नवयौवनेन
कामस्य सोपानमिव प्रयुक्तम् ॥ ३९ ॥

अन्योन्यमुत्पीड़यदुत्पलाक्ष्याः
स्तनद्वयं पाण्डु तथा प्रवृद्धम्।

मध्यमणेः ( अर्च्चिः ) प्रभा ( इव ) ( रराज ) ज्वालभासोर्नपुंस्यर्च्चिरित्यमरः ॥ ३८ ॥

मध्येनेति। वेदिः परिष्कृता भूमिरित्यमरः। (वेदिविलग्नमध्या) वेदिवत्कृशमध्या तनुमध्येति यावत्। (सा बाला) पार्व्वती (मध्येन) मध्यभागेन (चारु) सुन्दरं (बलित्रयं) (कामस्यारोहणार्थं) (नवयौवनेन) (प्रयुक्तं) रचितं (सोपानमिव) (बभार) इत्युत्प्रेक्षा॥३९॥

अन्योन्यमिति। (अन्योन्यं) परस्परं। कर्म्मव्यतिहारे सर्व्वनाम्नो द्वे वाच्ये इति द्विरुक्तिः(१)। समासवच्च बहुलमिति बहुलवचनादसमासपक्षेऽपि पूर्व्वपदस्थस्य सुपः सुर्वक्तव्य इति तत्रत्यवार्त्तिकम्। (उत्पीडयत्) उपरुन्धत् (पाण्डु) गौरं (उत्पलाक्ष्याः) (स्तनद्वयं) (तथा) तेन प्रकारेण (प्रसिद्धम्) कर्त्तरि क्तः। (श्याममुखस्य) कृष्णचुचुकस्येति स्वरूपवर्णनं (तस्य) स्तनद्वयस्य(मध्ये) (यथा) येन प्रकारेण (मृणालसूत्रान्तरं) विसतन्तुमात्रावकाशः) (अपि)

(१) पा० वा ८। १। १२ सू०।

मध्ये यथा श्याममुखस्य तस्य
मृणालसूत्रान्तरमप्यलभ्यम् ॥ ४० ॥
शिरीषपुष्पाधिकसौकुमार्य्यौ
बाहू तदीयाविति मे वितर्कः।
पराजितेनापि कृतौ हरस्य
यौ कण्ठपाशौ मकरध्वजेन ॥ ४१ ॥
कण्ठस्य तस्याः स्तनबन्धुरस्य
मुक्ताकलापस्य च निस्तलस्य।

अलभ्यं) लब्धुमशक्यम्। अन्तरमवकाशावधिपरिधानान्तर्धिभेदता-दर्थ्ये इत्यमरः। अत्र सम्बन्धे असम्बन्धरूपातिशयोक्त्यलङ्कारः कुचयोः पीवरत्वातिशयार्थम् अवकाशसम्बन्धेप्यसम्बन्धाभिधाना-दिति ॥ ४० ॥

लोके सुकुमारत्वमेव कुसुमास्त्रस्य साधकत्वमिति स्थिते सत्याह

शिरीषेति। तस्या इमौ (तदीयौ बाहू) (शिरीषपुष्पाधिक-सौकुमार्य्यौ) शिरीषपुष्पादधिकं सौकुमार्य्यं मार्द्दवं ययोस्तयोक्तौ (इति मे वितर्कः) ऊहः कुतः (यौ) बाहू (पराजितेनापि) पूर्व्वं निर्ज्जितेनापि (मकरध्वजेन) कामेन (हरस्य कण्ठपाशौ) कण्ठब-न्धनरज्जू (कृतौ) कण्ठालिङ्गनं प्रापिताविल्यर्थः। तदसाध्यसाध-नात्तत आधिक्यमिति भावः। अत्र बाह्वोरारोपितकण्ठपाशत्वस्य प्रकृतवैरनिर्यातनोपयोगात्परिणामालङ्कारः ॥ ४१ ॥

कण्ठस्येति। (स्तनबन्धुरस्य) स्तनाभ्यां बन्धुरस्योन्नतस्य (तस्याः) पार्व्वत्याः (कण्ठस्य) गलस्य (निस्तलस्य) वर्तुलस्य (मुक्ताकलापस्य) मुक्ताभूषणस्य (च)। वर्तुलं निस्तलं वृत्तं बन्धुरन्तून्नतानतम्।

अन्योन्यशोभाजननाद्बभूव
साधारणो भूषणभूष्यभावः ॥ ४२ ॥
चन्द्रं गता पद्मगुणान्न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखन्तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥ ४३ ॥

कलापो भूषणे वर्हे तूणीरे संहतावपीति चामरः । (अन्योन्यशोभाजननात्) (भूषणभूष्यभावः) अलङ्कारालङ्कार्य्यभावः (साधारणः) समानः (बभूव) उभावप्यन्योन्यस्य भूष्यौ भूषणौ च बभूवतुरित्यर्थः । अत्र कण्ठमुक्ताकलापयोः शोभाक्रयाद्वारेणान्योन्यभूषाजनकत्वादन्योन्यालङ्कारः । तदुक्तं । परस्परं क्रियाजननमन्योन्यमिति ॥ ४२ ॥

इदानीं पार्व्वतीवदनं चन्द्रकमलसदृशमित्येतदेव वचोभङ्ग्याह ।

चन्द्रमिति । (लोला) चपला परिभ्रमणशीलेत्यर्थः । (लक्ष्मीः) कान्त्यभिमानिनी देवता (चन्द्रं गता) प्राप्ता सती (पद्मगुणान्) सौगन्ध्यादीन् (न भुङ्क्ते) नानुभवति । (पद्माश्रिता) सती चन्द्रमस इमां (चान्द्रमसीम्) (अभिख्यां) शोभाम् । अभिख्या नामशोभयोरित्यमरः । अह्नतवदानन्दिनीं न भुङ्क्ते । (उमामुखं) (प्रतिपद्य) (तु) द्वे चन्द्रपद्मे संश्रयः कारणं यस्यास्तां (द्विसंश्रयां) (प्रीतिं) आनन्दम् (अवाप) तल्लोभयगुणसम्भवादिति भावः । अत्रोपमानभूतचन्द्रपद्मापेक्षया उपमेयस्योमामुखस्य अधिकगुणवत्त्वोक्त्या व्यतिरेकालङ्कारः । तदुक्तम् भेदप्राधान्येनोपमानादुपमेयस्याधिक्ये विपर्य्यये वा व्यतिरेक इति ॥ ४३ ॥

पुष्पं प्रवालोपहितं यदि स्यात्
मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्य्याद्विशदस्य तस्या-
स्ताम्रौष्ठपर्य्यस्तरुचः स्मितस्य ॥ ४४ ॥
स्वरेण तस्याममृतस्रुतेव
प्रजल्पितायामभिजातवाचि ।

पुष्पमिति । (पुष्पं) पुण्डरीकादिकं (प्रवालोपहितं) प्रवाले बालपल्लवे उपहितं निहितं (स्याद्यदि) प्रवालो वल्लकीदण्डे विद्रुमे बालपल्लव इति विश्वः । (मुक्ताफलं वा) स्फटे निर्म्मले विद्रुमे तिष्ठतीति (स्फुटविद्रुमस्थं) स्याद्यदि (ततः) तर्हि (विशदस्य) शुभ्रस्य (ताम्रोष्ठपर्यस्तरुचः) ताम्रे अरुणे ओष्ठे पर्यस्ता प्रसृता रुक् कान्तिर्यस्य तथोक्तस्य (तस्याः) पार्व्वत्याः (स्मितस्यानुकुर्य्यात्) स्मितमनुकुर्य्यादित्यर्थः । अत्र माषाणां अश्नीयात् इतिवत्सम्बन्धमात्रविवक्षया षष्ठी । अत्र पुष्पप्रवालयोर्मुक्ताविद्रुमयोश्च असम्बन्धेऽपि सम्बन्धोक्तया अतिशयोक्तिः । सा च सम्भावनेत्यलङ्कारसर्व्वस्वकारः । विशेषतस्तु पुष्पमुक्ताफलयोरुपमानयोः प्रकृतोत्कर्षार्थमुपमेयताकल्पनात्प्रतीपालङ्कारः तदुक्तम् उपमानस्याक्षेप उपमेयताकल्पनं वा प्रतीप इति लक्षणात् । स च पूर्व्वोक्तातिशयोक्त्यनुप्राणित इति ॥ ४४ ॥

स्वरेणेति । (अभिजातवाचि) मधुरभाषिण्यां (तस्यां) पार्व्वत्याम् (अमृतस्रुता) अमृतस्राविणा (इव) क्विप् । (स्वरेण) नादेन (प्रजल्पितायाम्) आलपन्त्याम् । कर्त्तरि क्तः । अन्यैः काकादिभिः पुष्टा (अन्यपुष्टा) कोकिला (अपि) मुख्यया वृत्त्या जातिवचनत्वाभावात् ङीबभावः । (ताड्यमाना) वाद्यमाना विषमबद्धा तन्त्रीः (वितन्त्रीरिव) अवितॄस्तृतन्त्रिभ्य ईरिति तन्त्रिधातोरौणादिक ई-

अप्यन्यपुष्टा प्रतिकूलशब्दा
श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥ ४५ ॥
प्रवातनीलोत्पलनिर्व्विशेष-
मधीरविप्रेक्षितमायताक्ष्या।
तया गृहीतं नु मृगाङ्गनाभ्य-
स्ततो गृहीतं नु मृगाङ्गनाभिः ॥ ४६ ॥
तस्याः शलाकाञ्जननिर्म्मितेव
कान्तिर्भ्रुवोरायतलेखयोर्या।

प्रत्ययः। ङीबभावान्न हल्ङ्याब्भ्य इति सुलोपः (१)। तदुक्तम्। अवीलक्ष्मीतरीतन्त्रीह्रीधीश्रीणामुणादितः। स्त्रीलिङ्गानाममीषान्तु न सुलोपः कदाचन इति। एते ङीबन्ता न भवन्तीत्यर्थः। (श्रोतुः) जनस्य (प्रतिकूलशब्दा) कर्णकठोरनादा भवतीति शेषः ॥ ४५ ॥

प्रवातेति। (प्रवातनीलोत्पलनिर्विशेषं) प्रवाते प्रभूतवातस्थले यन्नीलोत्पलं ततो निर्विशेषं निर्भेदं तत्सदृशमित्यर्थः। (अधीरविप्रेक्षितं) चकितविलोकितम् (आयताक्ष्या) विशालनेत्रया (तया) पार्व्वत्या (मृगाङ्गनाभ्यः) हरिणीभ्यः (गृहीतम्) अभ्यस्तं (नु) अथवा (मृगाङ्गनाभिः) (ततः) तस्याः पार्व्वत्याः। पञ्चम्यास्तसिल्। (गृहीतं नु) अत्र विवक्षितस्य परस्परग्रहणस्योत्प्रेक्षणादुत्प्रेक्षेति केचित्। तदुपजीविसन्देहालङ्कार इत्यन्ये उभयोः सङ्कर इत्यपरे ॥ ४६ ॥

तस्या इति। (आयतलेखयोः) दीर्घरेखयोः (तस्याः) पार्व्वत्याः (भ्रुवोः) सम्बन्धिनी (शलाकाञ्जननिर्म्मितेव) शलाकया अञ्जनेन

---

(१) पा० ६। १। ६८ सू०।

तां वीक्ष्य लीलाचतुरामनङ्गः
स्वचापसौन्दर्य्यमदं मुमोच ॥ ४७ ॥
लज्जा तिरश्चां यदि चेतसि स्या-
दसंशयं पर्व्वतराजपुत्र्याः।
तं केशपाशं प्रसमीक्ष्य कुर्य्यु-
र्वालप्रियत्वं शिथिलं चमर्य्यः ॥ ४८ ॥

निर्म्मितेव स्थिता (या) (कान्तिः) (लीलाचतुरां) विलाससुभगां (तां) कान्तिं (वीक्ष्य) (अनङ्गः) स्वचापसौन्दर्य्यमदं) स्वचापसौन्दर्य्येण यो मदस्तं (मुमोच) इति सौन्दर्य्यातिशयोक्तिः ॥ ४७ ॥

लज्जेति। (तिरश्चां) तिर्य्यग्जातीनां (चेतसि) (लज्जा स्याद्यदि) संशयाभावः (असंशयं) सन्देहो नास्तीत्यर्थः। पर्व्वतराजपुत्र्याः) शार्ङ्गरवाद्यञो ङीन् इति ङीन् (१)। (तं) प्रसिद्धं (केशपाशं) केशकलापम्। पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे इत्यमरः (प्रसमीक्ष्य) दृष्ट्वा (चमर्य्यः) मृगीविशेषाः बालाः प्रिया यासां इतिविग्रहे बालप्रियास्तासां भावः (बालप्रियत्वं) प्रियबालत्वमित्यर्थः। आहिताग्न्यादिपाठात् वा परनिपातः। त्वतलोर्गुणवचनस्येति पुंवद्भावः (२)। ( शिथिलं ) ( कुर्य्युः ) निर्लज्जत्वान्न शिथिलयन्तीत्यर्थः। अतएवात्र निर्लज्जत्वकरणहेतोराद्यपादे वाक्यार्थत्वेनोक्त्या काव्यलिङ्गाख्यालङ्कारः। तदुक्तम्। हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतमिति ॥ ४८ ॥

---

(१) पा० ४। १। ७३ सू०।

(२) पा० वा ६। ३। ३५ सू०।

सर्व्वोपमाद्रव्यसमुच्चयेन
यथाप्रदेशं विनिवेशितेन ।
सा निर्म्मिता विश्वसृजा प्रयत्ना-
देकस्थसौन्दर्य्यदिदृक्षयेव ॥ ४९ ॥

तां नारदः कामचरः कदाचित्
कन्यां किल प्रेक्ष्य पितुः समीपे ।
समादिदेशैकवधूं भवित्रीं
प्रेम्णा शरीरार्द्धहरां हरस्य ॥ ५० ॥

सर्व्वेति । किम्बहुना (सा) पार्व्वती (विश्वसृजा) विधात्रा (एकस्थसौन्दर्य्यदिदृक्षयेव) एकत्र तिष्ठतीत्येकस्थं तस्य सौन्दर्य्यस्य सर्व्ववस्तुगतस्येत्यर्थः दिदृक्षयेव (प्रयत्नात्) (यथाप्रदेशं) क्रमात् (विनिवेशितेन) स्थापितेन (सर्व्वोपमाद्रव्यसमुच्चयेन) सर्व्वेषामुपमाद्रव्याणां चन्द्रारविन्दाद्युपमावस्तूनां समुच्चयेन समाहारेण (निर्म्मिता) दिदृक्षयेवेति फलोत्प्रेक्षा दर्शनार्थित्वाद्विश्वसृज इति ॥ ४९

तामिति । कामेनेच्छया चरतीति (कामचरः) (नारदः) (कदाचित्) (पितुः) हिमवतः (समीपे) (कन्यां तां) पार्व्वतीं (प्रेक्ष्य) (किल) (प्रेम्णा) नत्वन्यथा (हरस्य) शिवस्य अर्द्धं हरतीत्यर्द्धहरा । हरतेरनुद्यमने इत्यच् प्रत्ययः (१) । शरीरस्यार्द्धहरां (शरीरार्द्धहराम्) कुलधुरन्धरादिवदवयवद्वारा समुदायविशेषकत्वात् समासः अन्यथा त्वर्द्धशां समप्रविभागवचनत्वादर्द्धशरीरेति स्यात् । (एकवधूं) असपत्नीकाम्भार्य्याम् । पूर्व्वकालेत्यादिना

(१) पा० ३ । २ । ९ सू० ।

गुरुः प्रगल्भेऽपि वयस्यतोऽस्या-
स्तस्थौ निवृत्तान्यवराभिलाषः ।
ऋते कृशानोर्न हि मन्त्रपूत-
मर्हन्ति तेजांस्यपराणि हव्यम् ॥ ५१ ॥
अयाचितारं नहि देवदेव-
मद्रिः सुतां ग्राहयितुं शशाक ।

समासः । (भवित्रीं) भाविनीं (समादिदेश) हरस्याऽर्धाङ्गहारिण्येकपत्नी भविष्यतीत्यादिष्टवानित्यर्थः ॥ ५० ॥

गुरुरिति । (गुरुः) पिता गुरु गीष्पतिपित्राद्याविल्यमरः । (अतः) नारदवचनाद्धेतोः (अस्याः) पार्व्वत्याः (प्रगल्भे) (वयसि) यौवने सति (अपि) (निवृत्तान्यवराभिलाषः) निवृत्तोऽन्यस्मिन्वरे जामातर्य्यभिलाषो यस्य सः तथोक्तः सन् । वरो ना रूपजामात्रोरिति वैजयन्ती । तस्थौ) वरान्तरं नान्विष्टवानित्यर्थः । ननु कुतोऽसौ निर्बन्ध इत्यत आह ऋत इति । (हि) तथाहि (मन्त्रपूतं) मन्त्रैः पूतं संस्कृतं हूयत इति (हव्यं) आज्यादिकं (कृशानोः) पावकात् (ऋते) कृशानुं विना । अन्यारादितरर्त्तेत्यादिना (१) पञ्चमी (अपराणि तेजांसि) सुवर्णादीनि (नार्हन्ति) न भजन्तीत्यर्थः ईश्वरादन्यस्य तद्योग्यस्याभावादुपेक्षेति भावः ॥ ५१ ॥

तर्हि तमेवाहूयत दीयतामित्याशङ्क्याह

अयाचितारमिति । (अद्रिः) हिमवान् (अयाचितारम्) अयाचमानं (देवदेवं) महादेवं (सुतां) पार्व्वतीं (ग्राहयितुं) स्वयमाहूय परिग्राहयितुं (न शशाक) नोत्सेहे । (हि) तथाहि । (साधुः) सज्जनः

---

(१) पा० २ । ३ । २९ सू० ।

अभ्यर्थनाभङ्गभयेन साधु-
र्माध्यस्थमिष्टेऽप्यवलम्बतेऽर्थे ॥ ५२ ॥
यदैव पूर्व्वे जनने शरीरं
सा दक्षरोषात् सुदती ससर्ज्ज।
तदा प्रभृत्येव विमुक्तसङ्गः
पतिः पशूनामपरिग्रहोऽभूत् ॥ ५३ ॥

साधुर्वार्द्धुषिके चारौ सज्जने चाभिधेयवदिति विश्वः । (अभ्यर्थनाभङ्गभयेन) याच्ञावैफल्यभीत्या (इष्टेऽप्यर्थे) विषये (माध्यस्थं) औदासीन्यं (अवलम्बते) ॥ ५२ ॥

नच तथैव स्थितः किन्तु उपायान्तरं चिन्तितवानिति वक्तुं प्रस्तौति ।

यदेति । शोभना दन्ता यस्याः सा (सुदती) वयसि दन्तस्य दतृ इति दत्रादेशः(१) । उगितश्च इति ङीप्(२) (सा) पार्व्वती (पूर्व्वे जनने) पूर्व्वस्मिन् जन्मनि । पूर्व्वादिभ्यो नवभ्यो वेति स्मिन्नादेशविकल्पः(३) । पूर्व्वं ज्वलनइति पाठे पूर्व्वं दाक्षायणीत्वे ज्वलने योगाग्नौ । (यदा) यस्मिन् काले (एव) (दक्षरोषाच्छरीरं) देहं (ससर्ज) तत्याज । (तदाप्रभृत्येव) तदाद्येव यथा तथा (पशूनां पतिः ) शिवः (विमुक्तसङ्गः) त्यक्तविषयासङ्गः सन् ( अपरिग्रहः ) अपत्नीकः (अभूत्) स्त्र्यन्तरं न परिजग्राहेत्यर्थः । पत्नीपरिजनादानमूलशापाः परिग्राहा इत्यमरः ॥ ५३ ॥

---

(१) पा० ५ । ४ । १४१ सू०
(२( पा० ४ । १ । ६ सू०
(३) पा० ७ । १ । १६ सू०

स कृत्तिवासास्तपसे यतात्मा
गङ्गाप्रवाहोक्षितदेवदारु।
प्रस्थं हिमाद्रेर्मृगनाभिगन्धि
किञ्चित् क्वणत्किन्नरमध्युवास ॥ ५४ ॥

गणा नमेरुप्रसवावतंसा-
भूर्जत्वचः स्पर्शवतीर्दधानाः।

स इति। (कृत्तिवासाः) चर्म्माम्बरः। अजिनं चर्म्म कृत्तिः स्त्रीत्यमरः। (यतात्मा) नियतचित्तः (सः) पशुपतिः (तपसे) तपोऽर्थं (गङ्गाप्रवाहोक्षितदेवदारु) गङ्गाप्रवाहैरुक्षिताः सिक्ताः देवदारवो यस्मिन् तत्तथोक्तम्। (मृगनाभिगन्धि) कस्तूरीगन्धवत् कस्तूरीमृगसञ्चारादिति भावः। मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकमित्यमरः। (क्वणत्किन्नरं) क्वणन्तो गायन्तः किन्नरा यस्मिन् तत्तथोक्तम्। (किञ्चित्) किमपि (हिमाद्रेः प्रस्थं) सानुम् (अध्युवास) कुत्रचित्प्रस्थे उवासेत्यर्थः। उपान्वध्याङ्वस इति आधारस्य कर्म्मत्वम् (१)। प्रस्थोऽस्त्री सानुमानयोरित्यमरः॥ ५४॥

गणा इति। (गणाः) प्रमथगणाः। गणा प्रमथसंख्यौघा- इति वैजयन्ती। (नमेरुप्रसवावतंसाः) सुरपुन्नागकुसुमशेखराः। नमेरुः सुरपुन्नागः इति विश्वः। (स्पर्शवतीः) सुखस्पर्शा मृद्वीरित्यर्थः। प्रशंसायां मतुप्। (भूर्जत्वचः) भूर्जवल्कलानि (दधानाः) वसाना इत्यर्थः। (मनःशिलाविच्छुरिताः) मनःशिलाभिधातुविशेषैर्विच्छुरिताः अनुलिप्ताश्च सन्तः। (शैलेयनद्धेषु) शिलायां

(१) पा० १। ४। ४८ सू०

मनःशिलाविच्छुरिता निषेदुः
शैलेयनद्धेषु शिलातलेषु ॥ ५५ ।
तुषारसङ्घातशिलाः खुराग्रैः
समुल्लिखन् दर्पकलः ककुद्मान् ।
दृष्टः कथञ्चिद्गवयैर्विविग्नै-
रसोढ़सिंहध्वनिरुन्ननाद ॥ ५६ ॥
तत्राग्निमाधाय समित्समिद्धं
स्वमेव मूर्त्त्यन्तरमष्टमूर्त्तिः ।

भवं शैलेयं गन्धौषधिविशेषः । शिलायाः स्त्रीभ्योढक् इति भवार्थे ढक्(१) । शिला जतु च शैलेयमिति यादवः । तेन नद्धेषु व्याप्तेषु (शिलातलेषु) (निषेदुः) उपविविशुरित्यर्थः ॥ ५५ ॥

तुषारेति । (तुषारसङ्घातशिलाः) तुषारसङ्घाताः हिमघनाः तएव शिलाः ताः (खुराग्रैः) समुल्लिखन्) विदारयन् दर्पेण कलो मधुरध्वनिर्यस्य सः (दर्पकलः) (विविग्नैः) भीतैः (गवयैः) गोसदृशमृगविशेषैः ( कथञ्चित् ) कृच्छ्रेण (दृष्टः) ककुदमस्यास्तीति (ककुद्मान्) वृषभः ( असोढ़सिंहध्वनिः ) असोढ़ः सिंहानां ध्वनिर्येन सः सिंहध्वनिमसहमानः सन् (उन्ननाद) उच्चैर्ननाद जगर्ज्जेत्यर्थः । स्वभावोक्तिरलङ्कारः । तदुक्तम् । स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनमिति ॥ ५६ ॥

तत्रेति ( (तपसः) (फलानां) इन्द्रत्वादीनां (स्वयं विधाता) जनयिता दातेत्यर्थः । अष्टौ मूर्त्तयो यस्य सः (अष्टमूर्त्तिः) ईश्वरः

(१) पा० ४ । १ । १२० सू०

स्वयं विधाता तपसः फलानां
केनापि कामेन तपश्चचार ॥ ५७ ॥
अनर्घ्यमर्घ्येण तमद्रिनाथः
स्वर्गौकसामर्चितमर्चयित्वा।
आराधनायास्य सखीसमेतां
समादिदेश प्रयतां तनूजाम् ॥ ५८ ॥

भूतार्कचन्द्रयज्वानो मूर्त्तयोऽष्टौ प्रकीर्त्तिता इति। (तत्र) प्रस्थे (स्वं) स्वकीयं (एव) (मूर्त्त्यन्तरं) मूर्त्तिभेदम् (समित्समिद्धं) समिद्भिः समिद्धं दीपितम् (अग्निमाधाय) प्रतिष्ठाप्य (केनापि कामेन) कयापि फलकामनया (तपश्चचार) चक्रे। प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तत इति न्यायात्कामेनेत्युक्तम्। तस्यावाप्तसमस्त-कामत्वात्केनापीत्युक्तम् ॥ ५७ ॥

अनर्घ्यमिति। अद्रीणां नाथः (अद्रिनाथः) हिमवान् अर्घंं मूल्यमर्हतीत्यर्घ्यः। मूल्ये पूजाविधावर्घः इत्यमरः। दण्डादिभ्यो यः इति यप्रत्ययः(१)। अर्घ्यो न भवतीत्यनर्घः तं (अनर्घ्यम्) अमूल्य-मित्यर्थः। स्वर्गः ओकः स्थानं येषां तेषां स्वर्गौकसां) देवानाम् (अर्चितं) देवैः पूज्यमानमित्यर्थः। मतिबुद्धिपूजार्थेभ्यश्च इति वर्त्त-माने क्तः(२)। क्तस्य च वर्त्तमाने इति षष्ठी (३) (तं) ईश्वरम् (अर्घ्येण) पूजार्थोदकेन। पादार्घाभ्याञ्चेति यत्प्रत्ययः(४)। षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणीत्यमरः। (अर्चयित्वा) पूज-यित्वा (अस्य) ईश्वरस्य (आराधनाय) (सखीसमेतां) सखीभ्यां

(१) पा० ५।१।६६ सू०। (२) पा०।३।२।१८८ सू०।
(३) पा० २।३।६७ सू०। (४) पा० ५।४।२५ सू०।

प्रत्यर्थिभूतामपि तां समाधेः
शुश्रूषमाणां गिरिशोऽनुमेने।
विकारहेतौ सति विक्रियन्ते
येषां न चेतांसि त एव धीराः ॥ ५९ ॥

अवचितबलिपुष्पा वेदिसम्मार्गदक्षा
नियमविधिजलानां बर्हिषाञ्चोपनेत्री।

जयाविजयाभ्यां समेतां (प्रयतां) नियतां (तनूजां) सुतां (समादिदेश) आज्ञापयामास ॥ ५८ ॥

प्रत्यर्थीति। (गिरिशः) शिवः (समाधेः) (प्रत्यर्थिभूतां) प्रतिपक्षभूताम् (अपि) सुप्सुपेति समासः। श्रोतुमिच्छन्तीं (शुश्रूषमाणां) सेवमानां। सेवका हि सेव्ये दत्तकर्णा भवन्ति। इच्छार्थे सन्प्रत्ययः। ज्ञाश्रुस्मृदृशां सनः इत्यात्मनेपदम्(१) (तां) पार्व्वतीम् (अनुमेने) अङ्गीचकार न प्रतिषिद्धवानित्यभिप्रायः। नचैतावता धीरस्य कश्चिद्विकार इत्याशयः। धीरत्वमेवार्थान्तरन्यासेनाह विकारेति। (विकारहेतौ) विकारस्य प्रकृतेरन्यथात्वस्य हेतौ स्त्रीसन्निधानादिकारणे (सति) विद्यमानेऽपि (येषां) (चेतांसि) (न विक्रियन्ते) न विकृतिं नीयन्ते (तएव धीराः) विक्रियन्ते इति कर्म्मणि लट् ॥ ५९ ॥

शुश्रूषाप्रकारमेवाह

अवचितेति। (सुकेशी) शोभनमूर्द्धजा। स्वाङ्गाच्चोपसर्ज्जनादसंयोगोपधादिति ङीप् (२) (सा) पार्व्वती (अवचितबलिपुष्पा) अवचितानि लूनानि बलिपुष्पाणि पूजाकुसुमानि यया सा (वेदि-

(१) पा० १।३।५७ सू०। (२) पा० ४।१।५४ सू०।

गिरिशमुपचचार प्रत्यहं सा सुकेशी
नियमितपरिखेदा तच्छिरश्चन्द्रपादैः ॥६०॥

इति श्रीकालिदासकृतौ कुमारसम्भवे
महाकाव्ये उमोत्पत्तिर्नाम
प्रथमः सर्गः ॥

सम्मार्गदक्षा) वेदेर्नियमवेदिकायाः सम्मार्गे सम्मार्ज्जने दक्षा (नियमविधिजलानां) नियमविधेर्नित्यकर्म्मानुष्ठानस्य यानि जलानि तेषां (वर्हिषां) कुशानां (च) (उपनेत्री) आनेत्री सती (तच्छिरश्चन्द्रपादैः) तस्य गिरिशस्य शिरसि चन्द्रस्य पादैः रश्मिभिः। पादा रश्म्यङ्घ्रितुर्य्यांशा इत्यमरः। (नियमितपरिखेदा) निवर्त्तितपरिश्रमा सती अहन्यहनि ( प्रत्यहम् ) अव्ययं विभक्तिसमीपसमृद्धीत्यादिना नियतार्थेऽव्ययीभावः (१) । नपुंसकादन्यतरस्यामिति अच्प्रत्ययः (२) गिरिशमुपचचार) शुश्रूषाञ्चक्रे ॥ ६० ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां
प्रथमः सर्गः ।

---

(१) पा० २ । १ । ६ सू० । (२) पा० ५ । ४ । १०९ सू० ।

# द्वितीयः सर्गः ।

तस्मिन् विप्रकृताः काले तारकेण दिवौकसः ।
तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुः ॥१॥
तेषामाविरभूद्ब्रह्मा परिम्लानमुखश्रियाम् ।

तस्मिन्निति । (तस्मिन्) (काले) पार्व्वतीशुश्रूषाकाले (तारकेण) तारकनाम्ना वज्रणखपुत्त्रेण केनचिदसुरेण (विप्रकृताः) उपप्लुताः दिवमोकः स्थानं येषां ते (दिवौकसः) देवाः । दिवं स्वर्गेऽन्तरीक्षे चेति विश्वः । द्यौः ओक इति पक्षे पृषोदरादित्वात्साधुः । त्वरितं साहयत्यभिभवतीति तुराषाट् । साहयतेश्चौरादिकात् क्विप् । नहिवृतिवृषि इत्यादिना पूर्व्वपदस्य दीर्घः (१) प्रकृतिग्रहणे प्रातिपदिकस्यापि ग्रहणात् । मुग्धबोधकारस्तु तुराशब्दष्टाबन्त इत्याचष्टे । तं (तुरासाहं) देवेन्द्रम् । अजादिषु साडरूपत्वाभावात् सहेः साडः सः इति षत्वं न भवति(२) । (पुरोधाय) पुरस्कृत्य स्वयम्भुवो ब्रह्मण इदं (स्वायम्भुवम्) संज्ञापूर्व्वकत्वेन विधेरनित्यत्वात् ओर्गुणः इति गुणो न (३) । (धाम) स्थानं (ययुः) ब्रह्मलोकं जग्मुरित्यर्थः ॥ १ ॥

---

(१) पा० ६ । ३ । ११६ सू० ।
(२) पा० ८ । ३ । ५६ सू० ।
(३) पा० ६ । ४ । १४६ सू० ।

सरसां सुप्तपद्मानां प्रातर्दीधितिमानिव ॥२॥
अथ सर्व्वस्य धातारं ते सर्व्वे सर्व्वतोमुखम् ।
वागीशं वाग्भिरर्थ्याभिः प्रणिपत्योपतस्थिरे ॥३॥
नमस्त्रिमूर्त्तये तुभ्यं प्राक् सृष्टेः केवलात्मने ।

तेषामिति । परिम्लानमुखश्रियां) परिम्लाना परिक्षीणा मुखश्रीर्मुखकान्तिर्येषां तथोक्तानां (तेषां) देवानां (ब्रह्मा) (सुप्तपद्मानां) मुकुलितारविन्दानां (सरसां) (प्रातर्दीधितिमान्) सूर्य्यः (इव) (आविरभूत्) प्रकाशोऽभूदित्यर्थः प्रकाशे प्रादुराविः स्यादित्यमरः । सूर्य्योपमानेन तेषां ग्लानिहरणत्वं सूचितं । अत्रोपमालङ्कारः । तल्लक्षणन्तु । स्वतःसिद्धेन भिन्नेन सम्मतेन च धर्म्मतः । साम्यमन्येन वर्ण्यस्य वाच्यश्चैकपदोपमेति ॥ २ ॥

अथेति । (अथ) आविर्भावानन्तरं (सर्व्वे ते) देवाः सर्व्वतः समन्ततो मुखानि यस्य तं (सर्व्वतोमुखं) चतुर्मुखमित्यर्थः । (वागीशं) वाचां विद्यानामीशं (सर्व्वस्य) जगतः (धातारं) स्रष्टारं ब्रह्माणं (प्रणिपत्य) नमस्कृत्य अर्थादनपेताभिः (अर्थ्याभिः) अर्थयुक्ताभिरित्यर्थः धर्म्मपत्यर्थन्यायादनपेते इति यत्प्रत्ययः (१) । (वाग्भिः) (उपतस्थिरे) तुष्टुवुरित्यर्थः । उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वक्तव्यमित्यात्मनेपदम् (२) ॥ ३ ॥

स्तुतिप्रकारमाह नम इत्यादिभिर्द्वादशभिः श्लोकैः

नम इति । हे भगवन्नित्यध्याहार्य्य व्याख्येयम् । (सृष्टेः प्राक्)

---

(१) पा० ४ । ४ । ९२ सू० ।

(२) पा० वा० १ । ३ । २५ सू० ।

गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ ४ ॥
यदमोघमपामन्तरुप्तं वीजमज त्वया ।
अतश्चराचरं विश्वं प्रभवस्तस्य गीयसे ॥ ५ ॥

अन्यारादित्यादिना अन्यत्तरपदयोगेन पञ्चमी (१) (केवलात्मने) एकरूपाय आत्मा वा इदमेक एवाग्र आसीदिति श्रुतेः। निर्णीते केवलमिति त्रिलिङ्गं त्वेकक्तस्नयोरित्यमरः : (पश्चात्) सृष्टि-प्रवृत्तिकाले । (गुणत्रयविभागाय) विभज्यते अनेनेति विभागः गुणानां सत्वादीनां त्रयमेव विभागो यस्य तस्मै । गुणाः सत्वं रजस्तम इत्यमरः। (भेदम्) उपाधिं स्रष्टृत्वादिकमित्यर्थः (उपेयुषे) प्राप्तवते उपेयिवाननाश्वाननूचानश्चेति निपातः (२)। अतएव (त्रिमूर्त्तये) ब्रह्मविष्णुरुद्ररूपिणे ( तुभ्यं नमः ) नमःस्वस्तीत्यादिना चतुर्थी (३) । उक्तञ्च । नमो रजोजुषे सृष्टौ स्थितौ सत्वमयाय च । तमोरूपाय संहारे त्रिरूपाय स्वयम्भुवे इति ॥ ४ ॥

यदिति । न जायत इत्यजः हे (अज) (अपां) जलनाम् (अन्तः) (त्वया) (यदमोघम्) अबन्ध्यं (वीजं) वीर्य्यं (उप्तं) नि-क्षिप्तं । मुक्तमिति पाठे विसृष्टमित्यर्थः। शुक्रं तेजोरेतसी च वीजवीर्य्येन्द्रियाणि चेत्यमरः। (अतः) ते वीजात् (चराचरं) स्थावरजङ्गमात्मकम् । समाहारे द्वन्द्वैकवद्भावः। ( विश्वं ) जगत् उत्पन्नमिति शेषः । (तस्य) विश्वस्य प्रभवत्यस्मादिति (प्रभवः) कारणं (गीयसे) अत्र मनुः । अप एव ससर्ज्जादौ तासु वीजमवा-सृजत्। तदण्डमभवद्धैमं सहस्रांशुसमप्रभमिति। अदश्चराचरं

(१) पा० २ । ३ । २९ सू० ।
(२) पा० ३ । २ । १०९ सू० ।
(३) पा० २ । ३ । १६ सू० ।

तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन्।
प्रलयस्थितिसर्गाणामेकः कारणतां गतः ॥६॥
स्त्रीपुंसावात्मभागौ ते भिन्नमूर्त्तेः सिसृक्षया।
प्रसूतिभाजः सर्गस्य तावेव पितरौ स्मृतौ ॥७॥

विश्वं प्रसवस्तस्य गीयते इति पाठे अद इदं चराचरं विश्वं तस्य बीजस्य प्रसवो गीयते लोके इति शेषः ॥ ५ ॥

तिसृभिरिति। (एकः) सृष्टेः प्राक् केवलः (त्वं) (तिसृभिरवस्थाभिः) त्रैगुण्यमयीभिः हरिहरब्रह्मस्वरूपाभिः (महिमानं) निजशक्तिम् (उदीरयन्) विजृम्भयन् (प्रलयस्थितिसर्गाणाम्) अन्तस्थित्युत्पत्तीनां (कारणतां गतः) इदं पश्चाद्भेदमुपेयुषे इत्यस्य विवरणमतो न गतार्थत्वदोषः ॥ ६ ॥

भूतसृष्टिकर्तृत्वमुक्त्वा मिथुनसृष्ट्यर्थं मूर्त्तिमतो ब्रह्मणो भेदमाह

स्त्रीपुंसाविति। स्त्री च पुमांश्च (स्त्रीपुंसौ)। अचतुरेत्यादिना अच्प्रत्ययान्तो निपातः (१)। (सिसृक्षया) स्रष्टुमिच्छया (भिन्नमूर्त्तेः) द्विधाकृतविग्रहस्य (ते) तव आत्मनो देहस्य भागौ (आत्मभागौ) आत्मा जीवे धृतौ देहे स्वभावे परमात्मनीति विश्वः। (तावेव) भागौ प्रसूतिभाजः) प्रकृतिभाजः उत्पत्तिभाजः। (सर्गस्य) सृज्यत इति सर्गः तस्य निजसृष्टेरित्यर्थः माता च पिता च (पितरौ) पिता मात्रेत्येकशेषः (२)। (स्मृतौ) सद्भिरिति शेषः। अत्र मनुः (३)। द्विधा कृत्वात्मनोदेहमर्द्धेन

(१) पा० ५। ४। ७७ सू०।
(२) पा० १। २। ७० सू०।
(३) १ अध्यायः ३२ श्लोकः।

स्वकालपरिमाणेन व्यस्तरात्रिन्दिवस्य ते।
यौ तु स्वप्नावबोधौ तौ भूतानां प्रलयोदयौ ॥८॥
जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः।
जगदादिरनादिस्त्वं जगदीशो निरीश्वरः ॥९॥

पुरुषोऽभवत्। अर्द्धेन नारी तस्यां स विराजमसृजत्प्रभुरिति ॥ ७ ॥

स्वकालेति। (स्वकालपरिमाणेन) स्वकालस्य परिमाणेन। चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यत इत्युक्तरूपेण (व्यस्तरात्रिन्दिवस्य) व्यस्तं विभक्तं रात्रिन्दिवं रात्र्यहनी यस्य तस्य। यद्यप्यचतुरादिसूत्रेण रात्रौ च दिवा च रात्रिन्दिवमिति सप्तम्यर्थे वृत्तौ द्वन्द्व इत्युक्तं तथापि दोषमन्यमहर्दिवामन्या रात्रिरित्यादौ कर्म्मवदत्रापि प्रातिपदिकार्थवृत्तित्वं कथञ्चित्प्रयोगबलादाश्रयणीयम्। (ते) तव (यौ तु) (स्वप्नावबोधौ) (तौ) एव (भूतानां प्रलयोदयौ) संहारसृष्टी। यदाहुः(१)। यदा स देवो जागर्त्ति तदैव चेष्टते जगत्। यदा स्वपिति शान्तात्मा तदा सर्व्वं प्रलीयते इति। एतच्च दैनन्दिनसृष्टिप्रलयाभिप्रायकं महाप्रलयस्य ब्रह्मणो वर्षशतान्ते भावित्वात् ॥ ८ ॥

जगदिति। हे भगवन् (त्वं जगद्योनिः) जगत्कारणं स्वयं (अयोनिः) आदित्वादकारणकः। त्वम्। (जगदन्तः) अन्तयतीत्यन्तः पचाद्यच्। जगतः अन्तः जगत्संहर्त्ता स्वयं (निरन्तकः) नित्यत्वादन्तरहितः (त्वं) जगतामादिः (जगदादिः) सृष्टेः प्रागपि सन्नित्यर्थः अतएव त्वम् (अनादिः) आदिरहितः। त्वं (जगदीशः)

(१) मनुः १ अध्यायः ५२ श्लोकः।

आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना।
आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे॥१०॥
द्रवः सङ्घातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः।
व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु॥११॥

जगतामीशः नियन्ता स्वयं (निरीश्वरः) अनियम्य इत्यर्थः। यतो वा इमानि भूतानि जायन्ते इत्यादिश्रुतिरेवात्र प्रमाणम्। अत्र अयोनिरित्यादौ नञ्तत्पुरुषाश्रयणे विरोधः बहुव्रीहिणा तु तत्परिहार इति विरोधाभासालङ्कारः। यथाहुः विरोधाभासत्वे विरोध इति॥ ९॥

तव तु न प्रपञ्चस्येव जन्मतिरोधानज्ञानेषु परापेक्षेत्याह आत्मानमिति। हे भगवन् (त्वं) (आत्मानं) लोकानुग्रहार्थं ब्रह्मरूपेणोत्पिपादयिषितं स्वस्वरूपम् (आत्मना) एव (वेत्सि) जानासि सर्व्वापि क्रिया कर्त्तयार्थज्ञानपूर्व्विकेति भावः तथा (आत्मानम्) (आत्मना) एव आत्मन्येवेत्यत्रापि सम्बध्यते स्वस्मिन्नेव (सृजसि) अधिष्ठानमपि स्वयमेवेत्यर्थः। स्वे महिम्नि प्रतिष्ठितमिति श्रुतेः। (कृतिना) समर्थेन इदं सर्व्वत्र सम्बध्यते। (आत्मना) स्वेनैव (आत्मन्येव प्रलीयसे) स्वस्मिन्नेव प्रलीनो भवसि। लीयतेर्दैवादिकात् कर्त्तरि लट्। प्रकृत्यादिभ्य उपसङ्ख्यानमिति वार्त्तिकात्सर्व्वत्र आत्मनेति तृतीया। न हि ते प्रपञ्चस्येव ज्ञानोत्पत्तिलयेषु परापेक्षेति फलितार्थः॥ १०॥

द्रवइति। त्वमितरनुषज्यते। हे भगवन् त्वं (द्रवः) सरित्समुद्रादिवद्रसात्मकोऽसि। (सङ्घातकठिनः) सङ्घातेन निविडसंयोगेन कठिनः महीधरादिवत्। (स्थूलः) इन्द्रियग्रहणयोग्यो घटादिवत्। (सूक्ष्मः) अतीन्द्रियः परमाण्वादिवत्। (लघुः)

उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम्।
कर्म्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम्॥१२
त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्त्तिनीम्।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः॥ १३ ॥

उत्पतनयोग्यस्तूलादिवत्। (गुरुः) हेमाद्रिवत् अचलनीयः। (व्यक्तः) कार्यरूपोऽसि (व्यक्तेतरः) कारणरूपः (चासि) एवं (विभूतिषु) अणिमादिषु (ते) तव प्रकामस्य भावः (प्राकाम्यं) यथाकामत्वम्॥ ११ ॥

उद्घात इति। हे भगवन् (यासां) गिरां वाचाम् (उद्घातः) उपक्रमः (प्रणवः) ओङ्कारात्मकः। ओङ्कारप्रणवौ समाविति स्याद-भ्यादानमुद्घात आरम्भ इति चामरः। इदमुपसंहारस्याप्युपलक्षणम्। ब्रह्मणः प्रणवं कुर्य्यादादावन्ते च सर्व्वतः। स्रवत्यनः क्षतम्पूर्व्वं-म्परस्ताच विशेषत इति निरुक्तपरिशिष्टयोर्यास्कः। नीयन्ते एभिरर्थ-विशेषा इति न्यायाः स्वराः। उक्तञ्च। स्वरविशेषादर्थप्रतिपत्तिः। यथेन्द्रशत्रुः स्वरतोऽपराधादिति। यासां गिरां (त्रिभिर्न्यायैः) उदात्तानुदात्तस्वरितैः स्वरैः (उदीरणं) उच्चारणं यासां (कर्म्म) प्रतिपाद्यमित्यर्थः (यज्ञः) ज्योतिष्टोमादिः न तु चैत्यवन्दनादिरिति भावः। (फलं स्वर्गः) कर्म्मद्वारेति शेषः। कर्म्मस्वर्गौ ब्रह्मापवर्गयो-रप्युपलक्षणम्। (त्वं तासां) (गिरां) वेदानामित्यर्थः। प्रभव-त्यस्मादिति (प्रभवः) कारणम्। प्रणेता स्मर्त्ता वा मतभेदेन॥१२॥

साङ्ख्यमतेन स्तुवन्ति

त्वामिति। हे भगवन् (त्वां) पुरुषस्यार्थौभोगापवर्गरूपस्त-दर्थं प्रवर्त्तत इति तां (पुरुषार्थप्रवर्त्तिनीं) (प्रकृतिं) त्रैगुण्यात्मकं मूलकारणम्। प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे इति यादवः।

त्वं पितॄणामपि पिता देवानामपि देवता ।
परतोऽपि परश्चासि विधाता वेधसामपि ॥१४॥
त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतः ।
वेद्यञ्च वेदिता चासि ध्याता ध्येयञ्च यत्परम् १५

(आमनन्ति) कथयन्ति । म्ना अभ्यास इति धातोर्लट् । पाघ्राध्मास्थाम्नेत्यादिना मनादेशः (१) । प्रकृतिपुरुषभेदाग्रहणात् प्रकृतिपुरुषाभेदव्यपदेशः । (त्वामेव) तां प्रकृतिं साक्षित्वेन पश्यतीति (तद्दर्शिनम् उदासीनं) कूटस्थं (पुरुषं विदुः) विदन्ति । विदो लटो वेति झेर्जुसादेशः (२) । अजामेकां लोहितशुक्लकृष्णामिति श्रुतिरत्र प्रमाणम् ॥ १३ ॥

त्वमिति । हे भगवन् (त्वं पितॄणाम्) अग्निष्वात्तादीनां (अपि) (पिता) तेषामपि तर्पणीय इत्यर्थः । (देवानां) इन्द्रादीनां (अपि देवता) तेषामपि यजनीय इत्यर्थः । (परतोऽपि परश्चासि) सर्व्वोत्तरोऽसीत्यर्थः इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिरिति सर्व्वोत्तरत्वाभिधानात् । (वेधसां) दक्षादीनां (अपि विधाता) स्रष्टासि ॥ १४ ॥

त्वमेवेति । शश्वद्भवः शाश्वतः । शैषिकोऽण्प्रत्ययः । यद्यपि कालाट्ठञिति टञपवादः अतएव सूत्रकारस्यापि प्रयोगः येषाञ्च

(१) पा० ७ । ३ । ७८ सू० ।
(२) पा० । ३ । ४ । ८३ सू० ।

इति तेभ्यः स्तुतीः श्रुत्वा यथार्था हृदयङ्गमाः।
प्रसादाभिमुखो वेधा प्रत्युवाच दिवौकसः॥१६॥
पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता।
प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी॥१७॥

विरोधः शाश्वतिक इति (१) तथापि प्रयोगवशात्साधुरिति वामन इति शाश्वतः। प्रयुक्तः (शाश्वतस्त्वमेव) हूयत इति (हव्यं) हविराज्यादिकम्। जुहोतीति (होता) यजमानः (च) असि। (भोज्यं) अभ्यवहार्यमन्नम्। भोज्यं भोक्ष्ये इति (२) निपातनात् कुत्वाभावः। (भोक्ता) अन्नादः (च) असि। (वेद्यं) साक्षात्कार्यं (च) वस्तु (वेदिता) साक्षात्कर्ता (चासि) (ध्याता) स्मर्ता (च) (यत्परं) वस्तु (ध्येयं) तच्चासि। साक्षात्कारसाधनभूतप्रत्ययविशेषप्रवाहो ध्यानम् ॥ १५ ॥

इतीति। (वेधाः) ब्रह्मा (इति तेभ्यः) देवेभ्यः। आख्यातोपयोगे इत्यपादानत्वात्पञ्चमी (३)। (यथार्थाः) सत्याः अतएव हृदयं गच्छन्तीति (हृदयङ्गमाः) मनोहराः। खच्प्रकरणे सुप्युपसंख्यानम् इति खच् प्रत्ययः। अरुर्द्विषदजन्तस्य मुमिति (४) मुमागमः। (स्तुतीः) स्तोत्राणि (श्रुत्वा) (प्रसादाभिमुखः) अनुग्रहप्रवणः सन् (दिवौकसः) देवान् (प्रत्युवाच) ॥ १६ ॥

अथ कविराह पुराणस्येति। द्रव्यगुणक्रियाजातिभेदेन चत्वारोऽवयवा यस्या इति (चतुष्टयी) चतुर्विधा। संख्याया अवयवे

---

(१) पा० २।४।९ सू०। (२) पा० ७।३।६९ सू०
(३) पा० १।४।२९ सू०। (४) पा० ६।३।६७ सू०।

स्वागतं स्वानधीकारान् प्रभावैरवलम्ब्य वः ।
युगपद्युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः॥१८॥

तयप् इति तयप् (१)। टिड्ढाणञ्द्वयसजित्यादिना (२) ङीप्। (शब्दानां प्रवृत्तिः) वैखरीप्रमुखा वाग्वृत्तिः। उक्तञ्च। वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा। द्योतितार्था च पश्यन्ती सूक्ष्मा वागनपायिनीति। (पुराणस्य) पुरातनस्य पृषोदरादित्वात्साधुः। (कवेः) कवयितुः (तस्य) ब्रह्मणश्चतुर्भिर्मुखैः समीरिता (चतुर्मुख-समीरिता) सती। तद्धितार्थेत्यादिना (३) उत्तरपदसमासः। समाहारे चतुर्मुखीति स्यात् (चरितार्था) अन्वर्था (आसीत्) चतुर्मुखोच्चारणाचातुर्विध्यं सफलमासीत् इत्यर्थः॥ १७॥

भगवानाह स्वागतमिति। हे (प्राज्यविक्रमाः) प्रभूतपराक्रमाः देवाः। प्राज्यं भूरि प्रभूतञ्चेति यादवः। (स्वान्) स्वकीयान् (अधीकारान्) नियोगान्। उपसर्गस्य घञीति वा दीर्घः। (प्रभावैः) सामर्थ्यैः (अवलम्ब्य) आस्थाय यथाधिकारं स्थित्वापीत्यर्थः। (युगपत्) समकालं (प्राप्तेभ्यः) युगपत्प्राप्त्या महत्कार्य्यमनुमीयत इति भावः। (युगबाहुभ्यः) दीर्घबाहुभ्य इत्यर्थः। आजानुबाहुत्वं भाग्यलक्षणम्। (वः) युष्मभ्यम्। बहुवचनस्य वस्नसाविति वसादेशः कर्म्मणा यमभिप्रैतीत्यत्र कर्म्मपदेन क्रियाग्रहणात्सम्प्रदानत्वम् (४)। (स्वागतं) शोभमानमागमनम्। काकुरत्रानुसन्धेया॥ १८॥

---

(१) पा० ५। २। ४२ सू०।
(२) पा० ४। १। १५ सू०।
(३) पा० २। १। ५१ सू०।
(४) पा० १। ४। ३२ सू०।

किमिदं द्युतिमात्मीयां न बिभ्रति यथा पुरा।
हिमक्लिष्टप्रकाशानि ज्योतींषीव मुखानि वः॥१९
प्रशमादर्चिषामेतदनुद्गीर्णसुरायुधम्।
वृत्रस्य हन्तुः कुलिशं कुण्ठिताश्रीव लक्ष्यते॥२०॥
किञ्चायमरिदुर्व्वारः पाणौ पाशः प्रचेतसः।
मन्त्रेण हतवीर्य्यस्य फणिनो दैन्यमाश्रितः॥२१॥

किमिति। वत्सा इत्युत्तरश्लोकीयं सम्बोधनमत्राप्यनुषञ्ज-नीयम्। हे वत्साः पुत्रकाः। हिमेन नीहारेण क्लिष्टप्रकाशानि मन्दप्रभाणि (हिमक्लिष्टप्रकाशानि) (ज्योतींषि) नक्षत्राणि (इव) दीप्तताराऊतारेषु ज्योतिरिति शाश्वतः। (वः) युष्माकं (मुखानि) (पुरा यथा) पूर्व्वमिव (आत्मीयां द्युतिं) (न बिभ्रति) (इदं किं)) किंनिबन्धनमित्यर्थः। किमिदमित्यनेन वाक्यार्थः पराम्रश्यते।१९॥

उक्तमेव प्रपञ्चयति सप्तभिः श्लोकैः प्रशमादित्यादिभिः

प्रशमादिति। (अर्चिषा) तेजसां (प्रशमात्) निर्व्वाणात् (अनु-द्गीर्णसुरायुधम्) अनुदितचित्रप्रभमित्यर्थः। (एतत् वृत्रस्य हन्तुः) इन्द्रस्य (कुलिशं) वज्रं कुण्ठिता अश्रयो यस्य तत् (कुण्ठिताश्रि) कुण्ठितकोटि (इव लक्ष्यते) दृश्यते॥२०॥

किञ्चेति। (किञ्चायम् अरिदुर्व्वारः) रिपुदुष्प्रधर्षः (प्रचेतसः) वरुणस्य। प्रचेता वरुणः पाशीत्यमरः। (पाणौ) (पाशः) रज्जु-रायुधविशेषः। (मन्त्रेण) गारुडेन (हतवीर्य्यस्य) प्रतिबद्धशक्तेः (फणिनः) सर्पस्य (दैन्यं) शोच्यत्वं (आश्रितः)। अत्र फणिनिष्ठदै-न्यस्य पाशे असम्भवात् दैन्यमिव दैन्यमिति कल्पनादसम्भवद्वस्तु-सम्बन्धो निदर्शनालङ्कारः॥२१॥

कुबेरस्य मनःशल्यं शंसतीव पराभवम्।
अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः॥ २२ ॥
यमोऽपि विलिखन् भूमिं दण्डेनास्तमितत्विषा।
कुरुतेऽस्मिन्नमोघेऽपि निर्वाणालातलाघवम् २३
अमी च कथमादित्याः प्रतापक्षतिशीतलाः।
चित्रन्यस्ता इव गताः प्रकामालोकनीयताम्॥२४

कुबेरस्येति। अपविद्धा त्यक्ता गदा येन सः (अपविद्धगदः) अतएव (भग्नशाखो द्रुम इव) स्थितः (कुबेरस्य) (बाहुः) (मनःशल्यं) दुःखहेतुत्वान्मनसः शल्यप्रायमित्यर्थः। (पराभवं) शत्रुकृतमिति शेषः। (शंसतीव) कथयतीव लक्षणया अनुमापयतीत्यर्थः बाहौ मुख्यकथनस्यासम्भवात् इवशब्दोऽप्यतएव॥ २२॥

यमोऽपीति। अस्तं नाशम् इताः प्राप्ताः अस्तमिति मकारान्तमव्ययम्। तस्य द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैरिति(१) समासः। अस्तमितास्त्विषो यस्य तेन (अस्तमितत्विषा) निस्तेजस्केन (दण्डेन) (यमोऽपि भूमिं विलिखन्) (अमोघेऽपि) प्रागिति भावः (अस्मिन्) दण्डे निर्व्वाणालातस्य शान्तोल्मुकस्य। अलातं नाम भूलेखनशलाका तस्य यल्लाघवं लैघ्यं तत् (निर्व्वाणालातलाघवं) (कुरुते)। अलातमुल्मुकं ज्ञेयमिति हलायुधः। निर्व्वाणोऽवात इति(२) निपातनान्निष्ठानत्वम्। अत्रापि लाघवमिव लाघवमिति कल्पनान्निदर्शनालङ्कारः॥ २३॥

अमी इति। प्रतापक्षत्या तेजसां क्षयेन शीतलाः (प्रतापक्षतिशीतलाः) (अमी आदित्याश्च) द्वादशेति शेषः। (कथं) केन हेतु-

(१) पा० २।१।२४ सू०। (२) पा० ८।२।५ सू०।

पर्य्याकुलत्वान्मरुतां वेगभङ्गोऽनुमीयते।
अम्भसामोघसंरोधः प्रतीपगमनादिव ॥२५॥
आवर्जितजटामौलिविलम्बिशशिकोटयः।
रुद्राणामपि मूर्द्धानः क्षतहुङ्कारशंसिनः ॥२६॥
लब्धप्रतिष्ठाः प्रथमं यूयं किं बलवत्तरैः।
अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥२७॥

नेत्यर्थः। (चित्रन्यस्ताः) चित्रलिखिताः (इव) प्रकाममत्यन्तम् आलोकनीयतां दृश्यतां (प्रकामालोकनीयतां) (गताः) प्राप्ताः ॥२४॥

पर्य्याकुलत्वादिति। (मरुतां) वायूनां सप्तसप्तानामिति शेषः। (पर्य्याकुलत्वात्) स्खलितगतित्वाद्वेगोवेगस्य भङ्गः (वेगभङ्गः) (अम्भसां) जलानां (प्रतीपगमनात्) उत्तानावरोहादित्यर्थः। ओघस्य संरोधः (ओघसंरोधः) प्रवाहप्रतिबन्धः (इव अनुमीयते) ॥ २५ ॥

आवर्ज्जितेति। (आवर्ज्जितजटामौलिविलम्बिशशिकोटयः) आवर्ज्जितेषु परिभवदुःखावनतेषु जटानां मौलिषु जटाजूटेषु विलम्बिन्यः स्रंसिन्यः शशिकोटयश्चन्द्ररेखाः येषां ते तथोक्ताः (रुद्राणामपि) एकादशानामिति शेषः। (मूर्द्धानः) (क्षतहुङ्कारशंसिनः) क्षतं हुङ्कारं शंसन्तीति तथोक्ताः हुङ्कारक्षत्यनुमापका इत्यर्थः। हुङ्कारशस्त्रा हि रुद्रा इति भावः ॥ २६ ॥

लब्धेति। (प्रथमं) पूर्व्वं (लब्धप्रतिष्ठाः) लब्धस्थितयः लब्धावकाशा इत्यन्यत्र (यूयं बलवत्तरैः) पौरुषातिरेकात् प्रबलतरैः। निरवकाशैरित्यपरत्र (परैः) शत्रुभिः (उत्सर्गाः) सामान्यशास्त्राणि मा हिंस्यादित्येवमादीनि। अपोद्यन्ते एभिरिति (अपवादैः) गामालभेतेत्यादिभिर्विशेषशास्त्रैः (इव) किं (कृतव्यावृत्तयः) कृत-

तद्ब्रूत वत्साः किमितः प्रार्थयध्वं समागताः ।
मयि सृष्टिर्हि लोकानां रक्षा युष्मास्ववस्थिता॥२८॥
ततो मन्दानिलोद्धूतकमलाकरशोभिना ।
गुरुं नेत्रसहस्रेण नोदयामास वासवः ॥२९॥
स द्विनेत्रं हरेश्चक्षुः सहस्रनयनाधिकम् ।
वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम् ॥३०॥

प्रतिष्ठाभङ्गाः कृतविषयसङ्कोचरूपबाधा इत्यन्यत्र । विषयसङ्कोच एव बाध इत्याचार्यः । निषेधशास्त्रस्य वैदिकहिंसापरिहारेण लौकिकमात्रे व्यवस्थापनात् विषयसङ्कोच इत्यलमतिगहनावगाहनेन ॥ २७ ॥

तदिति । (तत्) तस्मात् कारणात् हे (वत्साः) पुत्रकाः । वत्सस्त्वर्भकपुत्राद्योर्वर्षे वत्सन्तु वक्षसीति विश्वः । स्वयं पितामहत्वाद्वत्सा इत्यामन्त्रयते । सम्भूय आगताः (समागताः) (इतः) मत्तः (किं प्रार्थयध्वं) किमिच्छतेत्यर्थः । (ब्रूत) लोकरक्षणे यूयमेव कर्त्तार इत्याह (हि) यतः (मयि लोकानां सृष्टिः) (रक्षा युष्मासु अवस्थिता) अतस्तदर्थमपि नास्ति मदपेक्षेत्यर्थः ॥ २८ ॥

तत इति । (ततः) भगवत्प्रश्नानन्तरं (वासवः) इन्द्रः (गुरुं) वृहस्पतिं । गुरू गीष्पतिपित्राद्याविव्यमरः । (मन्दानिलोद्धूतकमलाकरशोभिना) मन्दानिलोद्धूतो यः कमलाकरः सइव शोभत इति तेन तथोक्तेन नेत्राणां सहस्रेण (नेत्रसहस्रेण) (नोदयामास) प्रेरयामास । सहस्रग्रहणमास्यातिशयार्थम् । अनिमेषाणां अपि प्रयत्नवशादक्षिस्पन्दो न विरुध्यते ॥ २९ ॥

स इति । (हरेः) इन्द्रस्य । इन्द्रोदुश्च्यवनो हरिरिति हलायुधः । सहस्रात्रयनेभ्योधिकं (सहस्रनयनाधिकं) तदगोचरदर्शित्वा-

एवं यदात्थ भगवन्नाक्रान्तं नः परैः पदम्।
प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो ॥३१
भवल्लब्धवरोदीर्णस्तारकाख्यो महासुरः।
उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥३२॥

दिति भावः। द्वे नेत्रे यस्य तत् (द्विनेत्रम्) प्रसिद्धचक्षुषोऽयं विशेष इत्यर्थः। (चक्षुः। चक्षुर्भूतः। चक्षुषस्त्वारोपस्य प्रकृतोपयोगात्परिणामालङ्कारः। (स वाचस्पतिः) कस्कादित्वात्सत्वं(१)। षष्ठ्याः पतिपुत्रेत्यादिना। सत्वमिति(२) स्वामी तन्न छन्दोविषयत्वात्। (प्राञ्जलिः) सन् (जलजासनं) ब्रह्माणं (इदमुवाच ॥ ३० ॥

एवमिति। हे (भगवन्) षड्गुणैश्वर्यसम्पन्न (यदात्थ) कृतव्यावृत्तयः परैरिति यद्ब्रवीषि। ब्रुवः पञ्चानाम् इत्यादिनाहादेशः (३)। वर्त्तमानसामीप्ये वर्त्तमानवद्वेति (४) वर्त्तमानप्रयोगः। वामनस्तु भ्रान्तोऽयं प्रयोग इत्याह। आहेति भूते णलन्तभ्रमवदिति। आहेत्युपलक्षणम्। तत् (एवं) सत्यं (नः) अस्माकं (पदम्) अधिकारः (परैः) शत्रुभिः (आक्रान्तम्) आक्षिप्तम्। हे (प्रभो) (प्रत्येकं) प्रतिपुरुषं (विनियुक्तात्मा) प्रवेशितस्वरूपः सर्वान्तर्यामीत्यर्थः। (कथं न ज्ञास्यसि) न वेत्सि। वर्त्तमानेऽपि वचनभङ्ग्या भविष्यन्निर्देशः प्रसिद्धः। अपह्नवे ज्ञः अकर्मकाच्चेत्यात्मनेपदविकल्पः (८) ॥ ३१ ॥

उक्तमेव प्रपञ्चयति

भवल्लब्ध इति। भवतस्त्वत्तो लब्धेन वरेणोदीर्ण उद्धतः (भवल्लब्धवरोदीर्णः) तारक इत्याख्या नामधेयं यस्य सः (तार-

---

(१) पा० ८। ३। ४८ सू०। (२) पा० ८। ३। ५३ सू०।
(३) पा० ३। ४। ८४ सू०। (४) पा० ३। ३। १३१ सू०

पुरे तावन्तमेवास्य तनोति रविरातपम् ।
दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते ॥३३

सर्व्वाभिः सर्व्वदा चन्द्रस्तं कलाभिर्निषेवते ।
नादत्ते केवलां लेखां हरचूड़ामणीकृताम् ॥३४॥

व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात् ।
न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकम् ॥३५

काख्यः) (महासुरः) महानसुरः। सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैरिति तत्पुरुषः (१)। धूमकेतुः) उत्पातविशेषः (इव) (लोकानामुपप्लवाय) उपद्रवाय (उत्थितः) उत्पन्नः ॥ ३२ ॥

पुर इति। (अस्य) तारकस्य (पुरे) (रविः) सूर्य्यः (तावन्तं) तावन्मात्रं (एव आतपं तनोति) (यावन्मात्रेण यावतैव यावती मात्रा मितिर्यस्य यावन्मात्रं तेन वा। अल्पपरिमाणेनेत्यर्थः। मात्रा परिच्छेदे अल्पे च परिमाणे। मात्रं कार्त्स्न्येऽवधारणे इत्यमरः। (दीर्घिकाकमलोन्मेषः) दीर्घिकासु क्रीडावापीसु कमलानामुन्मेषो विकाशः (साध्यते) निष्पाद्यते। कठोरकिरणोऽपि सन्दीप्तः सन्नेव तद्भीत्या पुरे प्रकाशत इत्यभिप्रायः ॥ ३३ ॥

सर्व्वाभिरिति। (चन्द्रस्तं) तारकं (सर्व्वदा) कृष्णपक्षेऽपीत्यर्थः। (सर्व्वाभिः कलाभिः निषेवते)। कला तु षोडशो भाग इत्यमरः। (केवलां हरचूडामणीकृतां) शिवशिरोमणीकृतां (लेखां नादत्ते) न गृह्णाति ॥ ३४ ॥

व्यावृत्तेति। (वायुः) (कुसुमस्तेयसाध्वसात्) स्तेयस्य भावः कर्म्म वा स्तेयं चौर्य्यम् ( स्तेनाद्यन्नलोपश्चेति (२) यत्प्रत्ययः नलो-

(१) पा० २।१।६१सू०। (२) पा० वा० ५।१।१२५सू०।

पर्य्यायसेवामुत्सृज्य पुष्पसम्भारतत्पराः ।
उद्यानपालसामान्यमृतवस्तमुपासते ॥ ३६ ॥
तस्योपायनयोग्यानि रत्नानि सरितां पतिः ।
कथमप्यम्भसामन्तरानिष्पत्तेः प्रतीक्षते ॥३७॥
ज्वलन्मणिशिखाश्चैनं वासुकिप्रमुखा निशि ।

पत्र । कुसुमानां स्तेयं तस्मात् स्तेमाभियोगात् दण्डाद्वा साध्वसं भयं तस्माद्धेतोः (उद्याने) (व्यावृत्तगतिः) निवृत्तोद्यानसञ्चारः सन्नित्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । तत्पार्श्वे) तत्समीपे । ( तालवृन्तानिलाधिकं) तालस्य वृन्तैरुद्यथ्यते तालस्येव वृन्तमस्येति वा तालवृन्तं तस्यानिलात् व्यजनसञ्चारपवनात् अधिकं यथा तथा (न वाति) व्यजनं तालवृन्तकमित्यमरः ॥३५ ॥

पर्य्यायेति । (ऋतवः) षट् वसन्तादयः (पर्य्यायसेवां) क्रमसेवां (उत्सृज्य) पुष्पाणां सम्भारे संग्रहे तत्पराः आसक्ताः (पुष्पसंभारतत्पराः) सन्त इत्यर्थः । तत्परे प्रसितासक्तावित्यमरः । (उद्यानपालसामान्यं) उद्यानपालैरुद्यानाधिकृतैः सामान्यं साधारणं यथा भवति तथा (तं) तारकं (उपासते) सेवन्ते । शीतोष्णादिदोषप्रकाशनन्तु दूरापास्तमित्यर्थः ॥ ३६ ॥

तस्येति । (सरितास्पतिः) समुद्रः (तस्य) तारकस्य उपायनानां प्राभृतानां योग्यानि (उपायनयोग्यानि) । प्राभृतं तु प्रदेशनम्, उपायनमित्यमरः । (रत्नानि) (अम्भसामन्तः आ निष्पत्तेः) परिपाकपर्य्यन्तम् । विकल्पादसमासः ( (कथमपि ) महता यत्नेन (प्रतीक्षते) कदा वा परिपच्येरन्नित्येकाग्रेण पालयतीत्यर्थः ॥३७॥

ज्वलदिति । (च) किञ्चेत्यर्थः । ज्वलन्त्यो मणीनां शिरोरत्नानां शिखाः ज्वालाः येषान्ते (ज्वलन्मणिशिखाः) वासुकिप्रमुखा

स्थिरप्रदीपतामेत्य भुजङ्गाः पर्य्युपासते ॥३८॥
तत्कृतानुग्रहापेक्षी तं मुहुर्दूतहारितैः।
अनुकूलयतीन्द्रोऽपि कल्पद्रुमविभूषणैः ॥३९॥
इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम्।
शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जनः ॥४०॥
तेनामरबधूहस्तैः सदयालूनपल्लवाः।
अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमाः ॥४१

भुजङ्गाः) सर्पा सिद्धाश्च ध्वन्यन्ते। भुजङ्गः सिद्धसर्पयोरित्यमरः। (निशि) (स्थिरप्रदीपतां) अनिर्वाणदीपत्वं (एत्य) (एनं) तारकं पर्य्युपासते) परिहृत्य सेवन्ते ॥ ३८ ॥

तत्कृतेति। (इन्द्रोऽपि) तत्कृतानुग्रहापेक्षी तेन तारकेण कृतं तत्कृतमनुग्रहं प्रसादम् अपेक्षत इति तथोक्तः सन् (मुहुर्दूतहारितैः) दूतप्रापितैः (कल्पद्रुमविभूषणैः) कल्पद्रुमाणां विभूषणैस्तत्प्रसूनैरित्यर्थः। (तं) तारकम् (अनुकूलयति) अनुकूलं करोति॥३९॥

इत्थमिति। (इत्थम्) उक्ताकारेण रविशशिपवनोदधिभुजङ्गमसुरेन्द्रैः (आराध्यमानोऽपि भुवनत्रयं क्लिश्नाति) पीडयति। तथाहि (दुर्ज्जनः) (प्रत्यपकारेण) प्रतीकारेणैव (शाम्येत्) शान्तो भवेत्, (उपकारेण) तु (न) शाम्येत् प्रत्युत प्रकुप्यतीति भावः ॥४०॥

तेनेति। (तेन) तारकेण (अमरबधूहस्तैः) सुकुमारैरिति भावः। तैरपि सदयम् आलूनाः अवतंसार्थं छिन्नाः पल्लवा येषां ते (सदयालूनपल्लवाः) (नन्दनद्रुमाः) छेदाश्च पाताश्च छेदपाताः तेषाम् (छेदपातानां) अभिजानन्तीति (अभिज्ञाः)। कृद्योगात्कर्म्मणि षष्ठी। (क्रियन्ते) ॥ ४१ ॥

वीज्यते स हि संसुप्तः श्वाससाधारणानिलैः।
चामरैः सुरवन्दीनां वाष्पशीकरवर्षिभिः॥४२॥
उत्पाट्य मेरुशृङ्गाणि क्षुसानि हरितां खुरैः।
आक्रीडपर्व्वतास्तेन कल्पिताः स्वेषु वेश्मसु॥४३॥
मन्दाकिन्याः पयः शेषं दिग्वारणमदाविलम्।
हेमाम्भोरुहशस्यानां तद्वाप्यो धाम साम्प्रतम्॥४४

वीज्यत इति। (हि) यस्मात्कारणात् (सः) तारकः (संसुप्तः) सन् श्वाससाधारणो निश्वाससमानः अनिलो येषां तैः (श्वाससाधारणानिलैः) ततोऽप्याधिक्ये निद्राभङ्गभयादिति भावः। (वाष्पशीकरवर्षिभिः) तासां स्त्रीणां रोदनस्यायमवसर इति भावः। (सुरवन्दीनां) सुरप्रग्रहस्त्रीणां सम्बन्धिभिः। प्रग्रहापग्रहौ वन्द्यामित्यमरः। (चामरैर्वीज्यते)॥४२॥

उत्पाट्येति। (तेन) तारकेण (हरितां) सूर्य्याश्वानाम्। हरित् सूर्य्ये च सूर्य्याश्वे वर्णे च हरिते दिशीति विश्वः। (खुरैः) शफैः (क्षुसानि) चूर्णितानि। एतेन तेषामत्यौन्नत्यं सूचितम्। (मेरुशृङ्गाण्युत्पाट्य स्वेषु वेश्मसु) वेश्मस्विति बहुवचनेनास्य भुवनत्रयनिवासः सूचितः। आक्रीडन्ते एष्वित्याक्रीडाः ते च ते पर्व्वताः (आक्रीडपर्व्वताः) (कल्पिताः) कृताः॥४३॥

मन्दाकिन्या इति। (साम्प्रतम्) संप्रति (मन्दाकिन्याः) भागीरथ्याः (दिग्वारणमदाविलं) दिग्वारणानां दिग्गजानां मदैराविलं कलुषं (पयः) जलमेव शिष्यत इति (शेषं) शिष्टम्। कर्म्मण्यण्प्रत्ययः। चिष्वन्यत्रोपयुज्यत इति नपुंसकत्वम्। तर्हि कनककमलानि क्व गतानीत्याह हेमेति। (हेमाम्भोरुहशस्यानां) हेमाम्भोरुहाण्येव

भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते ।
खिलीभूते विमानानां तदापातभयात्पथि॥४५॥
यज्वभिः सम्भृतं हव्यं विततेष्वध्वरेषु सः ।
जातवेदोमुखान्मायी मिषतामाच्छिनत्ति नः॥४६
उच्चैरुच्चैःश्रवास्तेन हयरत्नमहारि च ।

स्थानानि तेषान्तु तस्य वाप्यः (तद्वाप्यः) एव (धाम) स्थानम् । सर्व्वाण्यप्युत्पाट्य स्वदीर्घिकास्वेव प्रतिरोपितवानित्यर्थः ॥ ४४ ॥

भुवनेति । तस्य तारकस्य आपातात् समापत्तेः भयात् (तदापातभयात्) (विमानानां पथि खिलीभूते) अप्रहतीभूते सति । द्वे खिलाप्रहते समे इत्यमरः । (स्वर्गिभिः) देवैर्भुवनानामालोकने प्रीतिः (भुवनालोकनप्रीतिः) (नानुभूयते) ॥ ४५ ॥

यज्वभिरिति । (यज्वभिः) विधिवदिष्टवद्भिः । यज्वा तु विधिनेष्टवानित्यमरः । सुयजोर्ङ्वनिप् इति (१) ङ्वनिप्प्रत्ययः । (विततेष्वध्वरेषु) यज्ञेषु (सम्भृतं) दत्तं (हव्यं) हविः (मायी) मायावी । व्रीह्यादित्वादिनिप्रत्ययः(२) । (सः) तारकः (नः) अस्माकं (मिषतां) पश्यतां पश्यत्सु सत्स्वित्यर्थः । षष्ठी चानादरे इति (३) षष्ठी । जातवेदा वह्निरेव मुखं तस्मात् (जातवेदोमुखात्) (आच्छिनत्ति) आक्षिप्य गृह्णातीत्यर्थः ॥ ४६ ॥

उच्चैरिति । (च) किञ्चेत्यर्थः । (तेन) तारकेण (उच्चैः) उन्नतः (उच्चैःश्रवाः) नाम हयो रत्नमिव (हयरत्नम्) अश्वश्रेष्ठः ।

---

(१) पा० ३ । २ । १०३ सू० ।
(२) पा० । ५ । २ । ११६ सू० ।
(३) पा० २ । ३ । ३८ सू० ।

देहबद्धमिवेन्द्रस्य चिरकालार्ज्जितं यशः ॥४७॥
तस्मिन्नुपायाः सर्व्वे नः क्रूरे प्रतिहतक्रियाः।
वीर्य्यवन्त्यौषधानीव विकारे सान्निपातिके॥४८॥
जयाशा यत्र चास्माकं प्रतिघातोत्थितार्च्चिषा।
हरिचक्रेण तेनास्य कण्ठे निष्कमिवार्पितम्॥४९

रत्नं श्रेष्ठे मणावपीति विश्वः। अस्य शुभ्रत्वादुत्प्रेक्ष्यते। (देहबद्धं) बद्धदेहं मूर्त्तिमदित्यर्थः। आहिताग्न्यादित्वान्निष्ठायाः परनिपातः (१)। (चिरकालार्ज्जितम् इन्द्रस्य यश इव) (अहारि) अपहृतम् ॥ ४७ ॥

तर्हि सामाद्युपायास्तत्र कथं न प्रयुक्ता इत्यत्राह

तस्मिन्निति। (क्रूरे) घातुके। नृशंसो घातुकः क्रूर इत्यमरः। (तस्मिन्) असुरे (नः) अस्माकं (सर्व्वे उपायाः) सन्निपातदोषत्रयस्य प्रकोपजे (सान्निपातिके विकारे) ज्वरादौ। सन्निपाताच्चेति वक्तव्याट्ठक् (२)। (वीर्य्यवन्ति) सारवन्ति (औषधानीव प्रतिहतक्रियाः) विफलप्रयोगाः भवन्ति ॥ ४८ ॥

तदेव प्रतिहतक्रियत्वमाह।

जयेति। (च) किञ्चेत्यर्थः। नूनमनेन हरिचक्रेण वयं जेष्याम इति (यत्र) हरिचक्रे (अस्माकं जयाशा) विजयाशंसा आसीदिति शेषः। (प्रतिघातोत्थितार्च्चिषा) प्रतिघातेन प्रतिहत्या उत्थितार्च्चिषा उद्धततेजसा (तेन हरिचक्रेण) विष्णोः सुदर्शनेन

(१) पा० २।२।३७ सू०
(२( पा० वा० ५।३१ सू०

तदीयास्तोयदेष्वद्य पुष्करावर्त्तकादिषु।
अभ्यस्यन्ति तटाघातं निर्जितैरावता गजाः॥५०
तदिच्छामो विभो स्रष्टुं सेनान्यं तस्य शान्तये।
कर्म्मबन्धच्छिदं धर्म्मं भवस्येव मुमुक्षवः॥ ५१ ॥

(अस्य) तारकस्य (कण्ठे) (निष्कं) उरोभूषणं (अर्पितमिव) इत्युत्प्रेक्षा। स्वयमेव निष्कमिव स्थितमित्यर्थः। तारकशिरश्छेदाय हरिणा चक्रं त्यक्तं तदपि नष्टशक्तिजातमिति भावः। साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले। दीनारेऽपि च निष्कोऽस्त्रीत्यमरः॥ ४९॥

तदीया इति। (अद्य) सम्प्रति (निर्ज्जितैरावताः) निर्ज्जित ऐरावतो यैस्ते तथोक्ताः तस्य तारकस्य इमे (तदीयाः गजाः) (पुष्करावर्त्तकादिषु) पुष्कराश्च आवर्तकाश्च नाम आदयो येषां तेषु (तोयदेषु) मेघेषु (तटाघातं) वप्रक्रीडां (अभ्यस्यन्ति)॥ ५०॥

तदिति। (तत्) तस्मात्कारणात् हे (विभो!) स्वामिन् मोक्तुं भवं त्यक्तुम् इच्छवो (मुमुक्षवः) विरक्ताः (भवस्य) संसारस्य शान्तये निवृत्तये कर्म्मैव बन्धः तं छिनत्तीति कर्म्मबन्धच्छित् तं (कर्म्मबन्धच्छिदं) (धर्म्ममिव) आत्मज्ञानहेतुभूतमिति शेषः। तमेव विदित्वातिमृत्युमेतीति ज्ञानादेव मुक्तिः। (तस्य) तारकस्य (शान्तये) नाशाय। सेनां नयतीति सेनानीः चमूपतिः। सत्सूद्विषेत्यादिना क्विप् (१)। तं (सेनान्यं) कश्चित् (स्रष्टुमिच्छामः) वयमिति शेषः॥ ५१॥

(१) पा० ३।२।६१ सू०

गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित् ।
प्रत्यानेष्यति शत्रुभ्यो वन्दीमिव जयश्रियम् ॥ ५२
वचस्यवसिते तस्मिन् ससर्ज गिरमात्मभूः ।
गर्जितानन्तरां वृष्टिं सौभाग्येन जिगाय सा ॥ ५३
सम्पत्स्यते वः कामोऽयं कालः कश्चित्प्रतीक्ष्यताम्

सेनानीवृत्तेः फलमाह

गोप्तारमिति । (सुरसैन्यानां) देवतासेनानां (गोप्तारं) रक्षितारं (यं) सेनान्यं (पुरस्कृत्य) पुरोधाय । पुरोऽव्ययमिति(१) गतित्वात् नमस्पुरसोर्गत्योः इति(२) सकारः । गां पृथ्वीं त्रायन्त इति गोत्रास्तान् भिनत्तीति (गोत्रभिद्) इन्द्रः (जयश्रियं) (वन्दी--मिव) वन्दीकृतां स्त्रियमिव (शत्रुभ्यः) सकाशात् (प्रत्यानेष्यति) प्रत्याहरिष्यति तं स्रष्टुमिति पूर्व्वेण सम्बन्धः ॥ ५२ ॥

वचसीति । (तस्मिन्) वाचस्पत्ये (वचसि अवसिते) परिसमाप्ते सति (आत्मभूः) ब्रह्मा (गिरं) वाचं (ससर्ज्ज) जगादेत्यर्थः । (सा) गीः (सौभाग्येन) मनोहरत्वेन । हृद्भगसिन्ध्वन्ते पूर्व्वपदस्य चेत्युभयपदवृद्धिः (३) । (गर्जितानन्तरां) गर्जितात् गर्जितस्य वा अनन्तरं प्रवृत्तां (वृष्टिं जिगाय) जितवती । गर्जितपरत्वाद्वृष्टे-रिव तद्विज्ञापनफलत्वाद्गिरः सुभगत्वमिति भावः ॥ ५३ ॥

सम्पत्स्यत इति । (अयं वः) युष्माकं (कामः) मनोरथः सेना-

(१) पा० २ । ४ । ६७ सू० ।
(२) पा० ८ । ३ । ४० सू० ।
(३) पा० ७ । ३ । १९ सू० ।

नत्वस्य सिद्धौ यास्यामि सर्गव्यापारमात्मना॥५४॥
इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम्॥५५॥
वृतं तेनेदमेव प्राक् मया चास्मै प्रतिश्रुतम् ।
वरेण शमितं लोकानलं दग्धुं हि तत्तपः॥५६॥

नीरूपः (सम्पत्स्यते) सेत्स्यति । (कश्चित्) कियानपि (कालः प्रतीक्ष्यताम्) । (तु) किन्तु (अस्य) सेनान्यः (सिद्धौ) विषये (आत्मना) स्वयं सर्गः सृष्टिरेव व्यापारस्तं (सर्गव्यापारं) (न यास्यामि) नाहं स्रक्ष्यामीत्यर्थः ॥ ५४ ॥

कुत इत्याशङ्क्याह

इत इति । (इतः) मत्त एव (प्राप्तश्रीः) लब्धोदयः (स दैत्यः) तारकासुरः (इतः) मत्तः (एव क्षयं) नाशं ( नार्हति) तथाहि अन्योऽन्यस्तावदास्तां विषस्य वृक्षः (विषवृक्षोऽपि संवर्द्ध्य) कुतश्चित्कारणात् सम्यक् वर्द्धयित्वा (स्वयं छेत्तुम्) हन्तुं (असाम्प्रतम्) अनर्हः। असाम्प्रतमित्यनेन निपातेनाभिहितत्वात् वृक्ष इति द्वितीयान्तो न भवति अनभिहिते कर्म्मणि द्वितीयाभिधानात्। यथाह वामनः । निपातेनाप्यभिहिते कर्म्मणि न विभक्तिः परिगणनस्य प्रायिकत्वादिति ॥ ५५ ॥

वृतमिति । (प्राक्) पूर्व्वं (तेन) असुरेण (इदमेव) देवैरबध्यत्वमेव (वृतं) प्रार्थितम् । (मया च अस्मै) तारकाय ( प्रतिश्रुतं) प्रतिज्ञातम् । प्रत्याङ्भ्यां श्रुवः पूर्व्वस्य कर्त्तेति सम्प्रदानत्वाच्चतुर्थी(१) कर्त्तव्यश्चैतदित्याह (लोकान् दग्धुम् अलं) शक्तम् ।

(१) पा० १ । ४ । ४० सू० ।

संयुगे सांयुगीनं तमुद्यन्तं प्रसहेत कः।
अंशादृते निषिक्तस्य नीललोहितरेतसः॥५७॥
स हि देवः परं ज्योतिस्तमःपारे व्यवस्थितम्।
परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना॥५८॥
उमारूपेण ते यूयं संयमस्तिमितं मनः।

पर्य्याप्तिवचनेष्वलमर्थेष्विति तुमुन् प्रत्ययः (१)। तस्य तपः (तत्तपः वरेण) वरदानेन (शमितं हि) मयेति शेषः॥ ५६॥

संयुग इति। (संयुगे) युद्धे (उद्यन्तं) व्याप्रियमाणम्। संयुगे साधुं (सांयुगीनम्) प्रतिजनादिभ्यः खञिति खञ्प्रत्ययः (२)। (तं) तारकं (निषिक्तस्य) क्वचित् चेतं चरितस्य। (नीललोहित-रेतसः) नीलः कण्ठे लोहितस्य केशेष्विति नीललोहित इति पराणमिति स्वामी। तस्य नीललोहितस्य धूर्ज्जटेः रेतसः शुक्रस्य (अंशादृते) अंशं विना अन्यः (कः प्रसहेत) अभिभवेत्। प्रसहनमभिभव इति वृत्तिकारः॥ ५७॥

कथमसावीदृक्शक्तिरित्याह

स इति। (सः देवः) नीललोहितः (तमःपारे) तमसः पारे परतः (व्यवस्थितं) तमोगुणातीतं (परं ज्योतिः) परमात्मा (हि) अतएव (मया) परिच्छिन्नप्रभावर्द्धिः) अवगाढ़महिमातिशयः (न) भवति तथा (विष्णुना च न) अतस्तस्यासाध्यं नास्तीत्यर्थः॥ ४८॥

सम्प्रति तदंशोत्पत्तावुपायं दर्शयति

उमेति। (ते) कार्य्यार्थिनः (यूयं) (संयमस्तिमितं) समाधि-

---

(१) पा० ३। ४। ६६ सू०। (२) पा० ४। ४। ९९ सू०।

शम्भोर्यतध्वमाक्रष्टुमयस्कान्तेन लौहवत्॥५९॥
उभे एव क्षमे वोढुमुभयोर्वीजमाहितम् ।
सा वा शम्भोस्तदीया वा मूर्त्तिर्जलमयी मम॥६०॥
तस्यात्मा शितिकण्ठस्य सैनापत्यमुपेत्य वः ।
मोक्ष्यते सुरवन्दीनां वेणीर्वीर्य्यविभूतिभिः॥६१॥

निश्चलं (शम्भोर्मनः) (उमारूपेण) उमासौन्दर्य्येण । रूपं स्वभावे सौन्दर्य्ये च नाणके पशुशब्दयोः । ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपीति विश्वः । अयस्कान्तेन) मणिविशेषेण । कस्कादिषु चेति सकारः (१) । (लौहवत्) अयोधातुमिव । तेन तुल्यं क्रिया चेद्वतिरिति वतिप्रत्ययो ज्ञेयः (२) (आक्रष्टुं) आहर्तुं (यतध्वम्) उद्युक्ताः भवत ॥ ५९ ॥

न च गत्यन्तरमस्तीत्याह

उभे इति । (उभयोः) शम्भोर्मम च (आहितं) निषिक्तं (वीजं) तेजः (वोढुं) सोढुं (सा) उमा (वा शम्भोः) अष्टमूर्त्तेः तस्य इयं (तदीया जलमयी मूर्त्तिर्वा मम) (उभे एव क्षमे) न तृतीयेत्यर्थः । वाशब्दो द्वन्द्वार्थे नत्वन्यार्थे । एतदेवोदाहृत्य इत्थमेव व्याख्यातं गणव्याख्याने । अत्र दीपकालङ्कारः प्राकरणिकयोरुमामहेश्वरयोरप्राकरणिकयोर्ब्रह्मजलमूर्त्त्योश्च औपम्यस्य गम्यत्वात् । यथाह भोजराजः । प्रस्तुतानामप्रस्तुतानाञ्चौपम्यस्य गम्यत्वे दीपकमिति । न चेयं तुल्ययोगिता तस्याः केवलप्रस्तुतविषयत्वेन केवलाप्रस्तुतविषयत्वेन चोत्थानादिति ॥ ६० ॥

तस्येति । ( तस्य शितिकण्ठस्य ) अष्टमूर्त्तेः ( आत्मा ) पुत्त्र

---

(१) पा० ८ । ३ । ४८ सू० । (२) पा० । ५ । १ । ११५ सू० ।

इति व्याहृत्य विबुधान् विश्वयोनिस्तिरोदधे ।
मनस्याहितकर्त्तव्यास्तेऽपि देवा दिवं ययुः॥६२॥
तत्र निश्चित्य कन्दर्पमगमत् पाकशासनः ।
मनसा कार्य्यसंसिद्धित्वराद्विगुणरंहसा ॥६३॥
अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं
रतिवलयपदाङ्के चापमासज्य कण्ठे ।

इत्यर्थः । आत्मा वै पुत्त्रनामासीति श्रुतेः । (वः) युष्माकं सेनापतेर्भावः (सैनापत्यम्) । पत्यन्तपुरोहितादिभ्योयगिति यक्प्रत्ययः (१) । (उपेत्य) प्राप्य (वीर्य्यविभूतिभिः) शौर्य्यसम्पत्तिभिः (सुरवन्दीनां वेणीः) (मोक्ष्यते) विस्रंसयिष्यति तारकासुरं हनिष्यतीतिभावः॥६१

इतीति । (विश्वयोनिः) विश्वस्य योनिः कारणम् । योनिः स्त्रीणां स्थानभेदे कारणे ताम्रिके पणे इति वैजयन्ती । (विबुधान्) सुरान् (इति व्याहृत्य) अभिधाय (तिरोदधे) अन्तर्हितवान् । (ते देवा अपि) ( मनसि ) (आहितकर्त्तव्याः) आहितं कर्त्तव्यं यैस्ते तथोक्ताः सन्तः (दिवं) स्वर्गं (ययुः) प्रापुः ॥ ६२ ॥

तत्रेति । (पाकशासनः) पाको नाम कश्चिदसुरः तस्य शासनः इन्द्रः (तत्र) हरचित्ताकर्षणकृत्ये (कन्दर्पं निश्चित्य) साधकत्वेनेति शेषः । (कार्य्यसंसिद्धित्वराद्विगुणरंहसा) कार्य्यसंसिद्धौ त्वरया औत्सुक्येन द्वौ गुणौ यस्य तद् द्विगुणं द्विगावृत्तं रंहो वेगो यस्य तेन तथोक्तेन गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुष्विति वैजयन्ती । (मनसा) (अगमत्) सस्मारेत्यर्थः । गमेर्लुङ् लृदित्त्वात् च्लेरङादेशः ॥ ६३ ॥

(१) पा० ५ । १ । १२८ सू० ।

सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥ ६४ ॥

इति श्रीकालिदासकृतौ कुमारसम्भवे
महाकाव्ये ब्रह्माभिगमनो नाम
द्वितीयः सर्गः ॥

अथेति । (अथ) स्मरणानन्तरं (सः) स्मृत इत्यर्थः । पुष्पं धनुर्यस्य सः (पुष्पधन्वा) कामः । वा संज्ञायाम् इत्यनङ् (१) । ललितं त्रिषु सुन्दरमित्यमरः । (ललितयोषिद्भ्रूलताचारुशृङ्गं) ललितायाः सुन्दर्याः योषितः भ्रुवौ लते इव चारुणी शृङ्गे कोटी यस्य तत्तथोक्तं (चापम्) (रतिवलयपदाङ्के) रतिः स्मरप्रिया । रतिः स्मरप्रियायामित्यमरः । तस्य वलयपदानि कङ्कणस्थानानि अङ्कश्चिह्नं यस्य स तथोक्ते (कण्ठे) (आसज्य) लगयित्वा । चापकण्ठविशेषणाभ्यां शृङ्गारैकनिधेः त्रिभुवनैकवीरस्य शृङ्गारवीरोपकरणेषु तुल्यरसत्वं व्यज्यते । (सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः) सहचरस्य सखुर्मधोर्वसन्तस्य हस्ते न्यस्तं चूताङ्कुर एव अस्त्रं यस्य स तथोक्तः । (प्राञ्जलिः) कृताञ्जलिः सन् (शतमखं( इन्द्रम् (उपतस्थे) सङ्गतवान् । सङ्गतिकरणार्थादात्मनेपदम्(२) । अत्र स्वभावोक्तिः । स्वभावोक्तिरलङ्कारो यथावद्वस्तुवर्णनमिति । मालिनीवृत्तमेतत् । न न म य य युतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥ ६४ ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां
द्वितीयः सर्गः ।

---

(१) पा० ५ । ४ । १२३ सू० । (२) पा० वा० १ । ३ । २५ सू० ।

# तृतीयः सर्गः ।

तस्मिन् मघोनस्त्रिदशान् विहाय
सहस्रमक्ष्णां युगपत् पपात ।
प्रयोजनापेक्षितया प्रभूणां
प्रायश्चलं गौरवमाश्रितेषु ॥ १ ॥

तस्मिन्निति । (मघोनः) इन्द्रस्य (अक्ष्णां सहस्रं) त्रिरावृत्ता दश परिमाणमेषामिति (त्रिदशान्) देवान् । संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये इति बहुव्रीहिः (१) । बहुव्रीहौ संख्येये इति डच्प्रत्ययः (२) । उक्तार्थत्वात् सुचो निवृत्तिः । (विहाय) त्यक्त्वा (तस्मिन्) कामे (युगपत्पपात) सहसैवाक्षिभिरद्राक्षीदित्यादरातिशयोक्तिः । ननु सुचिरपरिचितानेकसुरपरित्यागेन भगवतो महेन्द्रस्य कथमकाण्डे तस्मिन्नेकस्मिन् पक्षपात इत्याशङ्क्यार्थान्तरं न्यस्यति । (प्रायः) भूम्ना (प्रभूणामाश्रितेषु) सेवकेषु विषये (गौरवं) आदरः (प्रयोजनापेक्षितया) कार्यार्थित्वेन हेतुना (चलं) चञ्चलम् । फलतन्त्राः प्रभवो न तु गुणतन्त्रा इति भावः ॥१॥

---

(१) पा० २ । २ । २५ सू० ।
(२) पा० ५ । ४ । ७३ सू० ।

स वासवेनासनसन्निकृष्ट-
मितो निषीदेति विसृष्टभूमिः ।
भर्त्तुः प्रसादं प्रतिनन्द्य मूर्द्ध्ना
वक्तुं मिथः प्राक्रमतैवमेनम् ॥ २ ॥

आज्ञापय ज्ञातविशेष ! पुंसां
लोकेषु यत्ते करणीयमस्ति ।
अनुग्रहं संस्मरणप्रवृत्त-
मिच्छामि संवर्द्धितमाज्ञया ते ॥ ३ ॥

स इति । (सः) कामः वासवेन) इन्द्रेण आसनस्य सिंहासनस्य सन्निकृष्टं सन्निहितम् (आसनसन्निकृष्टं) यथा तथा । शेषषष्ठ्यायं समासः । कृद्योगलक्षणया तु न लोकाव्ययनिष्ठाखल्वर्थतृणामिति षष्ठीनिषेधात्(१) (इतो निषीद) इह उपविश (इति विसृष्टभूमिः) दत्तावकाशः सन् (भर्त्तुः) स्वामिनः (प्रसादम्) अनुग्रहं (मूर्द्ध्ना प्रतिनन्द्य) सम्भाव्य (मिथः) रहसि । मिथोऽन्योन्यं रहस्यपीत्यमरः (एनं) ऐन्द्रम् (एवं) वक्ष्यमाणप्रकारेण (वक्तुं प्राक्रमत) उपक्रान्तवान् प्रोपाभ्यां समर्थाभ्याम् इत्यात्मनेपदम् (२) ॥ २ ॥

आज्ञपयेति । हे (पुंसां ज्ञातविशेष) ! ज्ञातसार ! ज्ञातपुंविशेषेत्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । (आज्ञापय) तदिति शेषः । उत्तरवाक्ये यच्छब्दप्रयोगान्न पूर्ब्बवाक्ये तच्छब्दप्रयोगनिर्बन्धः । किन्तदित्याह (लोकेषु ते) तव (यत्करणीयं) कर्त्तव्यं

(१) पा० २ । ३ । ६९ सू० । (२) पा० १ । ३ । ४२ सू० ।

केनाभ्यसूया पदकाङ्क्षिणा ते
नितान्तदीर्घैर्जनिता तपोभिः ।
यावद्भवत्याहितसायकस्य
मत्कार्मुकस्यास्य निदेशवर्त्ती ॥ ४ ॥
असम्मतः कस्तव मुक्तिमार्गं
पुनर्भवक्लेशभयात् प्रपन्नः ।

(अस्ति) । (संस्मरणप्रवृत्तं) संस्मरणेन प्रवृत्तमुत्पन्नं (ते) तव (अनुग्रहं) प्रसादं (आज्ञया) नियोगेन (संवर्द्धितं) वृद्धिं गमितं (इच्छामि) संस्मरणकृतमनुग्रहं केनचिन्नियोगेन वर्द्धय क्वचित्कर्म्मणि नियुङ्क्ष्वेत्यर्थः अन्यथा मे नास्ति परितोष इति भावः । तुमुन्नन्तपाठे खिजर्थे यत्नः कार्य्यः निलोपे सूत्राभावात्तत्र ॥ ३ ॥

न च मे किञ्चिदसाध्यमस्तीत्याह

केनेति । (पदकाङ्क्षिणा) स्वाराज्यकामेन (केन) पुंसा (नितान्तदीर्घैः) अतिप्रभूतैः (तपोभिः ते) तव (अभ्यसूया) ईर्ष्या (जनिता) तं ब्रूहीति शेषः किमर्थं (यावत्) यतः स भवद्वैरी (आहितसायकस्य) संहितवाणस्य (अस्य मत्कार्मुकस्य) निदेशे वर्त्तते इति (निदेशवर्त्ती) आज्ञावशः (भवति) अविलम्बेनैव भविष्यतीत्यर्थः । वर्त्तमानसामीप्ये वर्त्तमानवद्वेति लट् (१) ॥४॥

सम्प्रति चतुर्वर्गे मोक्षमधिकृत्याह

असम्मत इति । (तव असम्मतः कः) (पुनर्भवक्लेशभयात्) पुनर्भवः पुनरुत्पत्तिः संसार इति यावत् तत्र ये क्लेशाः जन्मजरा-

(१) पा० ३ । ३ । १३१ सू० ।

बद्धश्चिरं तिष्ठतु सुन्दरीणा-
मारेचितभ्रूचतुरैः कटाक्षैः ॥ ५ ॥
अध्यापितस्योशनसापि नीतिं
प्रयुक्तरागप्रणिधिर्द्विषस्ते ।
कस्यार्थधर्मौ वद पीड़यामि
सिन्धोस्तटावोघ इव प्रवृद्धः ॥ ६ ॥

मरणादयस्तेभ्यो भयात् (मुक्तिमार्गं) (प्रपन्नः) तं वद । यतः सोऽपि (आरेचितभ्रूचतुरैः) आरेचिताभिः एकैकशो विवर्त्तिताभिर्भ्रूभिश्चतुरैः (सुन्दरीणां कटाक्षैः) (बद्धश्चिरं तिष्ठतु) आरेचितलक्षणन्तु । स्याद्भ्रुवोर्ललिताक्षेपादेकस्या एव रेचितम् । तयोर्मूलसमुत्क्षेपं कौटिल्याद्भ्रुकुटिं विदुरिति ॥ ५ ॥

धर्म्मार्थावधिकृत्याह

अध्यापितस्येति । (उशनसा) शुक्रेण (नीतिं) नीतिशास्त्रम् (अध्यापितस्यापि) अपिशब्दाच्छुक्रशिष्याणामप्रधृष्यत्वं गम्यते । गतिबुद्धीत्यादिना द्विकर्म्मकादिङ् (१) धातोर्ण्यन्तात्प्रधाने कर्म्मणि क्तः अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्म्मण इति वचनात् । (ते द्विषः) तव शत्रोः (कस्य अर्थधर्म्मौ) (प्रयुक्तरागप्रणिधिः) प्रयुक्तः प्रहितो रागो विषयाभिलाष एव प्रणिधिर्दूतो येन सोऽहम् । प्रणिधिः प्रार्थने चर इति यादवः । (प्रवृद्ध ओघः) प्रवाहः (सिन्धोः) नद्याः (तटाविव) (पीड़यामि वद) ॥ ६ ॥

---

(१) पा० १ । ४ । ५२ सू० ।

कामेकपत्नीव्रतदुःखशीलां
लोलं मनश्चारुतया प्रविष्टाम्।
नितम्बिनीमिच्छसि मुक्तलज्जां
कण्ठे स्वयंग्राहनिषक्तबाहुम्॥ ७॥
कयासि कामिन् सुरतापराधात्
पादानतः कोपनयावधूतः।

काममधिकृत्याह

कामिति। (एकपत्नीव्रतदुःखशीलां) एकः पतिर्यस्याः सा एकपत्नी पतिव्रता। नित्यं सपत्न्यादिष्विति ङीप् (१)। तस्याः व्रतं पातिव्रत्यं तेन दुःखशीलां दुःखस्वभावां दृढ़व्रतामित्यर्थः। शीलं स्वभावे सद्वृत्त इत्यमरः। (चारुतया) सुन्दरीत्वेन हेतुना (लोलं) (मनः) त्वच्चित्तं (प्रविष्टां कां) (नितम्बिनीं) नारीं (मुक्तलज्जां) सतीं (कण्ठे स्वयंग्राहनिषक्तबाहुं) स्वयं गृह्णातीति स्वयंग्राहा। विभाषा ग्रह इति णप्रत्ययः (२)। नच जलचर एव ग्राह इति नियमः जलचरे ग्राह एवेति नियमादिति। स्वयंग्राहा च सा निषक्तबाहुश्च तां तथाभूताम् (इच्छसि) त्वदर्थे पतिव्रतामपि व्रताद्भ्रंशयिष्यामीत्यर्थः। एतच्चेन्द्रस्य पारदारिकत्वादुक्तम्। तथा च श्रुतिः। अहल्यायै जार इति॥ ७॥

त्रिविधा नायिका स्वीया परकीया साधारणी चेति तत्र परकीयां प्रत्युक्तम् इतरे प्रत्याह

कयेति। हे (कामिन्) कामुक! (सुरतापराधात्) अन्यासङ्गादित्यर्थः। (पादानत) प्रणतः सन् (कोपनया) कोपनशीलया

(१) पा० ४। १। ३५ सू०। (२) पा० ३। १। १४३ सू०

तस्याः करिष्यामि दृढ़ानुतापं
प्रवालशय्याशरणं शरीरम् ॥ ८ ॥
प्रसीद विश्राम्यतु वीर वज्रं
शरैर्मदीयैः कतमः सुरारिः ।
बिभेतु मोघीकृतबाहुवीर्य्यः
स्त्रीभ्योऽपि कोपस्फुरिताधराभ्यः ॥ ९ ॥
तव प्रसादात् कुसुमायुधोऽपि
सहायमेकं मधुमेव लब्ध्वा ।

(कया) स्त्रिया (अवधूतः) तिरस्कृतः (असि) तस्याः शरीरं दृढ़ानुतापं गाढ़पश्चात्तापम् अतएव (प्रवालशय्याशरणं) (करिष्यामि) इति ॥ ८ ॥

प्रसीदेति । हे (वीर प्रसीद) प्रसन्नो भव (वज्रं) कुलिशं (विश्राम्यतु) उदास्तामित्यर्थः । (मदीयैः शरैर्मोघीकृतबाहुवीर्य्यः) विफलीकृतभुजशक्तिः (कतमः) दैत्यदानवादिषु यः कश्चन (सुरारिः) वा बहूनां जातिपरिप्रश्ने डतमच् इति (१) डतमच् प्रत्ययः । (कोपस्फुरिताधराभ्यः) कोपेन स्फुरिताधराभ्यः (स्त्रीभ्योऽपि बिभेतु) किमु वक्तव्यं पुंभ्य इत्यर्थः सङ्कुचितः सर्व्वतो बिभेतीति भावः भीतार्थानां भयहेतुः इत्यपादानत्वात् पञ्चमी(२) ॥ ९ ॥

तवेति । किं बहुना (तव प्रसादात्) अनुग्रहात् (कुसुमायुधोऽपि) अतिदुर्व्वलास्त्रोऽप्यहम् (एकं मधुं) वसन्तम् (एव सहायं

---

(१) पा० ५ । ३ । ९३ सू० ।
(२) पा० १ । ४ । २५ सू० ।

कुर्य्यां हरस्यापि पिनाकपाणे-
र्धैर्य्यच्युतिं के मम धन्विनोऽन्ये ॥१०॥
अथोरुदेशादवतार्य्य पाद-
माक्रान्तिसम्भावितपादपीठम्।
सङ्कल्पितार्थे विवृतात्मशक्ति-
माखण्डलः काममिदं बभाषे ॥ ११ ॥
सर्व्वं सखे त्वय्युपपन्नमेत-
दुभे ममास्त्रे कुलिशं भवांश्च।

लब्ध्वा) ( पिनाकपाणेः ) पिनाकः पाणौ यस्य सः पिनाकपाणिः। प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ तस्य (हरस्यापि) हरः पिनाकी चेत्यतिदारुण इति भावः। (धैर्य्यच्युतिं) धैर्य्यहानिं (कुर्य्यां) कर्त्तुं शक्नुयामित्यर्थः। शकि लिङ् चेति शक्यार्थे लिङ् (१)। (अन्ये धन्विनः) धनुर्भृतः (मम के) न केऽपीत्यर्थः। किंशब्दः कुत्सायाम्। कुत्साप्रश्नवितर्केषु किं शब्दः इष्यत इति शाश्वतः ॥ १० ॥

अथेति। (अथ) स्मरवाक्यश्रवणानन्तरम् (आखण्डलः) सहस्राक्षः (ऊरुदेशात्पादम्) (आक्रान्तिसम्भावितपादपीठं) आक्रान्त्या आक्रमणेन सम्भावितं पादपीठं यस्मिन् तद्यथा तथा (अवतार्य्य) (सङ्कल्पितार्थे) हरचित्ताकर्षणरूपे विषये (विवृतात्मशक्तिं) कुर्य्यां हरस्यापीत्यादिना प्रकटीकृतस्वसामर्थ्यं (कामं) स्मरम् (इदं) वक्ष्यमाणं (बभाषे) ॥ ११ ॥

---

(१) पा० ३। ३। १७२ सू०।

वज्रं तपोवीर्य्यमहत्सु कुण्ठं
त्वं सर्व्वतोगामि च साधकञ्च ॥ १२ ॥
अवैमि ते सारमतः खलु त्वां
कार्य्ये गुरुण्यात्मसमं नियोक्ष्ये ।
व्यादिश्यते भूधरतामवेक्ष्य
कृष्णेन देहोद्वहनाय शेषः ॥ १३ ॥

सर्व्वमिति । हे (सखे) सखे इति सम्बोधनं गौरवार्थं (सर्व्वम् एतत् त्वयुपपन्नं) सिद्धं (मम कुलिशं) वज्रं (भवांश्च उभे अस्त्रे) तत्र (वज्रं) (तपोवीर्य्यमहत्सु) तपोवीर्य्येण तपोबलेन महत्सु प्रबलेषु (कुण्ठं) प्रतिबद्धप्रसरं (त्वम्) अस्त्रं (सर्व्वतोगामि च साधकञ्च) तापसेष्वप्यकुण्ठमित्यर्थः ॥ १२ ॥

अवैमीति । हे सखे (ते सारं) बलम् (अवैमि) वेद्मि (अतः खलु) अतएव (आत्मसमं) मत्तुल्यं त्वां (गुरुणि) महति (कार्य्ये) तस्मै हिमाद्रेरिति वक्ष्यमाणे (नियोक्ष्ये) । स्वराद्यन्तोपसृष्टादिति वक्तव्यमिति वार्त्तिकादात्मनेपदनियमः । तथाहि सारपरीक्षापूर्व्वक एव सर्व्वत्र नियोग इत्याह (कृष्णेन) विष्णुना । धरतीति धरः पचाद्यच् । भुवो धरः भूधरः तस्य भावस्तत्तां (भूधरतां) भूधरणशक्तिमित्यर्थः । (अवेक्ष्य) ज्ञात्वा (शेषः) सर्पराजः (देहोद्वहनाय) स्वदेहमुद्वोढुम् । क्रियार्थोपपदस्येत्यादिना चतुर्थी(१) । (व्यादिश्यते) नियुज्यते । शेषशायी हि भगवान् ॥ १३ ॥

---

(१) पा० २ । ३ । १४ सू० ।

आशंसता वाणगतिं वृषाङ्के
कार्य्यं त्वया नः प्रतिपन्नकल्पम्।
निबोध यज्ञांशभुजामिदानी-
मुच्चैर्द्विषामीप्सितमेतदेव ॥ १४ ॥
अमी हि वीर्य्यप्रभवं भवस्य
जयाय सेनान्यमुशन्ति देवाः।

नियोगाङ्गीकारं सिद्धवत्कृत्यमाह

आशंसतेति। (वृषाङ्के) हरे (वाणगतिं) वाणप्रसरं (आशंसता) कथयता कुर्वता हरस्यापि पिनाकपाणेरित्यादिनेति शेषः (त्वया) (नः) अस्माकं (कार्य्यं प्रतिपन्नकल्पम्) अङ्गीकृतप्रायम्। ईषदसमाप्तौ कल्पप्रत्ययः(१)। कथमेतदत आह। (इदानीम्) उच्चैरुन्नता द्विषो येषां तेषां (उच्चैर्द्विषां यज्ञांशभुजां) देवतानाम्। एतेन द्विषद्धृतयज्ञभागत्वं सूच्यते। (ईप्सितम्) आप्तुमिष्टम् (एतदेव) हरे वाणप्रयोगरूपमेव (निबोध) हरायत्तं बुध्यस्वेत्यर्थः। बुधबोधने इति धातोर्लोट्। अत्राशंसता प्रार्थयमानेनेति नाथव्याख्यानमनाथव्याख्यानम् आङ्पूर्व्वयोः शास्तिशंसत्योरिच्छार्थत्वे आत्मनेपदनियमात्। याचनार्थत्वस्याप्रमाणिकत्वात्। कुर्वता हरस्यापीत्यत्रानयोरभावादयोगाच्चेति ॥ १४ ॥

किन्तत्कार्य्यं कथं वा तस्य हरायत्तत्वं कुतो वा मदपेक्षेत्यत्राह

अमी इति। (हि) यस्मात् (अमी) देवाः (जयाय) शत्रुजयार्थं (भवस्य) हरस्य (वीर्य्यप्रभवं) तेजःसम्भूतं (सेनान्यं) सेनापतिम

(१) पा० ५। ३। ६७ सू०।

स च त्वदेकेषुनिपातसाध्यो-
ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मा ॥ १५ ॥
तस्मै हिमाद्रेः प्रयतां तनूजां
यतात्मने रोचयितुं यतस्व ।
योषित्सु तद्वीर्यनिषेकभूमिः
सैव क्षमेत्यात्मभुवोपदिष्टम् ॥ १६ ॥

(उशन्ति) कामयन्ते वशकान्ताविति धातोर्लट् । ब्रह्मणां सद्योजातादिमन्त्राणाम् अङ्गानां हृदयादिमन्त्राणां भूः स्थानं (ब्रह्माङ्गभूः) कृतमन्त्रन्यास इत्यर्थः । (ब्रह्मणि) निजतत्त्वे । वेदस्तत्त्वं तपो ब्रह्मेत्युभयत्राप्यमरः । (योजितात्मा) नियमितचित्तः मन्त्रन्यासपूर्व्वकं ब्रह्म ध्यायन्नित्यर्थः । (सः भवश्च) (त्वदेकेषुनिपातसाध्यः) त्वदेकेषोस्तवैकवाणस्य निपातेन साध्यः अनन्यसाध्योऽयमस्मिन्नवसर इति भावः ॥ १५ ॥

तस्मा इति (यतात्मने) नियतचित्ताय (तस्मै) भवाय । रुच्यर्थानां प्रीयमाण इति संप्रदानत्वाच्चतुर्थी(१) । (प्रयतां) (हिमाद्रेः तनूजां) पार्व्वतीं (रोचयितुं यतस्व) भवितव्यस्वात्र पार्व्वत्यैवेत्याह (योषित्सु) स्त्रीषु मध्ये । यतश्च निर्द्धारणमिति सप्तमी(२) । (क्षमा) शक्ता (तद्वीर्य्यनिषेकभूमिः) तस्य हरस्य वीर्य्यं रेतस्तस्य निषेकः क्षरणं तस्य भूमिः क्षेत्रं (सा) (पार्व्वती (एव इति आत्मभुवा) ब्रह्मणा (उपदिष्टम्) उभे एव क्षमे वोढुमित्यादिनोक्तमित्यर्थः ॥ १६ ॥

---

(१) पा० १ । ४ । ३३ सू० । (२) पा० २ । ३ । ४१ सू० ।

गुरोर्न्नियोगाच्च नगेन्द्रकन्या
स्थाणुं तपस्यन्तमधित्यकायाम्।
अन्वास्त इत्यप्सरसां मुखेभ्यः
श्रुतं मया मत्प्रणिधिः स वर्गः॥ १७॥
तद्गच्छ सिद्धै कुरु देवकार्य्य-
मर्थोऽयमर्थान्तरभाव्य एव।
अपेक्षते प्रत्ययमुत्तमं त्वां
वीजाङ्कुरः प्रागुदयादिवाम्भः॥ १८॥

सापीदानीं सन्निकृष्टैव तस्येत्याह

गुरोरिति। (नगेन्द्रकन्या) पार्व्वती च (गुरोः) पितुः (नियोगात्) शासनात् (अधित्यकायां) हिमाद्रेरूर्द्ध्वभूमौ। भूमिरूर्द्ध्व-मधित्यकेत्यमरः। उपाधिभ्यां त्यकन्नासन्नारूढ़योरिति त्यकन्-प्रत्ययः (१)। (तपस्यन्तं) तपश्चरन्तम्। कर्म्मणोरोमन्थतपोभ्यां वर्त्तिचरोरिति क्यङ् प्रत्ययः ततः शतृप्रत्ययः (२) (स्थाणुं) रुद्रम् (अन्वास्ते) उपास्त इत्यर्थः। (इति) इदं (मया अप्सरसां मुखेभ्यः श्रुतं) न चैतदैतिह्यमात्रमित्याह (स वर्गः) सोऽप्सरसाङ्गणः (मत्प्र-णिधिः) मम गूढ़चरः। प्रणिधिः प्रार्थने चर इति यादवः॥१७॥

तदिति। (तत्) तस्मात् (सिद्धै) कार्य्यसिद्धार्थं (गच्छ देव-कार्य्यं कुरु) आशिषि लोट्। (अयमर्थः) प्रयोजनम् (अर्थान्तर-भाव्यः) कारणान्तरसाध्यः (एव) तच्च कारणान्तरं पार्व्वतीसन्निधा-नमिति भावः। अर्थः प्रकारे विषये वित्तकारणवस्तुषु। अभि-

(१) पा० ५। २। ३४ सू०। (२) पा० ३। १। १५ सू०।

तस्मिन् सुराणां विजयाभ्युपाये
तवैव नामास्त्रगतिः कृती त्वम्।
अप्यप्रसिद्धं यशसे हि पुंसा-
मनन्यसाधारणमेव कर्म्म॥ १९ ॥

सुराः समभ्यर्थयितार एते
कार्य्यं त्रयाणामपि विष्टपानाम्।
चापेन ते कर्म्म नचातिहिंस्र-
महोवतासि स्पृहणीयवीर्य्यः॥ २० ॥

धैर्य्ये च शब्दानां वृत्तौ चापि प्रयोजने इति विश्वः। तथापि वीजसाध्योऽङ्कुरः (वीजाङ्कुरः) (उदयात्) उत्पत्तेः (प्राक् अम्भ इव) (त्वामुत्तमं प्रत्ययं) कारणम् (अपेक्षते) प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुष्वित्यमरः। तस्मादस्मिन्नर्थे तव चरमसहकारित्वादनन्यसाध्योऽयमर्थ इति भावः॥ १८ ॥

तस्मिन्निति। (सुराणां विजयाभ्युपाये) जयस्योपायभूते (तस्मिन्) हरे (अस्त्रगतिः) अस्त्रप्रसरः (तवैव नाम) नामेति सम्भावनायाम्। अन्येषान्तु सम्भावनापि नास्तीति भावः अतः (त्वं कृती) कृतमस्यास्तीति कृती कृतार्थः। तथाहि (अप्रसिद्धमप्यनन्यसाधारणमेव कर्म्म पुंसां यशसे हि) इदन्तु प्रसिद्धमसाधारणञ्चेति अतियशस्करमिति भावः॥ १९ ॥

प्रोत्साहनार्थं स्तौति

सुरा इति। (एते सुराः समभ्यर्थयितारः) याचितारः (कार्य्यं) प्रयोजनं त्रयाणां पिष्टपानामपि) सम्बन्धि सर्वलोकार्थमित्यर्थः।

मधुश्च ते मन्मथ ! साहचर्य्या-
दसावनुक्तोऽपि सहाय एव।
समीरणो नोदयिता भवेति
व्यादिश्यते केन हुताशनस्य ॥ २१ ॥
तथेति शेषामिव भर्त्तुराज्ञा-
मादाय मूर्द्ध्ना मदनः प्रतस्थे।

(कर्म्म ते) तव (चापेन) न तु दैन्येनेति भावः। (अतिहिंस्रं) अति-घातुकं (च न) अहोवत) इति सम्बोधने। अहोवतानुकम्पायां खेदे सम्बोधनेऽपि चेति विश्वः। अथवा अहो आश्चर्यं वत इति आमन्त्रणे सन्तोषे चेति वतामन्त्रणसन्तोषखेदानुक्रोशविस्मय इति विश्वः। (स्पृहणीयवीर्य्योऽसि) आश्चर्य्यविक्रमोऽसि। आश्चर्य्यं स्पृहणीयञ्चेति नानार्थकोषः॥ २०॥

मधुश्चेति। हे (मन्मथ! असौ मधुश्च) वसन्तोऽपि (ते साहचर्य्यात्) सहचरत्वादेव (अनुक्तोऽपि) (अप्रेरितोऽपि (सहायः) सहकारी (एव) तथाहि समीरणः) वायुः (हुताशनस्य) अग्नेः (नोदयिता) प्रेरकः (भवेति) (केन व्यादिश्यते) अत्र मधुसमी-रणयोरुक्तिमन्तरेण सहायताकरणं सामान्यधर्म्मः स च वाक्यद्वये वस्तुप्रतिवस्तुभावेन पृथक् निर्दिष्ट इति प्रतिवस्तूपमालङ्कारोऽयम्। तदुक्तं। यत्र सामान्यनिर्द्देशः पृथग्वाक्यद्वये यदि। गम्यौपम्या-श्रिता सा स्यात्प्रतिवस्तूपमा मतेति॥ २१॥

तथेति। (तथास्त्विति) भर्त्तुः) स्वामिनः (शेषामिव) प्रसाद-दत्तां मालामिव। प्रसादान्निजनिर्म्माल्यदाने शेषेति कीर्त्तितेति विश्वः। माल्याक्षतादिदाने स्त्री शेषेति वैजयन्तीकोशवौ। (आज्ञां

ऐरावतास्फालनकर्कशेन
हस्तेन पस्पर्श तदङ्गमिन्द्रः ॥ २२ ॥
स माधवेनाभिमतेन सख्या
रत्या च साशङ्कमनुप्रयातः।
अङ्गव्ययप्रार्थितकार्यसिद्धिः
स्थाण्वाश्रमं हैमवतं जगाम ॥ २३ ॥

मूर्ध्नी आदाय) शिरसा गृहीत्वा (मदनः प्रतस्थे) समवप्रविभ्यः स्थः इत्यात्मनेपदम्(१)। )इन्द्रः) (ऐरावतास्फालनकर्कशेन) ऐरावतास्फालनेन प्रोत्साहनार्थेन ताडनेन कर्कशेन परुषेण (हस्तेन तदङ्गं) मदनदेहं (पस्पर्श) हस्तस्पर्शेन सम्भावयामासेत्यर्थः। शेषामिवाज्ञामित्यत्र साधकबाधकप्रमाणाभावादुपमोत्प्रेक्षयोः सन्देहसङ्कर इति। यदि भर्त्रा शेषापि दत्ता तदा तामाज्ञामिवेत्युपमा। अथ न दत्ता तर्हि शेषात्वेनोत्प्रेक्षिता। शेषादानन्तु सन्दिग्धमिति ॥ २२ ॥

स इति। (सः) मदनः (अभिमतेन) प्रियेण (सख्या) सुहृदा (माधवेन) वसन्तेन (रत्या) स्वदेव्या (च साशङ्कं) सङ्कटमापतितमिति सभयं (अनुप्रयातः) अनुगतः सन् तथा (अङ्गव्ययप्रार्थितकार्यसिद्धिः) अङ्गस्य व्ययेनापि प्रार्थिता कार्यसिद्धिर्येन स तथोक्तः। शीर्त्त्वा म्हत्वापि सर्व्वथा देवकार्यं साधयिष्यामीति कृतनिश्चयः सन्नित्यर्थः। (हैमवतं) हिमवति भवं (स्थाण्वाश्रमं) स्थाणोः रुद्रस्याश्रमं (जगाम) ॥ २३ ॥

(१) पा० १।३।२२ सू०।

तस्मिन् वने संयमिनां मुनीनां
तपःसमाधेः प्रतिकूलवर्त्ती।
सङ्कल्पयोनेरभिमानभूत-
मात्मानमाधाय मधुर्जजृम्भे॥ २४॥
कुवेरगुप्तां दिशमुष्णरश्मौ
गन्तुं प्रवृत्ते समयं विलङ्घ्य।

तस्मिन्निति। (तस्मिन् वने) स्थाणवाश्रमे (संयमिनां) समाधिमतां (मुनीनाम्) (तपःसमाधेः) तपसः समाधेरेकाग्रतायाः प्रतिकूलं वर्त्तत इति (प्रतिकूलवर्त्ती) विरोधी (मधुः) वसन्तः (सङ्कल्पयोनेः) मनोभवस्य (अभिमानभूतं) गर्व्वहेतुभूतमित्यर्थः। कार्य्यकारणयोरभेदोपचारः। (आत्मानं) निजस्वरूपम् (आधाय) सन्निधाप्य (जजृम्भे) प्रादुर्बभूव वसन्तधर्म्मान् प्रवर्त्तयामासेत्यर्थः ॥२४॥

वसन्तधर्म्मानाह

कुवेरेति। (उष्णरश्मौ) सूर्य्ये साहसिके च नायके (समयं) दक्षिणायनकालं सङ्गमकालञ्च (विलङ्घ्य) अकाण्डे व्यतिक्रम्य (कुवेरगुप्तां) धनपतिपालितां कुत्सितशरीरेण केनचिद्रक्षिताञ्च (दिशं) उदीचीं स्त्रीलिङ्गाद्दिशां काञ्चिन्नायिकाञ्च (गन्तुं) चलितुं सङ्क्रान्तञ्च (प्रवृत्ते) सति (दक्षिणा दिक्) दाक्षिण्यवती नायिका च (मुखेन) अग्रभागेण वक्त्रेण च। वहतीति वहः पचाद्यच्। गन्धस्य वहं (गन्धवहम्) अनिलं व्यलीकेन दुःखेन निश्वासम् (व्यलीकनिश्वासमिव) दुःखे वैलक्ष्ये व्यलीकमप्रियकार्य्यवस्तुनोरिति वैजयन्ती। (उत्ससर्ज) प्रवर्त्तयामास स्वभर्त्तरि समयोल्लङ्घनेन पराङ्गनासङ्गतिं प्रवृत्ते सति स्त्रियो दाक्षिण्यादकिञ्चिद्दराः दुःखान्निश्वसन्तीति

दिक् दक्षिणा गन्धवहं मुखेन
व्यलीकनिश्वासमिवोत्ससर्ज ॥ २५ ॥
असूत सद्यः कुसुमान्यशोकः
स्कन्धात् प्रभृत्येव सपल्लवानि।
पादेन नापैक्षत सुन्दरीणां
सम्पर्कमाशिञ्जितनूपुरेण ॥ २६ ॥

भावः। उत्तरायणे सति मलयानिलाः प्रवृत्ता इति वाक्यार्थः। अत्रोत्प्रेक्षालङ्कारः। नच समासोक्तिरेवेयमुत्प्रेक्षानुप्रविष्टेति शङ्कितव्यं केवलविशेषणसामर्थ्यादेवाप्रस्तुतप्रतीतौ सोक्तिष्ठते अत्र तु दक्षिणेति विशेष्यसामर्थ्यादपि नायिका प्रतीयते। नच श्लेष एव प्रकृताप्रकृतविषयः उभयश्लेषे श्लिष्टविशेष्यानङ्गीकारात्। तस्माच्छब्दशक्तिमूलोऽयं ध्वनिः। सच व्यलीकनिश्वासरूपचेतनधर्मसम्भावनार्थं दक्षिणस्या दिशो नायिकया सहाभेदमापादयन् अभेदलक्षणातिशयोक्त्युपजीविनीं निश्वासमिवेति वाच्योत्प्रेक्षां निर्वहतीति वाच्यसिद्ध्यङ्गभूत इत्युत्पश्यामः ॥ २५ ॥

असूतेति। (अशोकः) वृक्षविशेषः (सद्यः) (स्कन्धात्) प्रकाण्डात् (प्रभृत्येव) स्कन्धादारभ्येत्यर्थः। भाष्यकारवचनात्प्रभृतियोगे पञ्चमीति कैयटः। भाष्यञ्च मूलात्प्रभृत्यग्रात् वृक्षांश्छिन्दन्तीति कार्त्तिक्याः प्रभृति आग्रहायणी मास इत्यादि। (सपल्लवानि कुसुमानि) (असूत) उभयमप्यजीजनदित्यर्थः। (आशिञ्जितनूपुरेण) आशिञ्जितो नूपुरो यस्य तेन शिञ्जधातोरकर्म्मकाद्गत्यर्थाकर्म्मकेत्यादिना कर्त्तरि क्तः (१)। (सुन्दरीणां पादेन सम्पर्कं) ताड़नं

---

(१) पा० ३। ४। ७२ स।

सद्यः प्रवालोद्गमचारुपत्त्रे
नीते समाप्तिं नवचूतवाणे।
निवेशयामास मधुर्द्विरेफान्
नामाक्षराणीव मनोभवस्य ॥ २७ ॥
वर्णप्रकर्षे सति कर्णिकारं
दुनोति निर्गन्धतया स्म चेतः।

(नापैक्षत) "सनूपुररवेण स्त्रीचरणेनाभिताड़नम्। दोहदं यदशोकस्य ततः पुष्पोद्गमो भवे"दिति। तथाहि पादाहतः प्रमदया विकसत्यशोकः शोकं जहाति वकुलो मुखशीधुसिक्तः। आलोकितः कुरुवकः कुरुते विकाशमालोड़ितस्तिलक उत्कलिको विभाति ॥ २६ ॥

सद्य इति। (मधुः) वसन्त एवेषुकारः (प्रवालोद्गमचारुपत्त्रे) प्रवालोद्गमाः पल्लवाङ्कुरा एव चारूणि पत्राणि पक्षाः यस्य यस्मिन्। पत्रं वाहनपक्षयोरित्यमरः। नवं चूतं चूतकुसुमं तदेव वाणः तस्मिन्(नवचूतवाणे) (समाप्तिं नीते) सति (सद्यः) (मनोभवस्य) धन्विनः (नामाक्षराणीव) (द्विरेफान्) भ्रमरान् (निवेशयामास) निदधौ। अत्र प्रवालपत्त्रं इत्याद्येकदेशविवर्त्तिरूपकं मधोरिषुकारत्वं रूपयत् नामाक्षराणीवेत्युत्प्रेक्षायां निमित्तमित्येकदेशविवर्त्तिरूपकोत्थापितेयमुत्प्रेक्षा ॥ २७ ॥

वर्णेति। (कर्णिकारं) कर्णिकारकुसुमम्। अवयेव च प्राण्योषधिवृक्षेभ्यः(१) इत्युत्पन्नस्य तद्धितस्य पुष्पफलमूलेषु बहुलमिति लुक्(२) एवमन्यत्रापि द्रष्टव्यम्। वर्णप्रकर्षे) वर्णोत्कर्षे (सति)

(१) पा० ४। ३। १३५ सू०। (२) पा० ४। ३। १६६ सू०।

प्रायेण सामग्र्यविधौ गुणानां
पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥ २८ ॥
बालेन्दुवक्राण्यविकाशभावा-
द्बभुः पलाशान्यतिलोहितानि।
सद्यो वसन्तेन समागतानां
नखक्षतानीव वनस्थलीनाम् ॥ २९ ॥

अपि (निर्गन्धतया) हेतुना (चेतो दुनोति स्म) पर्यंतापयत्। लट् स्म इति भूतार्थे (१) लट्। तथाहि (प्रायेण विश्वसृजः) विधातुः (प्रवृत्तिः गुणानां सामग्र्यविधौ) साकल्यसम्पादनविषये (पराङ्मुखी) सर्वत्रापि वस्तुनि किञ्चिद्वैकल्यं सम्पादयति यथा चन्द्रे कलङ्कः। अतः कर्णिकारेऽपि नैर्गन्ध्यं युज्यत इति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥२८॥

बालेन्विति। (अविकाशभावात्) निर्विकाशत्वान्मुकुलभावाद्धेतोः (बालेन्दुवक्राणि) बालेन्दुरिव वक्राणि (अतिलोहितानि) अतिरक्तानि (पलाशानि) किंशुकपुष्पाणि। पलाशे किंशुकः पर्ण इत्यमरः। (वसन्तेन) पुंसा (समागतानां) सङ्गतानां (वनस्थलीनां) स्त्रीणां (सद्यः) सद्योदत्तानि पुराणेष्वतिलौहित्याभावादिति भावः। (नखक्षतानीव बभुः) अत्र वसन्तस्य वनस्थलीनाञ्च विशेषणसाधारण्यान्नायकव्यवहारप्रतीतेः समासोक्तिस्तावदस्ति। नखक्षतानीवेति जातिस्वरूपोत्प्रेक्षा वक्रत्वलौहित्यगुणनिमित्ता जागर्त्ति। सा च नायकव्यवहाराश्रितसमासोक्तिगर्भिण्येवोत्तिष्ठत इत्युभयोरेककालतैव विशेषणसामर्थ्यादप्रस्तुतस्य गम्यत्वे समासोक्तिरिष्यत इति हि लक्षणम् ॥ २९ ॥

(१) पा० ३।२।११८ सू०।

लग्नद्विरेफाञ्जनभक्तिचित्रं
मुखे मधुश्रीस्तिलकं प्रकाश्य।
रागेण बालारुणकोमलेन
चूतप्रवालोष्ठमलञ्चकार॥ ३०॥

मृगाः पियालद्रुममञ्जरीणां
रजःकणैर्विघ्नितदृष्टिपाताः।
मदोद्धताः प्रत्यनिलं विचेरु-
र्वनस्थलीर्मर्म्मरपत्रमोक्षाः॥ ३१॥

लग्नेति। (मधुश्रीः) वसन्तलक्ष्मीः (लग्नद्विरेफाञ्जनभक्तिचित्रं) लग्नद्विरेफा एव अञ्जनभक्तयः कज्जलरचनास्ताभिश्चित्रं चित्रवर्णं (तिलकं) पुष्पविशेषमेव तिलकं विशेषकं मुखं प्रारम्भः तस्मिन्नेव (मुखे) वक्त्रे (प्रकाश्य) प्रकटय्य (बालारुणकोमलेन) बालार्कसुन्दरेण (रागेण) अरुणिम्ना तेनैव लाक्षारागेण चूतप्रवाल एवौष्ठस्तं (चूतप्रवालोष्ठम् अलञ्चकार) प्रसाधयामास। अत्र रूपकालङ्कारः॥ ३०॥

मृगा इति। (पियालद्रुममञ्जरीणां) पियालद्रुमा राजादनवृक्षाः। राजादनं पियालः स्यादित्यमरः। तेषां मञ्जर्यः तासां (रजःकणैः) (विघ्नितदृष्टिपाताः) विघ्निताः सञ्जातविघ्नाः दृष्टीनां पाताः प्रभा येषान्ते तथोक्ताः (मदोद्धता मृगाः प्रत्यनिलम्) अनिलाभिमुखं (मर्म्मरपत्रमोक्षाः) मर्म्मराः मर्म्मरशब्दवन्तः पत्रमोक्षाः जीर्णपर्णपाताः यासु ताः (वनस्थलीर्विचेरुः) वनप्रदेशेषु चरन्ति स्म। देशकालाध्वगन्तव्याः कर्म्मसंज्ञा ह्यकर्म्मणामिति चरतेः सकर्म्मत्वम्॥ ३१॥

चूताङ्कुरास्वादकषायकण्ठः
पुंस्कोकिलो यन्मधुरं चुकूज।
मनस्विनीमानविघातदक्षं
तदेव जातं वचनं स्मरस्य॥ ३२॥

हिमव्यपायाद् विशदाधराणा-
मापाण्डुरीभूतमुखच्छवीनाम्।
स्वेदोद्गमः किम्पुरुषाङ्गनानां
चक्रे पदं पत्त्रविशेषकेषु॥ ३३॥

चूतेति। (चूताङ्कुरास्वादकषायकण्ठः) चूताङ्कुराणामास्वादेन कषायकण्ठो रक्तकण्ठः। सुरभावपथे रक्ते कषाय इति केशवः। पुमान् कोकिलः (पुंस्कोकिलः) पुंग्रहणं प्रागल्भ्यद्योतनार्थम्। (मधुरं चुकूज) इति (यत्) तत्कूजनमेव (मनस्विनीमानविघात-दक्षं) मनस्विनीनां मानविघाते रोषनिरासे दक्षं (स्मरस्य) (वचनं) मानं त्यजतेत्याज्ञावचनं (जातम्) कोकिलकूजितश्रवणानन्तरं स्मराज्ञप्ता इव मानं जहुरित्यर्थः॥ ३२॥

हिमेति। (हिमव्यपायाद्विशदाधराणां) हिमस्य व्यपायात् अपगमात् विशदाः नीरुजाः अधरा ओष्ठाः यासां तासाम् (आपाण्डरीभूतमुखच्छवीनां) कुङ्कुमपरिहारादिति भावः। (किम्पुरुषाङ्गनानां पत्त्रविशेषकेषु) पत्त्ररचनासु (स्वेदोद्गमः पदं चक्रे) घर्मोदयात् स्वेदोदयोऽभूदित्यर्थः। विशदाधरत्वं मधूच्छिष्टराहित्यादिति भावः। हेमन्तेषु नार्यो बिम्बोष्ठेषु मधूच्छिष्टं शीतभयाद्दधतीति प्रसिद्धम्॥ ३३॥

तपस्विनः स्थाणुवनौकसस्ता-
माकालिकीं वीक्ष्य मधुप्रवृत्तिम् ।
प्रयत्नसंस्तम्भितविक्रियाणां
कथञ्चिदीशा मनसां बभूवुः ॥ ३४ ॥

तं देशमारोपितपुष्पचापे
रतिद्वितीये मदने प्रपन्ने ।
काष्ठागतस्नेहरसानुविद्धं
द्वन्द्वानि भावं क्रियया विवव्रुः ॥ ३५ ॥

तपस्विन इति । स्थाणुवनौकसः) स्थाणोर्वनमोको येषां ते (तपस्विनः) तत्रत्याः मुनयः । समानकालः आद्यन्तावस्याः (आकालिकीम्) अकालभवत्वात् उत्पत्त्यनन्तरविनाशिनीमित्यर्थः। आकालिकादाद्यन्तवचन इति समानकालादिकट्प्रत्ययः (१) प्रकृतेरकाल आदेशश्च निपातः। ठिड्ढाणञित्यादिना ङीप् (२)। केचिदकालाद्देहाध्यात्मादित्वाड्भवार्थे ठगित्याहुः। (तामाकालिकीं मधुप्रवृत्तिं वीक्ष्य) (प्रयत्नसंस्तम्भितविक्रियाणां) प्रयत्नेन संस्तम्भितविक्रियाणां निरुद्धविकाराणां (मनसां कथञ्चिदीशाः) नियन्तारः (बभूवुः) ॥ ३४ ॥

तमिति । (आरोपितपुष्पचापे) आरोपितमधिज्यं कृतं पुष्पचापं येन तस्मिन् (रतिद्वितीये) रतिर्द्वितीया यस्य तस्मिन् रतिसहाये (मदने तं देशं) स्थाण्वाश्रमं (प्रपन्ने) प्राप्ते सति (द्वन्द्वानि) स्थावराणि जङ्गमानि च मिथुनानि (काष्ठागतस्नेहरसानुविद्धं) काष्ठा उत्कर्षः। काष्ठोत्कर्षे स्थितौ दिशीत्यमरः। ताङ्गतो यः

(१) पा० ५।१।११४ सू०। (२) पा० ४।१।१५ सू०

मधु द्विरेफः कुसुमैकपात्रे
पपौ प्रियां स्वामनुवर्त्तमानः।
शृङ्गेण च स्पर्शनिमीलिताक्षीं
मृगीमकण्डूयत कृष्णसारः॥ ३६॥
ददौ रसात् पङ्कजरेणुगन्धि
गजाय गण्डूषजलं करेणुः।

स्नेहः इष्टसाधननिबन्धनः प्रेमापरनामा ममताभिमानः। प्रेमा ना प्रियता हार्दं प्रेम स्नेह इत्यमरः। स एव रसः तेनानुविद्धं सम्पृक्तं (भावं) रत्याख्यं शृङ्गारभावं (क्रियया) कार्य्यभूतया चेष्टया (विवव्रुः) प्रकटीचक्रुः शृङ्गारचेष्टाः प्रावर्त्तन्त इत्यर्थः॥३५॥

ताश्चेष्टा आह मध्वित्यादिभिश्चतुर्भिः

मध्विति (द्वौ रेफौ वर्णविशेषौ यस्य सः (द्विरेफः) भ्रमरः। उपचारात्तदर्थोऽपि द्विरेफ उच्यते। यथाह कैयटः। शब्दधर्म्मेणा-र्थस्य व्यपदेशो दृश्यते यथा भ्रमरशब्दस्य द्विरेफत्वात् द्विरेफो-भ्रमरः। (कुसुमैकपात्रे) कुसुममेवैकं साधारणं पात्रं तस्मिन् (मधु) मकरन्दम्। मधु मद्ये पुष्परसे इति विश्वः। (स्वां प्रियां) भृङ्गीं (अनुवर्त्तमानः) अनुसरन् (पपौ) तत्पीतशेषं पपावित्यर्थः कृष्णश्चासौ शारः शबलश्च (कृष्णशारः) हरिणमृगः (च)। वर्णो-वर्णेनेति समासः (१)। (स्पर्शनिमीलिताक्षीं) स्पर्शेण स्पर्शसुखेन निमीलिताक्षीं (मृगीं शृङ्गेण अकण्डूयत) कषितवान्। कण्ड्वा-दिभ्यो यगिति यक् ततः कर्त्तरि लङ् (२)॥ ३६॥

ददाविति। (रसात्) अतिरागात् (करेणुः) करिणी। करेणुरिभ्यां स्त्री नेभ इत्यमरः। पङ्काज्जायत इति पङ्कजं तस्य रेणुः

---

(१) पा० २। १। ६९ सू०। (२) पा० ३। १। २७ सू०।

अर्द्धोपभुक्तेन बिसेन जायां
सम्भावयामास रथाङ्गनामा ॥ ३७ ॥
गीतान्तरेषु श्रमवारिलेशैः
किञ्चित्समुच्छ्वासितपत्त्रलेखम्।
पुष्पासवाघूर्णितनेत्रशोभि
प्रियामुखं किम्पुरुषश्चुचुम्बे ॥ ३८ ॥
पर्य्याप्तपुष्पस्तवकस्तनाभ्यः
स्फुरत्प्रवालोष्ठमनोहराभ्यः।

पङ्कजरेणुः पङ्कजरेणुगन्धोऽस्यास्तीति (पङ्कजरेणुगन्धि गण्डूषजलं) मुखान्तर्धृतजलं (गजाय ददौ) (रथाङ्गनामा) चक्रवाकः (अर्द्धोपभुक्तेन) अर्द्धं यथा तथा उपभुक्तेन अर्द्धजग्धेन (बिसेन जायां सम्भावयामास) स्वजग्धशेषं ददावित्यर्थः ॥ ३७ ॥

गीतेति। (किम्पुरुषः) किन्नरः (श्रमवारिलेशैः) स्वेदोदबिन्दुभिः (किञ्चित् समुच्छ्वासितपत्त्रलेखं) किञ्चिदीषत्समुच्छ्वासिताः विश्लेषिताः पत्त्रलेखाः यस्य तत् (पुष्पासवाघूर्णितनेत्रशोभि) पुष्पाणामासवः मद्यं पुष्पासवः पुष्पोद्भवमद्यमित्यर्थः वसन्ते मधुकस्य सम्भवात्। पुष्पवासितमिति केचित्। तेनाघूर्णिताभ्यां उद्भ्रान्ताभ्यां नेत्राभ्यां शोभत इति तथोक्तं (प्रियामुखं) (गीतान्तरेषु) गीतमध्येषु (चुचुम्बे) ॥ ३८ ॥

पर्य्याप्तेति। (पर्य्याप्तपुष्पस्तवकस्तनाभ्यः) पर्य्याप्ताः समग्राः पुष्पस्तवका एव स्तनाः यासां ताभ्यः स्वाङ्गाच्चोपसर्जनादसंयोगोपधादिति विकल्पात् न ङीप् (१)। (स्फुरत्प्रवालोष्ठमनोह-

(१) पा० ४।१।५४ सू०।

लतावधूभ्यस्तरवोऽप्यवापु-
र्विनम्रशाखाभुजबन्धनानि॥ ३९॥
श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्
हरः प्रसंख्यानपरो बभूव।
आत्मेश्वराणां न हि जातु विघ्नाः
समाधिभेदप्रभवो भवन्ति॥ ४०॥
लतागृहद्वारगतोऽथ नन्दी
वामप्रकोष्ठार्पितहेमवेत्रः।

राभ्यः) स्फुरन्तः प्रबालाः पल्लवा एव ओष्ठास्तै र्मनोहराभ्यः (लता-वधूभ्यः) लता एव वध्वः ताभ्यः सकाशात् (तरवोऽपि) लिङ्गादेव पुस्त्वं गम्यते। (विनम्रशाखाभुजबन्धनानि) विनम्राः शाखा एव भुजास्तैर्बन्धनानि (अवापुः) ताभिरालिङ्गिता इत्यर्थः। स्थावराणामपि मदनविकारोऽभूत् किमुतान्येषामिति भावः। एतच्च तरुलतानामपि चेतनत्वादुक्तम्। यथाह मनुः। अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विता इति (१अ०४९श्लो०)। अत्र रूप-कालङ्कारः॥ ३९॥

श्रुतेति। (अस्मिन् क्षणे) वसन्ताविर्भावकाले भगवान् (हरः) (श्रुताप्सरोगीतिरपि) दिव्याङ्गनागानमाकर्णयन्नपीत्यर्थः। (प्रसं-ख्यानपरः) आत्मानुसन्धानपरः (बभूव) (हि) तथाहि (आत्मे-श्वराणां) आत्मनश्चित्तस्येश्वराणां नियन्तॄणां वशिनामित्यर्थः। विहन्यन्ते एभिरिति (विघ्नाः) प्रत्यूहाः। घञर्थे कप्रत्ययः। (जातु) कदाचिदपि (समाधिभेदप्रभवाः) समाधिभेदे समाधि-भञ्जने प्रभवाः समर्थाः (न भवन्ति)॥ ४०॥

मुखार्पितैकाङ्गुलिसंज्ञयैव
मा चापलायेति गणान् व्यनैषीत्॥ ४१ ॥
निष्कम्पवृक्षं निभृतद्विरेफं
मूकाण्डजं शान्तमृगप्रचारम्।
तच्छासनात् काननमेव सर्वं
चित्रार्पितारम्भमिवावतस्थे॥ ४२ ॥

लतेति। (अथ) (लतागृहद्वारगतः) लतागृहद्वारं गतः (वामप्रकोष्ठार्पितहेमवेत्रः) वामे प्रकोष्ठे अर्पितहेमवेत्रः धारितहेमदण्डः (नन्दी) नन्दिकेश्वरः। नन्दी भृङ्गिरिटस्तण्डुनन्दिनौ नन्दिकेश्वरे इति कोषः। (मुखार्पितैकाङ्गुलिसंज्ञयैव) मुखे अर्पितायाः सरोषविस्मयस्तिमितावलोकं निहितायाः एकस्याः अङ्गुलेस्तर्ज्जन्याः संज्ञया सूचनयैव। संज्ञा स्याच्चेतना नाम हस्ताद्यैरर्थसूचनेत्यमरः। (गणान्) प्रथमान् (चापलाय) चापलं कर्तुं (मा) भवत (इति) क्रियार्थोपपदस्य इत्यादिना चतुर्थी। (व्यनैषीत्) शिक्षितवान्॥ ४१ ॥

न केवलं गणा एव विनीताः किन्तु जरायुजादिचतुर्विधं प्राणिजातमपीत्याह

निष्कम्पेति। (निष्कम्पवृक्षं) इदमुद्भिज्जोपलक्षणम्। (निभृतद्विरेफं) निश्चलभृङ्गं स्वेदजोपलक्षणमेतत्। (मूकाण्डजं) निःशब्दपक्षिसरीसृपादिकम् एतेन अण्डजजातिरुक्ता। (शान्तमृगप्रचारं) जरायुजोपलक्षणमेतत्। (सर्वमेव काननं तच्छासनात्) नन्दीश्वराज्ञया (चित्रार्पितारम्भं) चित्रलिखितारम्भम् (इवावतस्थे) मृगाद्याः जरायुजाः। स्वेदजाः कृमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः। उद्भिदस्तरुगुल्माद्या इत्यमरः॥ ४२ ॥

दृष्टिप्रपातं परिहृत्य तस्य
कामः पुरःशुक्रमिव प्रयाणे।
प्रान्तेषु संसक्तनमेरुशाखं
ध्यानास्पदं भूतपतेर्विवेश॥ ४३॥

स देवदारुद्रुमवेदिकायां
शार्दूलचर्म्मव्यवधानवत्याम्।
आसीनमासन्नशरीरपात-
स्त्रियम्बकं संयमिनं ददर्श॥ ४४॥

दृष्टीति। (कामः प्रयाणे) यात्रायां पुरोगतः शुक्रो यस्मिन् देशे तं (पुरःशुक्रं) देशं (इव) प्रतिशुक्रं प्रतिबुधं प्रत्यङ्गारकमेव च। अपि शक्रसमो राजा हतसैन्यो निवर्त्तत इति प्रतिषेधात्। (तस्य दृष्टिप्रपातं) दृग्विषयं (परिहृत्य प्रान्तेषु) पार्श्वदेशेषु (संसक्तनमेरुशाखं) संसक्ताः अन्योन्यसंसृष्टाः नमेरूणां सुरपुन्नागानां शाखाः यस्य तत्। तिरोधानयोग्यमिति भावः। (भूतपतेः) शिवस्य (ध्यानास्पदं) समाधिस्थानम्। आस्पदं प्रतिष्ठायामिति निपातः (१)। (विवेश)॥ ४३॥

स इति। आसन्नशरीरपातः) आसन्नमृत्युः (सः) कामः (शार्दूलचर्म्मव्यवधानवत्यां) शार्दूलचर्म्मणा व्यवधानवत्यां व्याघ्रचर्म्मास्तृतायामित्यर्थः। मोक्षश्रीर्व्याघ्रचर्म्मणीति प्राशस्त्यादिति भावः। देवदारुद्रुमवेदिकायामासीनम्) उपविष्टं (संयमिनं) समाधिनिष्ठं (त्रियम्बकं) त्रिनेत्रं (ददर्श) त्र्यम्बकमित्युक्ते पादपूरणव्यत्यासात्त्रियम्बकमिति पादपूरणार्थोऽयमियङादेशश्छान्दसः

(१) पा० ६। १। १४६ सू०।

पर्य्यङ्कबन्धस्थिरपूर्व्वकाय-
मृज्वायतं सन्नमितोभयांसम्।
उत्तानपाणिद्वयसन्निवेशात्
प्रफुल्लराजीवमिवाङ्कमध्ये ॥४५॥
भुजङ्गमोन्नद्धजटाकलापं
कर्णावसक्तद्विगुणाक्षसूत्रम्।
कण्ठप्रभासङ्गविशेषनीलां
कृष्णत्वचं ग्रन्थिमतीं दधानम् ॥ ४६ ॥

महाकविप्रयोगादभियुक्तैरङ्गीकृतः। केचित्साहसिकाः त्रिलोचन-मिति पेठुः ॥ ४४ ॥

तमेव देवं षड्भिः श्लोकैर्वर्णयति

पर्य्यङ्केति। (पर्य्यङ्कबन्धस्थिरपूर्व्वकायं) पर्य्यङ्कबन्धेन वीरासनेन स्थिरपूर्व्वकायं निश्चलोत्तरार्द्धम् (ऋज्वायतं) ऋजुरायतश्च ऋज्वायतस्तं (सन्नमितोभयांसं) सन्नमितावुभावंसौ यस्य तं तथोक्तम्। वृत्तिविषये उभशब्दस्थाने उभयशब्दप्रयोग इत्युक्तं कैयटेन। (उत्तानपाणिद्वयसन्निवेशात्) उत्तान ऊर्द्धतलो यः पाणिद्वयस्य सन्निवेशः संस्थानं तस्मात् (अङ्कमध्ये) (प्रफुल्लराजीव-मिव) प्रफुल्लं राजीवं पङ्कजं यस्य तमिव स्थितम्। वीरासने वशिष्ठः एकं पादमथैकस्मिन्विन्यस्योरुणि संस्थितम्। इतरस्मिन् तथैवोरुं वीरासनमुदाहृतमिति। तथा योगसारे। उत्तानिते करतले करमुत्तानितं परम्। आदायाङ्गगतं कृत्वा ध्यायेद्यस्तस्य सोऽन्तरमिति ॥ ४५ ॥

भुजङ्गमेति। (भुजङ्गमोन्नद्धजटाकलापं) भुजङ्गमेन उन्नद्धः

किञ्चित्प्रकाशस्तिमितोग्रतारै-
र्भ्रूविक्रियायां विरतप्रसङ्गैः ।
नेत्रैरविस्पन्दितपक्ष्ममालै-
र्लक्ष्यीकृतघ्राणमधोमयूखैः ॥ ४७ ॥

अवृष्टिसंरम्भमिवाम्बुवाह-
मपामिवाधारमनुत्तरङ्गम् ।
अन्तश्चराणां मरुतां निरोधा-
न्निवातनिष्कम्पमिव प्रदीपम् ॥ ४८ ॥

उन्नमय्य नद्धो जटाकलापो येन तं तथोक्तं (कर्णावसक्तद्विगुणाक्षसूत्रं) कर्णावसक्तं कर्णावलम्बीत्यर्थः। अतएव द्विगुणं द्विरावृत्तम् अक्षसूत्रमक्षमाला यस्य तं ( कण्ठप्रभासङ्गविशेषनीलां ) कण्ठप्रभाणां सङ्गेन मिश्रणेन विशेषनीलाम् अतिनीलां ( ग्रन्थिमतीं ) बन्धनयुतां (कृष्णत्वचं) कृष्णमृगाजिनं (दधानम्) ॥ ४६ ॥

किञ्चिदिति । (किञ्चित्प्रकाशस्तिमितोग्रतारैः) किञ्चित्प्रकाशाः ईषत्प्रकाशाः स्तिमिताः निश्चलाः उग्राश्च ताराः कनीनिकाः येषां तैः । तारकाक्ष्णः कनीनिकेत्यमरः । (भ्रूविक्रियायां) भ्रूविक्षेपे (विरतप्रसङ्गैः) प्रसक्तिरहितैः (अविस्पन्दितपक्ष्ममालैः) अचलितपक्ष्मपङ्क्तिभिः अधःप्रसृता मयूखा येषान्तैः ( अधोमयूखैर्नेत्रैः ) त्रिनेत्रत्वात् बहुवचनं(लक्ष्यीकृतघ्राणं)नासाग्रनिविष्टदृष्टिमित्यर्थः । करणान्यवहिष्कृत्य स्थाणुवन्निश्चलात्मकः । आत्मानं हृदये ध्यायेन्नासाग्रन्यस्तलोचन इति योगसारे ॥ ४७ ॥

अवृष्टीति । अन्तश्चरन्तीत्यन्तश्चराः तेषां ( अन्तश्चराणां मरुतां) प्राणादीनां ( निरोधात् ) हेतोः ( अवृष्टिसंरम्भमिवा-

कपालनेत्रान्तरलब्धमार्गै-
र्ज्योतिःप्ररोहैरुदितैः शिरस्तः।
मृणालसूत्राधिकसौकुमार्यां
बालस्य लक्ष्मीं ग्लपयन्तमिन्दोः ॥ ४९ ॥
मनो नवद्वारनिषिद्धवृत्ति
हृदि व्यवस्थाप्य समाधिवश्यम्।

म्बुवाहं ) अवृष्टिसंरम्भम् अविद्यमानवर्षसम्भ्रमम् अम्बुवाहमिव स्थितम् एतेन प्राणनिरोधः सूचतः। (अनुत्तरङ्गम्) अनुद्भूततरङ्गम् ( अपामाधारं ) ह्रदं (इव) स्थितम् एतेन अपाननिरोधः सूचितः। तथा ( निवातनिष्कम्पं) निवाते निर्व्वातदेशे निष्कम्पम् निश्चलं ( प्रदीपमिव ) स्थितम्, एतेन शेषवायुनिरोधः सूचितः। निवातावाश्रयावातावित्यमरः ॥ ४८ ॥

कपालेति। (कपालनेत्रान्तरलब्धमार्गैः) कपालनेत्रान्तरेण ब्रह्मकरोटिनेत्रविवरेण लब्धमार्गैः ( शिरस्तः ) ब्रह्मरन्ध्रात्। पञ्चम्यास्तसिल्। (उदितैः) उद्भूतैः (ज्योतिःप्ररोहैः) तेजोऽङ्कुरैः ( मृणालसूत्राधिकसौकुमार्यां ) मृणालसूत्राधिकं सौकुमार्यं मार्दवं यस्यास्तां ( बालस्येन्दोः ) शिरश्चन्द्रस्य ( लक्ष्मीं ग्लपयन्तम् ) ॥ ४९ ॥

मन इति। नवद्वारनिषिद्धवृत्ति) नवभ्यो द्वारेभ्यो निषिद्धा निवर्त्तिता वृत्तिः सञ्चारो यस्य तत्तथोक्तं ( समाधिवश्यं ) समाधिना प्रणिधानेन वश्यं वशङ्गतम्। यत्प्रत्ययः। प्रणिधानं समाधानं समाधिश्च समाश्रय इति हलायुधः। (मनः हृदि) हृदयाख्ये अधिष्ठाने ( व्यवस्थाप्य ) तथाच वशिष्ठः। यतो निर्याति विषयान् यस्मिंश्चैव प्रलीयते। हृदयं तद्विजानीयान्मनसः स्थितिकारण-

यमक्षरं क्षेत्रविदो विदुस्त-
मात्मानमात्मन्यवलोकयन्तम् ॥ ५० ॥
स्मरस्तथाभूतमयुग्मनेत्रं
पश्यन्नदूरान्मनसाप्यधृष्यम्।
नालक्षयत् साध्वससन्नहस्तः
स्रस्तं शरं चापमपि स्वहस्तात् ॥५१॥
निर्व्वाणभूयिष्ठमथास्य वीर्य्यं
सन्धुक्षयन्तीव वपुर्गुणेन।
अनुप्रयाता वनदेवताभ्या-
मदृश्यत स्थावरराजकन्या ॥ ५२ ॥

मिति। (क्षेत्रविदः) क्षेत्रज्ञाः पुरुषाः। (यं) न क्षरतीति (अक्षरम्) अविनाशिनं (विदुः) विदन्ति। विदोलटोवेति मेर्जुस्(१)। (तमात्मानम् आत्मनि) स्वस्मिन् (अवलोकयन्तं) साक्षात्कुर्व्वन्तम् स्वातिरेकेण परमात्मनोऽभावादिति भावः ॥ ५० ॥

स्मर इति। (स्मरः) कामः (तथाभूतं) पूर्व्वोक्तरूपं (मनसाप्यधृष्यमयुग्मनेत्रं) विषमाक्षम् (अदूरात्पश्यन्) (साध्वससन्नहस्तः) साध्वसेन सन्नहस्तो विस्मयपाणिः सन् (स्वहस्तात् स्रस्तं शरं चापमपि) चापञ्च (नालक्षयत्) न विवेद भीतो मुह्यतीति भावः ॥५१॥

निर्व्वाणेति। (अथ) निर्व्वाणेन नाशेन भूयिष्ठं (निर्व्वाणभूयिष्ठं) नष्टप्रायमित्यर्थः (अस्य) स्मरस्य वीर्य्यं) बलं (वपुर्गुणेन) सौन्दर्य्येण (सन्धुक्षयन्तीव) पुनरुज्जीवयन्तीव स्थिता (वनदेव-

(१) पा० ३। ४। ८३ सू०।

अशोकनिर्भर्त्सितपद्मराग-
माकृष्टहेमद्युतिकर्णिकारम्।
मुक्ताकलापीकृतसिन्धुवारं
वसन्तपुष्पाभरणं वहन्ती ॥ ५३ ॥
आवर्जिता किञ्चिदिव स्तनाभ्यां
वासो वसाना तरुणार्करागम्।
पर्य्याप्तपुष्पस्तवकावनम्रा
सञ्चारिणी पल्लविनी लतेव ॥ ५४ ॥

ताभ्यां) सखीभूताभ्याम् (अनुप्रयाता) अनुगता (स्थावरराजकन्या) पार्व्वती (अदृश्यत) दृष्टा ॥ ५२ ॥

तामेवाह चतुर्भिः श्लोकैः।

अशोकेति। (अशोकनिर्भर्त्सितपद्मरागं) अशोकपुष्पेण निर्भर्त्सितास्तिरस्कृताः पद्मरागा येन तत् तथोक्तम् (आकृष्टहेमद्युतिकर्णिकारं) आकृष्टहेमद्युतीनि आहृतस्वर्णाभरणवर्णानि कर्णिकाराणि यस्मिन् तत्तथोक्तं (मुक्ताकलापीकृतसिन्धुवारं) मुक्ताकलापीकृतानि सिन्धुवाराणि निर्गुण्डीकुसुमानि यस्मिन् तत्। सिन्धुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपीत्यमरः। (वसन्तपुष्पाभरणं) वसन्तपुष्पाण्येवाभरणं (वहन्ती) ॥ ५३ ॥

आवर्जितेति। (स्तनाभ्यां किञ्चिदावर्जिता) (इव) ईषदानमितवपुः (तरुणार्करागं) तरुणार्कस्य राग इव रागो यस्य तत् बालार्कारुणमित्यर्थः। उपमानपूर्व्वपदो बहुव्रीहिरुत्तरपदलोपश्च। (वासो वसाना) आच्छादयन्ती। अतएव (पर्य्याप्तपुष्पस्तवकाव-

स्रस्तां नितम्बादवलम्बमाना
पुनः पुनः केशरदामकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण
मौर्व्वीं द्वितीयामिव कार्म्मुकस्य ॥ ५५ ॥
सुगन्धिनिश्वासविवृद्धतृष्णां
विम्बाधरासन्नचरं द्विरेफम् ।
प्रतिक्षणं संभ्रमलोलदृष्टि-
र्लीलारविन्देन निवारयन्ती ॥ ५६ ॥

नम्रा) (पल्लविनी) किशलयवती (सञ्चारिणी लतेव) स्थितेति भावः ॥ ५४ ॥

स्रस्तामिति। (स्थानविदा) निक्षेपयोग्यस्थानवेदिना (स्मरेण) (न्यासीकृतां) निक्षेपीकृताम् (कार्म्मुकस्य) कर्म्मणि प्रभवतीति कार्म्मुकं धनुः। कर्म्मण उकञ् इत्युकञ्प्रत्ययः (१)। तस्य (द्वितीयां मौर्व्वीमिव) स्थिताम्। अत्र हि न्यस्ता मौर्व्वी उत्तरत्र हरवैरनिर्यातनाय उपयुज्यत इति भावः। (नितम्बात् स्रस्तां) चलितां (केशरदामकाञ्चीं) केशरदाम वकुलमाला सैव काञ्ची तां (पुनः पुनरवलम्बमाना) हस्तेन धारयन्ती ॥ ५५ ॥

सुगन्धीति। (सुगन्धिनिश्वासविवृद्धतृष्णं) सुगन्धिभिर्निश्वासैर्विवृद्धतृष्णं (विम्बाधरासन्नचरं) विम्बतुल्योऽधरो विम्बाधरः। वृत्तौ मध्यपदलोपः स्यादिति वामनः। तस्यासन्नचरं सन्निकृष्टचरं (द्विरेफं) भृङ्गं (प्रतिक्षणं) (संभ्रमलोलदृष्टिः) संभ्रमेण लोलदृष्टिः चञ्चलाक्षी सती (लीलारविन्देन निवारयन्ती) ॥५६॥

---

(१) पा० ५। १। १०३ सू०।

तां वीक्ष्य सर्व्वावयवानवद्यां
रतेरपि ह्रीपदमादधानाम् ।
जितेन्द्रिये शूलिनि पुष्पचापः
स्वकार्य्यसिद्धिं पुनराशशंस ॥ ५७ ॥
भविष्यतः प्रत्युरुमा च शम्भोः
समाससाद प्रतिहारभूमिम् ।
योगात् स चान्तः परमात्मसंज्ञं
दृष्ट्वा परं ज्योतिरुपारराम ॥ ५८ ॥

तामिति । (सर्व्वावयवानवद्यां) सर्व्वावयवेष्वनवद्यामगर्ह्याम् । अवद्यपण्येति निपातः (१) ( रतेः ) कामकलत्रस्य ( अपि ह्रीपदं) लज्जानिमित्तं ( आदधानां ) न्यूनतामावहन्तीमित्यर्थः । (तां) पार्व्वतीं (वीक्ष्य) (पुष्पचापः) कामः ( जितेन्द्रिये ) दुर्ज्जयेऽपीत्यर्थः । ( शूलिनि ) शिवे विषये ( स्वकार्य्यसिद्धिं पुनराशशंस ) चकमे । पूर्व्वं साध्वससन्नहस्त इत्यादिना कार्य्यसिद्धेरुन्मूलितत्वाभिधानादिह पुनरित्युक्तम् ॥५७ ॥

भविष्यत इति । ( उमा च भविष्यतः पत्युः शम्भोः प्रतिहारभूमिं) द्वारदेशं (समाससाद) । स्त्री द्वार्द्वारंप्रतीहार इत्यमरः । (सः) शम्भुः (च) (अन्तः परमात्मसंज्ञं) परमात्मेति संज्ञा यस्य तत् (परं) मुख्यम् । परं दूरान्यमुख्येष्विति यादवः । ( ज्योतिर्दृष्ट्वा) साक्षात्कृत्य (योगात्) ध्यानात् । योगः सन्नहनोपायध्यानसङ्गतियुक्तिष्वित्यमरः । (उपारराम) उपारत । व्याङ्परिभ्यो रमः इति परस्मैपदम् (२) ॥ ५८ ॥

(१) पा० ३ । १ । १०१ सू० । (२) पा० १ । ३ । ८३ सू०

ततो भुजङ्गाधिपतेः फणाग्रै-
रधः कथञ्चिद्‌ धृतभूमिभागः ।
शनैः कृतप्राणविमुक्तिरीशः
पर्य्यङ्कबन्धं निविडं बिभेद ॥ ५९ ॥

तस्मै शशंस प्रणिपत्य नन्दी
शुश्रूषया शैलसुतामुपेताम् ।
प्रवेशयामास च भर्त्तुरेनां
भ्रूक्षेपमात्रानुमतप्रवेशाम् ॥ ६० ॥

तत इति । ततो भुजङ्गाधिपतेः) शेषस्य (फणाग्रैः अधः) भूमेरधः (कथञ्चित्) अतियत्नेन (धृतभूमिभागः) धृतो भूमिभागः स्वोपवेशनभूभागो यस्य सः तथोक्तः । वायुधारणाहितलाघवनिवृत्त्या भगवतो गुरुत्वादिति भावः । (शनैः) कृता प्राणानां प्राङ्‌निरुद्धानां विमुक्तिः पुनः सञ्चारो येन सः (कृतप्राणविमुक्तिः ईशो निविड़) दृढ़ (पर्य्यङ्कबन्धं) वीरासनं (बिभेद) शिथिलीचकार ॥ ५९ ॥

तस्मा इति । अथ (नन्दी तस्मै) भगवते । क्रियाग्रहणात् चतुर्थी । (प्रणिपत्य) नमस्कृत्य (शुश्रूषया) सेवया निमित्तेन (उपेतां) सेवार्थमागतामित्यर्थः । (शैलसुतां शशंस) निवेदयामास । (भर्तुः) स्वामिनो (भ्रूक्षेपमात्रानुमतप्रवेशाम्) भ्रूक्षेपमात्रेण भ्रूसंज्ञयैवानुमतप्रवेशाम् अङ्गीकृतप्रवेशाम् (एनां) शैलसुतां (प्रवेशयामास च) ॥ ६० ॥

तस्याः सखीभ्यां प्रणिपातपूर्व्वं
स्वहस्तलूनः शिशिरात्ययस्य।
व्यकीर्य्यत त्र्यम्बकपादमूले
पुष्पोच्चयः पल्लवभङ्गभिन्नः॥ ६१॥
उमापि नीलालकमध्यशोभि
विस्रंसयन्ती नवकर्णिकारम्।
चकार कर्णच्युतपल्लवेन
मूर्ध्ना प्रणामं वृषभध्वजाय॥ ६२॥
अनन्यभाजं पतिमाप्नुहीति
सा तथ्यमेवाभिहिता भवेन।

तस्या इति। (तस्याः) पार्व्वत्याः (सखीभ्यां) पूर्व्वोक्ताभ्यां (स्वहस्तलूनः) स्वहस्तेन लून उपचितः (पल्लवभङ्गभिन्नः) किसलयशकलमिश्रः (शिशिरात्ययस्य) वसन्तस्य सम्बन्धी (पुष्पोच्चयः) पुष्पप्रकरः। हस्तादाने चेरस्तेय इति (१) घञ्विधयत्वात्कवीनामयं प्रामादिकः प्रयोग इति वल्लभः। (त्र्यम्बकपादमूले) (प्रणिपातपूर्व्वं) प्रणतिपूर्व्वकं (व्यकीर्य्यत) विक्षिप्तः॥ ६१॥

उमापीति। (उमापि नीलालकमध्यशोभि) नीलालकानां मध्ये शोभत इति तथोक्तम् अलकन्यस्तमित्यर्थः। (नवकर्णिकारं विस्रंसयन्ती) (कर्णच्युतपल्लवेन) कर्णाच्युतः पल्लवो यस्य तेन (मूर्ध्ना वृषभध्वजाय प्रणामं चकार) क्रियाग्रहणात् सम्प्रदानत्वम्॥ ६२॥

---

(१) पा० ३। ३। ४० सू०।

न ह्यीश्वरव्याहृतयः कदाचित्
पुष्णन्ति लोके विपरीतमर्थम् ॥ ६३ ॥
कामस्तु बाणावसरं प्रतीक्ष्य
पतङ्गवद्वह्निमुखं विविक्षुः ।
उमासमक्षं हरबद्धलक्ष्यः
शरासनज्यां मुहुराममर्श ॥ ६४ ॥

अनन्येति । (सा) कृतप्रणामा देवी (भवेन) हरेण अन्यां न भजतीति (अनन्यभाजम्) भजोण्विरिति ण्विप्रत्ययः (१) । सर्व्वनाम्नो वृत्तिमात्रे पूर्व्वपदस्य पुंवद्भावः । (पतिमाप्नुहीति तथ्यं) सत्यं (एवाभिहिता) उक्ता उत्तरत्र तथैव सम्भवादिति भावः । अभिदधातेर्ब्रुवर्थस्य दुहादित्वादप्रधाने कर्म्मणि क्तः । तथाहि (ईश्वरव्याहृतयः) महापुरुषोक्तयः (कदाचित्) अपि (लोके) भुवने । लोकस्तु भुवने जने इत्यमरः । (विपरीतं) विसंवादिनम् (अर्थम्) अभिधेयं (न पुष्णन्ति) न बोधयन्तीत्यर्थः ॥ ६३ ॥

कामस्त्विति । (कामस्तु बाणावसरं प्रतीक्ष्य) उमासन्निधानादयमेव बाणप्रयोगसमय इति ज्ञात्वा पतङ्गेन तुल्यं (पतङ्गवत्) शलभवत् । समौ पतङ्गशलभावित्यमरः । तेन तुल्यं क्रियाचेद्वतिरिति वति प्रत्ययः (२) । (वह्निमुखं विविक्षुः) प्रवेष्टुमिच्छुः । विशतेः सनन्तादुप्रत्ययः । उमायाः समक्षम् (उमासमक्षम्) अक्ष्णोः समीपम् अव्ययीभावे शरत्प्रभृतिभ्य इति समासान्तोऽच्प्रत्ययः (३) ।

---

(१) पा० ३ । २ । ६२ सू० ।
(२) पा० । ५ । १ । ११ सू० ।
(३) पा० ५ । ४ । १०७ सू० ।

अथोपनिन्ये गिरिशाय गौरी
तपस्विने ताम्ररुचा करेण।
विशोषितां भानुमतो मयूखै-
र्मन्दाकिनीपुष्करबीजमालाम् ॥ ६५ ॥
प्रतिग्रहीतुं प्रणयिप्रियत्वात्
त्रिलोचनस्तामुपचक्रमे च।
सम्मोहनं नाम च पुष्पधन्वा
धनुष्यमोघं समधत्त बाणम् ॥ ६६ ॥

(हरबद्धलक्ष्यः) हरे बद्धलक्ष्यः सन् (शरासनज्यां) शरासनस्य ज्यां मौर्वीं (मुहुराममर्श) परामृष्टवान् ॥ ६४ ॥

अथोपेति। (अथ गौरी) तपोऽस्यास्तीति तपस्वी। अस्मा-यामेधास्रजोविनिरिति विनिप्रत्ययः (१)। तस्मै (तपस्विने) गिरिशाय (ताम्ररुचा) रक्तवर्णेन (करेण भानुमतः) अंशुमतः (मयूखैः) (विशोषितां) (मन्दाकिनीपुष्करबीजमालां) मन्दाकिन्याः पुष्कराणि पद्मानि तेषां बीजानि तेषां मालां जपमालिकाम् (उपनिन्ये) समर्पितवती ॥ ६५ ॥

प्रतिग्रहीतुमिति। (त्रिलोचनस्य प्रणयिप्रियत्वात्) अर्थिप्रियत्वात् (तां) अक्षमालां (प्रतिग्रहीतुं) स्वीकर्त्तुम् (उपचक्रमे)। पुष्पं धनुर्यस्य स (पुष्पधन्वा) कामः (च) वा संज्ञायाम् (२) इत्यनङादेशः। सम्मुह्यते अनेनेति (सम्मोहनं नाम)। नामेति प्रसिद्धौ। (अमोघं बाणं) शायकं (धनुषि समधत्त) संहितवान् ॥ ६६ ॥

---

(१) पा० ५।२।१२१ सू०। (२) पा० ५।४।१३३ सू०।

हरस्तु किञ्चित् परिलुप्तधैर्य्य-
श्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे विम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥ ६७ ॥

विवृण्वती शैलसुतापि भाव-
मङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ
मुखेन पर्य्यस्तविलोचनेन ॥ ६८ ॥

हरस्त्विति । (हरस्तु) हरोऽपि (चन्द्रोदयारम्भे अम्बुराशि-रिव) (किञ्चित्) ईषत् (परिलुप्तधैर्य्यः) नतु प्राकृतजनवदत्यन्त-लुप्तधैर्य्य इति भावः । (विम्बफलाधरोष्ठे) विम्बफलतुल्य-अधरोष्ठौ यस्य तस्मिन् (उमामुखे) (विलोचनानि व्यापारयामास) त्रिभिरपि लोचनैः साभिलाषमद्राक्षीदित्यर्थः । एतेन भगवतो-रतिभावोदय उक्तः ॥ ७७ ॥

विवृण्वतीति । (शैलसुतापि स्फुरद्बालकदम्बकल्पैः) विकस-त्कोमलनीपसदृशैः पुलकितैरित्यर्थः । ईषदसमाप्तौ कल्पप्-प्रत्ययः (१) । (अङ्गैर्भावं) रत्याख्यं (विवृण्वती) प्रकाशयन्ती (चारु-तरेण पर्य्यस्तविलोचनेन) व्रीडाविभ्रान्तनेत्रेण (मुखेन) असाचि साचि सम्पद्यमाना कृता (साचीकृता) तिर्य्यक्कृता । तिर्य्यगर्थे साचि तिर इत्यमरः । (तस्थौ) (१) क्रिया मुखं साचीकृत्य स्थितेत्यर्थः । न केवलं हरस्यैव देव्या अप्युदितो रतिभाव इति भावः ॥ ६८ ॥

(१) पा० ५ । ३ । ६७ सू० ।

अथेन्द्रियक्षोभमयुग्मनेत्रः
पुनर्वशित्वाद्बलवन्निगृह्य ।
हेतुं स्वचेतोविकृतेर्दिदृक्षु-
र्दिशामुपान्तेषु ससर्ज दृष्टिम् ॥ ६९ ॥
स दक्षिणापाङ्गनिविष्टमुष्टिं
नतांसमाकुञ्चितसव्यपादम् ।
ददर्श चक्रीकृतचारुचापं
प्रहर्त्तुमभ्युद्यतमात्मयोनिम् ॥ ७० ॥

अथेति । (अथ) अयुग्मानि नेत्राणि यस्य सः (अयुग्मनेत्रः) त्रिनेत्रः (वशित्वात्) जितेन्द्रियत्वात् (इन्द्रियक्षोभं) पूर्व्वोक्तमिन्द्रियविकारं (पुनर्बलवत्) दृढं (निगृह्य) निवार्य (स्वचेतोविकृतेः) स्वचित्तविकारस्य (हेतुं) कारणं (दिदृक्षुः) द्रष्टुमिच्छुः (दिशामुपान्तेषु दृष्टिं ससर्ज) प्रसारयामास ॥ ६९ ॥

स इति । (सः) भगवान् (दक्षिणापाङ्गनिविष्टमुष्टिं) दक्षिणापाङ्गे निविष्टा स्थिता मुष्टिर्यस्य तं (नतांसं) (आकुञ्चितसव्यपादं) आकुञ्चितः सव्यपादो यस्य तम् आलीढ़ाख्यस्थानके स्थितमित्यर्थः। (चक्रीकृतचारुचापं) मण्डलीकृतसौम्यकोदण्डं (प्रहर्तुमभ्युद्यतमात्मयोनिं) मनोभवं (ददर्श) आलीढ़लक्षणमाह यादवः। स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम् । वितस्त्यन्तरगौ पादौ मण्डलं तोरणाकृती। समानौ स्यात्समपदमालीढ़ं पदमग्रतः। दक्षिणं वाममाकुञ्च्य प्रत्यालीढ़ं विपर्य्यय इति ॥ ७० ॥

तपःपरामर्शविवृद्धमन्यो-
र्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य।
स्फुरन्नुदर्चिः सहसा तृतीया-
दक्ष्णः कृशानुः किल निष्पपात॥ ७१॥

क्रोधं प्रभो! संहर संहरेति
यावद्गिरः खे मरुतां चरन्ति।
तावत् स वह्निर्भवनेत्रजन्मा
भस्मावशेषं मदनं चकार॥ ७२॥

तप इति। (तपःपरामर्शविवृद्धमन्योः) तपःपरामर्शेन तपस-श्चास्कन्दनेन विवृद्धमन्योः प्रवृद्धकोपस्य (भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य) भ्रूभङ्गेण दुष्प्रेक्ष्यं दुर्दर्शं मुखं यस्य तस्य (तस्य) हरस्य (तृतीया-दक्ष्णः स्फुरन्) उद्दीप्यमानः (उदर्चिः) उद्भूतज्वालः (कृशानुः) अग्निः (सहसा) अतर्कितमेव। अतर्किते तु सहसेत्यमरः (निष्पपात किल) निश्चक्राम खलु॥ ७१॥

क्रोधमिति। हे (प्रभो)! स्वामिन् (क्रोधं संहर संहर) निवर्त्तय निवर्त्तय। चापले द्वे भवत इति वक्तव्यमिति वार्त्तिकेन द्वित्वम्। सम्भ्रमेण वृत्तिश्चापलमिति काशिका। (इति) एवं (मरुतां) देवानां (गिरः) वाचः (खे) व्योम्नि (यावच्चरन्ति) प्रव-र्त्तन्ते (तावत्) तत्कालमेव भवस्य नेत्राज्जन्म यस्य सः (भवनेत्र-जन्मा)। अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपद इति वामनः। (स वह्निर्मदनं) भस्मैवावशेषो यस्य तं (भस्मावशेषं चकार (ददाहेत्यर्थः॥ ७२॥

तीव्राभिषङ्गप्रभवेण वृत्तिं
मोहेन संस्तम्भयतेन्द्रियाणाम्।
अज्ञातभर्तृव्यसना मुहूर्तं
कृतोपकारेव रतिर्बभूव ॥ ७३ ॥

तमाशु विघ्नं तपसस्तपस्वी
वनस्पतिं वज्र इवावभज्य।
स्त्रीसन्निकर्षं परिहर्तुमिच्छ-
न्नन्तर्दधे भूतपतिः सभूतः ॥ ७४ ॥

शैलात्मजापि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समर्थ्य ललितं वपुरात्मनश्च।

तीव्रेति। (तीव्राभिषङ्गप्रभवेण) अतिदुःसहाभिभवसम्भवेन। अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि चेति वैजयन्ती। (इन्द्रियाणां) चक्षुरादीनां (वृत्तिं) व्यापारं (संस्तम्भयता प्रतिबध्नता (मोहेन) मूर्च्छया कर्त्रा (रतिः) मदनभार्या (मुहूर्तम्) (अज्ञातभर्तृव्यसना) अज्ञातं भर्तृव्यसनं भर्तृनाशो यया सा तथोक्ता सती (कृतोपकारेव बभूव) सहसा दुःखोपनिपातान्मुमूर्च्छेत्यर्थः। मोहेन दुःखसंवेदनाभावात्तस्योपकारकत्वोक्तिः ॥७३॥

तमिति। (तपस्वी) तपोनिष्ठः (भूतपतिः) शिवः (तपसो विघ्नं) अन्तरायभूतं (तं) कामम् (आशु) (वज्रः) अशनिः (वनस्पतिं) वृक्षम् (इव) (अवभज्य) भङ्क्त्वा (स्त्रीसन्निकर्षं) स्त्रीसन्निधानं (परिहर्तुमिच्छन्) तस्यानर्थहेतुत्वादिति भावः। (सभूतः) सगणः सन् (अन्तर्दधे ॥ ७४

सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथंचित् ॥७५॥
सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या
दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम्।
सुरगज इव बिभ्रत् पद्मिनीं दन्तलग्नां
प्रतिपथगतिरासीत् वेगदीर्घीकृताङ्गः ॥७६॥

शैलात्मजेति। (शैलात्मजा) पार्व्वती (अपि) (उच्छिरसः) उन्नतशिरसो महतः (पितुरभिलाषं) हरोवरोऽस्त्विति मनोरथं; (ललितं) सुन्दरम् (आत्मनो वपुश्च व्यर्थं) निष्फलं (समर्थ्य) विचार्य्य (सख्योः समक्षं) पुरः (इति च) हेतुना (अधिकजातलज्जा) अधिकं जातलज्जा समानजनसमक्षमवमानस्यातिदुःसहत्वादिति भावः। (शून्या) निरुत्साहा सती (कथञ्चित्) कृच्छ्रेण भवनस्याभिमुखी (भवनाभिमुखी) (जगाम) ॥ ७५ ॥

सपदीति। (सपदि अद्रिः) हिमवान् (रुद्रसंरम्भभीत्या) रुद्रस्य संरम्भात्कोपात् भीत्या। संरम्भः सम्भ्रमे कोप इति विश्वः। (मुकुलिताक्षीं) निमीलितनेत्राम्। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् इति षच्प्रत्ययः (१)। षिद्गौरादिभ्यश्चेति ङीष् (२)। अनुकम्पितुमर्हाम् (अनुकम्प्याम्) ऋहलोर्ण्यदिति ण्यप्रत्ययः (३)। (दुहितरं दोर्भ्यामादाय) (दन्तलग्नां) दन्तयोर्लग्नां (पद्मिनीं)

(१) पा० । ५ । ४ । ११० सू० ।
(२) पा० ४ । ४ । ११३ सू० ।
(३) पा० ३ । १ । १२४ सू० ।

# इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये मदनदहनो नाम तृतीयः सर्गः।

नलिनीं (बिभ्रत् सुरगज इव) (वेगदीर्घीकृताङ्गः) वेगेन रयेण दीर्घीकृताङ्गः आयतीकृतशरीरः सन् पन्थानमति गता प्रतिपथा मार्गानुसारिणी गतिर्यस्य सः (प्रतिपथगतिरासीत्) पन्थानमनुसृत्य जगामेत्यर्थः ॥ ७६ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां तृतीयः सर्गः।

## चतुर्थः सर्गः।

**अथ मोहपरायणा सती**
**विवशा कामवधूर्विबोधिता।**
**विधिना प्रतिपादयिष्यता**
**नववैधव्यमसह्यवेदनम् ॥ १ ॥**

मूर्च्छिता रतिरित्युक्तम् सम्प्रति तद्वृत्तान्तमेवाह अथेति। (अथ) अनन्तरं मोहो मूर्च्छा परम् अयनम् आश्रयो यस्याः सा (मोहपरायणा) मोहैकशरणा (सती)। परायणमभिप्रेते तत्परे परमाश्रय इति यादवः। (विवशा) मूढत्वान्निश्चेष्टा (कामवधूः) रतिः (असह्यवेदनं) असह्या दुःसहा वेदना यस्मिन् तत्तथोक्तम्। (नववैधव्यं) विधवायाः गतभर्तृकाया भावः वैधव्यं नवञ्च तत् वैधव्यञ्चेति नववैधव्यम्। नवग्रहणं दुःसहत्वद्योतनार्थम्। (प्रतिपादयिष्यता) अनुभावयिष्यता क्रियार्थक्रियायां लृट् (१)। (विधिना) दैवेन)। विधिर्विधाने दैवे चेत्यमरः। (विबोधिता) वैधव्यानुभावफलोऽयं विधिरिति भावः। अस्मिन् सर्गे वियोगिनीवृत्तानि। विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनीति लक्षणात् ॥ १ ॥

---

(१) पा० ३। ३। १३ १४ सू०।

अवधानपरे चकार सा
प्रलयान्तोन्मिषिते विलोचने।
न विवेद तयोरतृप्तयोः
प्रियमत्यन्तविलुप्तदर्शनम् ॥ २ ॥
अयि जीवितनाथ जीवसी-
त्यभिधायोत्थितया तया पुरः।
ददृशे पुरुषाकृति क्षितौ
हरकोपानलभस्म केवलम् ॥ ३ ॥

अवधानेति। (सा) रतिः (प्रलयान्तोन्मिषिते) प्रलयान्ते मूर्च्छावसाने। प्रलयो नष्टचेष्टतेत्यमरः। उन्मिषिते उन्मीलिते (विलोचने) नयने अवधानं परं प्रधानं ययोस्ते (अवधानपरे) दिदृक्षया अवहिते (चकार)। द्रष्टव्याभावात्तु न विवेदेत्याह नेति। (प्रियं) कामम् अतृप्तयोः) तृप्तिं न गतयोः नित्यदिदृक्षमाणयोरित्यर्थः (तयोः) लोचनयोः दर्शनक्रियापेक्षया सम्बन्धे षष्ठी। (अत्यन्तविलुप्तदर्शनं) अत्यन्तविलुप्तं दर्शनं स्वलोचनयोः करणयोर्यस्य कर्म्मभूतस्य तम् अत्यन्तविलुप्तदर्शनं सन्तं (न विवेद) न ज्ञातवती। प्रियनाशापरिज्ञानाद्दिदृक्षासक्ता इति तात्पर्य्यार्थः॥२॥

अयीति। अयीति प्रश्ने। अयि प्रश्नानुनययोरिति विश्वः। (अयि जीवितनाथ)! (जीवसि) प्राणिषि कच्चिदिति (अभिधाय) (उत्थितया) (तया) रत्या (पुरः) अग्रे (क्षितौ) पुरुषस्य आकृतिरिव आकृतिर्यस्य तत् (पुरुषाकृति) (केवलं) एकं (हरकोपानलभस्म ददृशे) दृष्टं न तु पुरुष इति भावः ॥ ३ ॥

अथ सा पुनरेव विह्वला
वसुधालिङ्गनधूसरस्तनी।
विललाप विकीर्णमूर्द्धजा
समदुःखामिव कुर्व्वती स्थलीम् ॥ ४ ॥
उपमानमभूद्विलासिनां
करणं यत्तव कान्तिमत्तया।
तदिदं गतमीदृशीं दशां
न विदीर्य्ये कठिनाः खलु स्त्रियः ॥ ५ ॥

अथेति। (अथ) भस्मदर्शनानन्तरं (पुनरेव विह्वला) विक्लवा (वसुधालिङ्गनधूसरस्तनी) वसुधालिङ्गनेन क्षितिलुण्ठनेन धूसरौ धूसरवर्णौ स्तनौ कुचौ यस्याः सा तथोक्ता। स्वाङ्गाच्चोपसर्जनादसंयोगोपधादिति ङीप्। (विकीर्णमूर्द्धजा) विकीर्णा विच्छिन्नाः मूर्द्धजाः केशा यस्याः सा तथोक्ता सा रतिः (स्थलीं) वनभूमिं तत्रत्यान् प्राणिन इत्यर्थः। जानपदकुण्डगोणस्थलेत्यादिना ङीप् (१)। (समदुःखां) स्वतुल्यशोकां (कुर्व्वतीव) (विललाप) परिदेवितवती। विलापः परिदेवनमित्यमरः॥ ४ ॥

उपमानमिति। (तव यत्करणं) गात्रम्। करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपीत्यमरः। (कान्तिमत्तया) सौन्दर्य्येण हेतुना (विलासिनां) विलसनशीलानाम्। वौ कषलसेत्यादिना घिनुण्प्रत्ययः (२)। उपमीयते येन तत् (उपमानम्) अभूत् (तत्) करणं

(१) पा० ४।१।४२ सू०।
(२) पा० ३।२।१४३ सू०।

क्व नु मां त्वदधीनजीवितां
विनिकीर्य्य क्षणभिन्नसौहृदः।
नलिनीं क्षतसेतुबन्धनो
जलसंघात इवासि विद्रुतः ॥ ६ ॥

(इदं ईदृशीं दशां) अवस्थां (गतं) भस्मीभूतमित्यर्थः। तथापि (न विदीर्य्ये) न विदीर्णा भवामि। कर्त्तरि लट्। तथाहि (स्त्रियः कठिनाः खलु) कठिनत्वादविदीर्य्यमाणत्वमित्यर्थः। कारणात्कार्य्य-समर्थनरूपोऽर्थान्तरन्यासः। धीरसञ्चारिणी दृष्टिर्गतिर्गौरवभा-स्विता। स्मितपूर्व्वं तथालापो विलास इति कीर्त्तितः ॥ ५ ॥

क्वेति। हे प्रिय! (क्षतसेतुबन्धनः) भग्नसेतुबन्धः (जल-सङ्घातः) जलौघः (नलिनीमिव) जलैकायत्तजीवितामिति शेषः। (त्वदधीनजीवितां) त्वदायत्तप्राणां (मां क्व नु विनिकीर्य्य) कुत्र वा निक्षिप्य (क्षणभिन्नसौहृदः) क्षणत्यक्तसौहार्दः सन् (विद्रुतः) पलायितोऽसि। सेतुसौहृदयोः स्थितिहेतुत्वेन साम्यम्। सुहृदो भावः सौहृदम्। युवादित्वादण्प्रत्ययः (१)। हृदयस्य हृल्लेखय-दण्लासेष्विति हृदादेशः अणिहृद्भगसिन्ध्वन्ते-पूर्व्वपदस्य च इत्युभयपदवृद्धिः (२) हृदभूतस्याभिधाने तूभयपद-वृद्धिः स्यात् यथा सुहृदः भावः सौहार्दमिति तदेवाह वामनः। सौहृददौर्हृदशब्दौ अनणि हृद्भावादिति ॥ ६ ॥

---

(१) पा० ५। १। १३० सू०।
(२) पा० ७। ३। १९ सू०।

कृतवानसि विप्रियं न मे
प्रतिकूलं न च ते मया कृतम्।
किमकारणमेव दर्शनं
विलपन्त्यै रतये न दीयते ॥ ७ ॥

स्मरसि स्मर मेखलागुणै-
रुत गोत्रस्खलितेषु बन्धनम्।
च्युतकेशरदूषितेक्षणा-
न्यवतंसोत्पलताड़नानि वा ॥ ८ ॥

हृदये वससीति मत्प्रियं
यदवोचस्तदवैमि कैतवम्।

कृतवानिति। हे प्रिय! त्वं (मे) मम (विप्रियम्) अप्रियं (कृतवान् नासि) (मया च ते) तव (प्रतिकूलं) अप्रियं (न कृतम्) (अकारणं) निष्कारणमेव परस्परापकाररूपकारणाभावेऽपीत्यर्थः। क्रियाविशेषणमेतत्। (विलपन्त्यै) त्वद्दर्शनार्थिन्यै अपीति भावः (रतये) (किं) कथं (दर्शनं न दीयते)। क्रियाग्रहणाच्चतुर्थी ॥ ७ ॥

विप्रियमाशङ्कते

स्मरसीति। हे (स्मर! (गोत्रस्खलितेषु) नामव्यत्यासेषु। गोत्रं नाम्नि चले कुले इति विश्वः। (मेखलागुणैः बन्धनं स्मरस्युत) स्मरसि वा। विकल्पे किं किमुत चेत्यमरः। (च्युतकेशरदूषितेक्षणानि) च्युतकेशरैर्भ्रष्टकिञ्जल्कैः दूषिते ईक्षणे येषु तानि (अवतंसोत्पलताडनानि) सधूलिक्षेपताडनानीत्यर्थः। स्मरसि (वा) अपकारस्मरणादिदमदर्शनमिति भावः ॥ ८ ॥

उपचारपदं न चेदिदं
त्वमनङ्गः कथमक्षता रतिः ॥ ९ ॥
परलोकनवप्रवासिनः
प्रतिपत्स्ये पदवीमहं तव।
विधिना जन एष वञ्चित-
स्त्वदधीनं खलु देहिनां सुखम् ॥ १० ॥

हृदय इति। (हृदये वससीति) स्मरवाक्यानुवादः। इत्येवं रूपं (मत्प्रियं) (यदवोचः) उक्तवानसि। ब्रूञो लुङि वच उम् इत्युमागमः (१)। (तत्कैतवमवैमि) मिथ्येति मन्ये (इदं) वचनम् (उपचारपदं) परस्य रञ्जनार्थं यदसत्यभाषणं स उपचारस्तस्य पदं स्थानं कैतवस्थानमिति यावत् (न चेत् त्वमनङ्गः) अशरीरः (कथं रतिः अक्षता) अविनष्टा। आश्रयनाशेऽप्याश्रितमविनष्टमिति विरोधादिति भावः॥ ९॥

न च मे कश्चिद्विचारः किन्तु लोकः शोच्यत इत्याह

परलोकेति। (परलोकनवप्रवासिनः) परलोकं प्रति नवप्रवासिनोऽचिरप्रोषितस्य अनेन अनुगमनकालानतिपातः सूच्यते। (तव पदवीं) मार्गं (प्रतिपत्स्ये) त्वामनुगमिष्यामीत्यर्थः। अतो मे नास्ति विचार इति भावः। किन्तु (विधिना) दैवेन (एष जनः) लोकः (वञ्चितः) प्रतारितः (देहिनां सुखं त्वदधीनं) त्वय्यधीनं (खलु) अधिशब्दस्य शौण्डादिकत्वात्सप्तमी शौण्डैरिति समासः(२)।

---

(१) पा० ७। ४। २० सू०।
(२) पा० २। १। ४० सू०।

रजनीतिमिरावगुण्ठिते
पुरमार्गे घनशब्दविक्लवाः।
वसतिं प्रिय! कामिनां प्रिया-
स्त्वदृते प्रापयितुं क ईश्वरः॥ ११॥

नयनान्यरुणानि घूर्णयन्
वचनानि स्खलयन् पदे पदे।
असति त्वयि वारुणीमदः
प्रमदानामधुना विडम्बना॥ १२॥

अध्युत्तरपदादिति खप्रत्ययः (१)। एवमन्यत्रापि। सुखप्रदाभावे कुतः सुखमिति भावः॥ १०॥

तदेवाह रजनीति। हे (प्रिय)! (रजनीतिमिरावगुण्ठिते) रजनीतिमिरेणावगुण्ठिते आवृते (पुरमार्गे) घनशब्दविक्लवाः) गर्जितभीताः (प्रियाः कामिनां वसतिं प्रापयितुं त्वदृते) त्वां विना। अन्यारादितरर्ते इत्यादिना पञ्चमी (२)। (क ईश्वरः) शक्तः न कश्चिदित्यर्थः। न हि कामन्धानां भीतिरस्तीति भावः॥ ११॥

नयनानीति। (अरुणानि नयनानि घूर्णयन्) भ्रमयन् तथा (पदे पदे) प्रतिपदम्। वीप्सायां द्विरुक्तिः (वचनानि स्खलयन्) विपर्यासयन् (प्रमदानां वारुणीमदः) मद्यमदः (अधुना) (त्वय्यसति) (विडम्बना) अनुकृतिमात्रम्। मदनाभावे मदस्य निष्फलत्वादिति भावः। तथा च शिशुपालवधे तं मदो दयितसङ्गमभूष इति॥ १२॥

---

(१) पा० ५।४।७ सू०। (२) पा० २।३।२९ सू०।

अवगम्य कथीकृतं वपुः
प्रियबन्धोस्तव निष्फलोदयः।
बहुलेऽपि गते निशाकर-
स्तनुतां दुःखमनङ्ग ! मोक्ष्यति ॥ १३ ॥

हरितारुणचारुबन्धनः
कलपुंस्कोकिलशब्दसूचितः।
वद सम्प्रति कस्य बाणतां
नवचूतप्रसवो गमिष्यति ॥ १४ ॥

अवगम्येति। हे (अनङ्ग !) अशरीर ! (प्रियबन्धोः) प्रियसखस्य (तव वपुः) शरीरं (कथीकृतम्) अकथा कथा सम्पद्यमानं कृतं शब्दमात्रावशिष्टम् (अवगम्य) ज्ञात्वा (निष्फलोदयः) उद्दीप्याभावात् उद्दीपनवैफल्यमिति भावः। (निशाकरः) चन्द्रः (बहुले) कृष्णपक्षे (गतेऽपि तनुतां) कार्श्यं (दुःखं) यथा तथा कृच्छ्रात् (मोक्ष्यति) वृथा वृद्धिरिति दुःखायिष्यत इत्यर्थः ॥ १३ ॥

हरितेति। (हरितारुणचारुबन्धनः) हरितश्च अरुणश्च। वर्णो वर्णेनेति तत्पुरुषः (१)। हरितारुणं चारु बन्धनं वृन्तं पुष्पस्य यस्य स तथोक्तः। (कलपुंस्कोकिलशब्दसूचितः) कलेन मधुरेण पुंस्कोकिलशब्देन पुरुषकोकिलनादेन सूचितः अनुमापितश्च चूतचर्वणकार्य्यत्वात्कलशब्दस्येति भावः। (नवचूतप्रसवः) नवचूतकुसुमं (सम्प्रति कस्य बाणतां) शरत्वं (गमिष्यति वद)। अन्यस्य पुष्पवाणस्याभावादिति भावः ॥ १४ ॥

---

(१) पा० २। १। ६९ सू०।

अलिपङ्क्तिरनेकशस्त्वया
गुणकृत्ये धनुषो नियोजिता ।
विरुतैः करुणस्वनैरियं
गुरुशोकामनुरोदितीव माम् ॥ १५ ॥
प्रतिपद्य मनोहरं वपुः
पुनरप्यादिश तावदुत्थितः ।
रतिदूतिपदेषु कोकिलां
मधुरालापनिसर्गपण्डिताम् ॥ १६ ॥

अलीति । (त्वया अनेकशः) बहुशः (धनुषः) कार्मुकस्य (गुणकृत्ये) मौर्वीकार्य्ये गुणवत्कर्म्मणि च (नियोजिता) अधिकृता (इयम् अलिपङ्क्तिः) (करुणस्वनैः) दीनस्वनैः (विरुतैः) कूजितैः (गुरुशोकां) दुर्भरदुःखाम् । गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भर इति शब्दार्णवः । (माम् अनुरोदितीव) । उपसर्गात्स-कर्म्मकत्वम् । रुदादिभ्यः सार्व्वधातुक इति इडागमः ॥ १५॥

प्रतिपद्येति । (तावत् पुनरपि मनोहरं वपुः) शरीरं (प्रति-पद्य) प्राप्य (उत्थितः) सन् (मधुरालापनिसर्गपण्डितां) मधुरालापेषु प्रियोक्तिषु निसर्गपण्डितां स्वभावप्रगल्भां (कोकिलां रतिदूतिप-देषु) सुरतदूतीस्थानेषु (आदिश) आज्ञापय प्रगल्भानामेव दौत्या-धिकार इति भावः । ङीबन्तस्यापि दूतीशब्दस्य छन्दोभङ्गभयात् ह्रस्वः । अपि माषं मषं कुर्य्याच्छन्दोभङ्गं त्यजेद्गिरमिति केचित् । उणादयो बहुलमिति बहुलग्रहणात् ह्रस्व इति वल्लभः ॥ १६ ॥

शिरसा प्रणिपत्य याचिता-
न्युपगूढानि सवेपथूनि च।
सुरतानि च तानि ते रहः
स्मर ! संस्मृत्य न शान्तिरस्ति मे ॥ १७ ॥

रचितं रतिपण्डित ! त्वया
स्वयमङ्गेषु ममेदमार्त्तवम्।
ध्रियते कुसुमप्रसाधनं
तव तच्चारु वपुर्न दृश्यते ॥ १८ ॥

शिरसेति। हे (स्मर !) (शिरसा प्रणिपत्य याचितानि सवेपथूनि) सकम्पानि। ट्वितोऽथुच् इति अथुच्प्रत्ययः (१)। सात्विकान्तरोपलक्षणमेतत्। स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू। अश्रुवैस्वर्यमित्यष्टौ सात्विकाः परिकीर्त्तिता इति (उपगूढानि) आलिङ्गनानि च। नपुंसके भावे क्तः। (तानि) अनुभूतप्रकाराणि (रहः) एकान्ते (सुरतानि च संस्मृत्य मे शान्तिर्नास्ति)। अत्र समानकर्त्तृत्वं दुर्घटं समानक्रियापेक्षास्तीति केचित् ॥ १७ ॥

रचितमिति। हे (रतिपण्डित !) रतिकुशल ! (त्वया मम अङ्गेषु) अवयवेषु (स्वयं रचितम्) ऋतुरस्य प्राप्तं (आर्त्तवं) वासन्तम्। ऋतोरण् इत्यण्प्रत्ययः (२)। (कुसुमप्रसाधनं) पुष्पाभरणम् इदं (ध्रियते) अवतिष्ठते। धृञ् अवस्थाने इति धातोर्भौवादिकात्कर्त्तरि लट्। (तव तत्) प्रसाधकं (चारु) सुन्दरं (वपुः) तु (न दृश्यते) ॥ १८ ॥

(१) पा० ३।३।८९ सू०। (२) पा० ५।१।१०५ सू०।

विबुधैरसि यस्य दारुणै-
रसमाप्ते परिकर्म्मणि स्मृतः ।
तमिमं कुरु दक्षिणेतरं
चरणं निर्म्मितरागमेहि मे ॥ १९ ॥

अहमेत्य पतङ्गवर्त्मना
पुनरङ्काश्रयणी भवामि ते ।
चतुरैः सुरकामिनीजनैः
प्रिय ! यावन्न विलोभ्यसे दिवि ॥ २० ॥

विबुधैरिति । (दारुणैः) क्रूरैः प्राणान्तिके कर्म्मणि नियोगादिति भावः । (विबुधैः) देवैः अनभिज्ञत्वञ्च ध्वन्यते । (यस्य) मच्चरणस्य (परिकर्म्मणि) प्रसाधने परिकर्म्म प्रसाधनमित्यमरः । (असमाप्ते) सति (स्मृतोऽसि) (तमिमं दक्षिणेतरं) वामं (मे चरणं निर्म्मितरागं) रचितलाक्षारागं (कुरु एहि) आगच्छ ॥ १९ ॥

अहमिति । (अहं पतङ्गवर्त्मना) शलभमार्गेण अग्निप्रवेशेनेत्यर्थः । पतङ्गः शलभे चाग्नौ मार्ज्जारेऽर्कें शरे खग इति वैजयन्ती । (एत्य) आगत्य (पुनस्ते अङ्काश्रयणी) उत्सङ्गवर्त्तिनी (भवामि) सम्प्रत्येव भविष्यामि । वर्त्तमानसामीप्ये वर्त्तमानवद्वेति लट् (१) । हे (प्रिय !) (दिवि) स्वर्गे (चतुरैः सुरकामिनीजनैः) अप्सरोगणैः (यावन्न विलोभ्यसे) विलोभयिष्यसे । यावत्पुरानिपातयोर्लट् (२) इति लट् ॥ २० ॥

---

(१) पा० ३ । ३ । १३१ सू० । (२) पा० ३ । ३ । ४ सू० ।

मदनेन विनाकृता रतिः
क्षणमात्रं किल जीवितेति मे।
वचनीयमिदं व्यवस्थितं
रमण! त्वामनुयामि यद्यपि ॥ २१ ॥

क्रियतां कथमन्त्यमण्डनं
परलोकान्तरितस्य ते मया।
सममेव गतोऽस्यतर्कितां
गतिमङ्गेन च जीवितेन च ॥ २२ ॥

मदनेनेति। हे (रमण! त्वाम् अनुयामि यद्यपि) अनुगमिष्याम्येव। वर्त्तमानसामीप्ये वर्त्तमानवद्वेति लट् (१)। यद्यपीत्यवधारणे इति केशवः। किन्तु (रतिः मदनेन विनाकृता) वियोजिता सतीत्यर्थः। सुप् सुपेति समासः। (क्षणमात्रं जीविता किल) (इति इदं वचनीयं) निन्दा (मे) मम (व्यवस्थितं) स्थिरमभूत् ॥ २१ ॥

क्रियतामिति। (परलोकान्तरितस्य) परलोके अन्तरितस्य व्यवहितस्य मृतस्येत्यर्थः। (ते) तव (मया अन्त्यमण्डनं कथं) केन प्रकारेण (क्रियताम्)। क्रियतामित्यत्र कामचारे लोट्। हुतदग्धस्य ते यथेच्छमण्डनमपि न सम्भवतीत्यर्थः। कुतः (अङ्गेन च जीवितेन च समं) सहैव (अतर्किताम्) अविचारितां (गतिं गतोऽसि)। इह मृतशरीरमपि नास्ति कस्य मण्डनमिति भावः ॥२२॥

---

(१) पा० ३। ३। १३१ सू०।

ऋजुतां नयतः स्मरामि ते
शरमुत्सङ्गनिषण्णधन्वनः ।
मधुना सह सस्मितां कथां
नयनोपान्तविलोकितञ्च यत् ॥ २३ ॥
क्व नु ते हृदयङ्गमः सखा
कुसुमायोजितकार्म्मुको मधुः ।
न खलूग्ररुषा पिनाकिना
गमितः सोऽपि सुहृद्गतां गतिम् ॥ २४ ॥

ऋजुतामिति । (शरम् ऋजुतां) आर्ज्जवं ( नयतः ) प्रापयतः ( उत्सङ्गनिषण्णधन्वनः ) उत्सङ्गे निषण्णम् अङ्कगतं धनुर्यस्य तस्य । धनुषश्च इत्यनङादेशः । ( ते ) तव ( मधुना ) वसन्तेन (सह) । मधुर्दैत्ये चैत्रे वसन्ते चेति विश्वः । ( सस्मितां कथां ) आलापं तथा (यत् नयनोपान्तविलोकितम्) अपाङ्गवीक्षणं ते इत्यनुषङ्गः । तत्र (स्मरामि) ॥ २३ ॥

क्व न्विति । हृदयं गच्छतीति ( हृदयङ्गमः ) हृद्यः । खच्-प्रकरणे गमेः सुप्युपसंख्यानमिति खच्प्रत्ययः । अरुर्द्विषदजन्तस्य मुम् इति मुमागमः । ( ते ) तव ( सखा कुसुमायोजितकार्म्मुकः ) कुसुमैरायोजितमाचरितं कार्म्मुकं येन कार्म्मुकनिर्म्माता ( मधुः ) वसन्तः (क्व नु) क्व वा गत इति शेषः । अथवा (सोऽपि) (उग्ररुषा) तीव्रकोपेन ( पिनाकिना ) ईश्वरेण ( सुहृद्गताम् ) सुहृदा मदनेन गतां प्राप्तां (गतिं) भस्मतामित्यर्थः । न (गमितः खलु) न प्रापितः किम् । जिज्ञासानुनये खलु इत्यमरः ॥ २४ ॥

अथ तैः परिदेविताक्षरै-
र्हृदये दिग्धशरैरिवाहतः।
रतिमभ्युपपत्तुमातुरां
मधुरात्मानमदर्शयत् पुरः॥ २५॥

तमवेक्ष्य रुरोद सा भृशं
स्तनसम्बाधमुरो जघान च।
स्वजनस्य हि दुःखमग्रतो
विवृतद्वारमिवोपजायते॥ २६॥

इति चैनमुवाच दुःखिता
सुहृदः पश्य वसन्त! किं स्थितम्।

अथेति। (अथ) रतिविलापानन्तरम् (तैः परिदेविताक्षरैः) विलापवचनैः (हृदये दिग्धशरैः) विषलिप्तमुखैः शरैः (इवाहतः) सन्। विषाक्ते दिग्धलिप्तकावित्यमरः। (मधुः) वसन्तः (आतुराम्) आपन्नां (रतिम्) (अभ्युपपत्तुम्) अनुग्रहीतुम् आश्वासयितुमित्यर्थः। अभ्युपपत्तिरनुग्रह इत्यमरः (आत्मानं पुरः अदर्शयत्) आविरभूदित्यर्थः॥ २५॥

तमिति। (सा) रतिः (तं) मधुम् (अवेक्ष्य) दृष्ट्वा (भृशं रुरोद) स्तनौ सम्बाध्य (स्तनसम्बाधम्) परिक्लिश्यमाने चेति णमुल्। (उरो जघान) ताड़ितवती (च)। (हि) तथाहि (स्वजनस्य अग्रतः दुःखं) (विवृतद्वारमिव) विवृतम् अपसारितं द्वारं कवाटं यस्य तदिव (उपजायते) आविर्भवति उच्छृङ्खलं प्रवर्त्तत इत्युत्प्रेक्षाभिप्रायः॥ २६॥

तदिदं कणशो विकीर्य्यते
पवनैर्भस्म कपोतकर्व्वुरम् ॥ २७ ॥
अयि सम्प्रति देहि दर्शनं
स्मर ! पर्य्युत्सुक एष माधवः।
दयितास्वनवस्थितं नृणां
न खलु प्रेम चलं सुहृज्जने ॥ २८ ॥
अमुना ननु पार्श्ववर्त्तिना
जगदाज्ञां ससुरासुरं तव।

इतीति। दुःखमस्याः सञ्जातं (दुःखिता) सञ्जातदुःखेत्यर्थः। तारकादित्वादितच् (१) सा रतिः (एनं) वसन्तम् (इत्युवाच च)। चकारः पूर्व्वोक्तसमुच्चयार्थः। हे (वसन्त !) (पश्य) (सुहृदः) त्वत्सखस्य (किं स्थितं) किमुपस्थितम्। (तदिदं कपोतकर्व्वुरं) पारावतशबलं (कणशः) चूर्णीभूतम्। अल्पार्थाच्छस्प्रत्ययः। (भस्म पवनैः विकीर्य्यते) विक्षिप्यते (पश्य) भस्मीभूतस्ते सुहृदित्यर्थः ॥ २७ ॥

अयीति। (अयि स्मर !) (सम्प्रति दर्शनं देहि एष माधवः) वसन्तः (पर्य्युत्सुकः) त्वद्दर्शनोत्कण्ठितः। त्वामप्यनादृतवतोऽस्य को माधव इत्याशङ्क्याह। (नृणां) पुरुषाणां (दयितासु प्रेम अनवस्थितम्) अस्थिरं चलमित्यर्थः। (सुहृज्जने प्रेम तु न चलं) (खलु) ॥ २८ ॥

---

(१) पा० ५। २। ३६ सू०।

विसतन्तुगुणस्य कारितं
धनुषः पेलवपुष्पपत्रिणः ॥ २९ ॥
गत एव न ते निवर्त्तते
स सखा दीप इवानिलाहतः।
अहमस्य दशेव पश्य मा-
मविषह्यव्यसनेन धूमिताम् ॥ ३० ॥
विधिना कृतमर्द्धवैशसं
ननु मां कामवधे विमुञ्चता।

ईदृशाः सुहृदः कति न सन्तीत्याशङ्क्य न कोपीत्याह अमुनेति। (ननु) मदन! (पार्श्ववर्त्तिना) सहचरेण (अमुना) वसन्तेन (ससुरासुरं) सुरासुरसहितं (जगत्) (विसतन्तुगुणस्य) मृणालसूत्रमौर्वीकस्य (पेलवपुष्पपत्रिणः) पेलवानि कोमलानि पुष्पाण्येव पत्रिणो वाणा यस्य तस्य (तव धनुषः आज्ञां कारितं) जगदाज्ञा कारितेत्यर्थः। हृक्रोरन्यतरस्यामिति जगतः कर्म्मत्वम् ॥ २९ ॥

गत इति। (स ते सखा अनिलाहतः) वायुताड़ितः (दीप इव) (गत एव न निवर्त्तते) (अहमस्य) दीपायमानस्य (दशा) वर्त्तिरिव तिष्ठामीति शेषः। दशावर्त्तीववस्थायां वस्त्रान्ते स्युर्दशा अपीति विश्वः। कुतः (अविषह्यव्यसनेन) सोढुमशक्यदुःखप्रकर्षेण (धूमितां) सञ्जातधूमां (मां पश्य) धूमवत्त्वान्नष्टदीपदशासाम्यं धूमस्य व्यसनमेवेत्यर्थः ॥ ३० ॥

विधिनेति। (ननु) वसन्त! (कामबधे) मदनबधे (मां विमु-

अनपायिनि संश्रयद्रुमे
गजभग्ने पतनाय वल्लरी ॥ ३१ ॥
तदिदं क्रियतामनन्तरं
भवता बन्धुजनप्रयोजनम्।
विधुरां ज्वलनातिसर्ज्जना-
न्ननु मां प्रापय पत्युरन्तिकम् ॥ ३२ ॥

स्वता) वर्ज्जयता अमारयतेत्यर्थः। (विधिना) दैवेन विशसति छिनत्तीति विशसो घातुकः पचाद्यच्। विशसस्य कर्म्म वैशसम् युवादित्वादण्प्रत्ययः। (अर्द्धवैशसं) अर्द्धबधः (कृतम्)। अर्द्धो वा एष आत्मनो यत्पत्नीति श्रुतेः। पत्युः स्वस्य च आश्रयाश्रयिभूतयोरेकपदार्थत्वाभिप्रायेणार्द्धोक्तिः। तथाच एकदेशबधे देशान्तरस्यापि बधनियमनान्मामपि विधिरघ्नन्नेव हतवानिति तात्पर्य्यम्। एतदेवोपपादयति (अनपायिनि) अनपायित्वेन विश्वस्ते (संश्रयद्रुमे) आश्रयवृक्षे (गजभग्ने) सति (वल्लरी) लता (पतनाय) भवतीति शेषः। पतितुमेव सालमित्यर्थः। तुमर्थाच्च भाववचनादिति चतुर्थी (१) ॥ ३१ ॥

सम्प्रत्यनन्तरकर्त्तव्यं प्रार्थयते

तदिति। (तत्) तस्मात्कारणादुक्तप्रकारेण अन्यथापि मरणस्यावश्यम्भावादित्यर्थः। (अनन्तरं भवता इदं) वक्ष्यमाणं (बन्धुजनप्रयोजनं) बन्धुकृत्यं (क्रियताम्) प्रार्थनायां लोट्। तदेवोपदिशति (ननु) वसन्त! (विधुरां) विवशां (मां ज्वलनातिसर्ज्जनात्) अग्निदानात् (पत्युरन्तिकं प्रापय) अग्निप्रवेशनं कारयेत्यर्थः ॥३२॥

(१) पा० २।३।१५ सू०।

शशिना सह याति कौमुदी
सह मेघेन तड़ित् प्रलीयते।
प्रमदाः पतिवर्त्मगा इति
प्रतिपन्नं हि विचेतनैरपि ॥ ३३ ॥

अमुनैव कषायितस्तनी
सुभगेन प्रियगात्रभस्मना।
नवपल्लवसंस्तरे यथा
रचयिष्यामि तनुं विभावसौ ॥ ३४ ॥

कर्त्तव्यस्यायमर्थः स्त्रीणामित्याह

शशिनेति। (कौमुदी) चन्द्रिका (शशिना सह याति) शशिनि अस्तमिते स्वयं नश्यतीत्यर्थः। (तडित्) सौदामनी (मेघेन सह प्रलीयते) प्रणश्यति। कर्त्तरि लट्। (प्रमदाः) स्त्रियः पतिवर्त्म गच्छन्तीति (पतिवर्त्मगाः) पतिमार्गानुगामिन्यः (इति) एतत् (वचेतनैः) अल्पचेतनैरविवेकिभिरपीत्यर्थः। (प्रतिपन्नं) ज्ञातम्। अलवणा यवागूः अनुदरा कन्येतिवत् अल्पत्वाभिप्रायेण विचेतनैः अपीति निर्द्देशः (नाथस्तु पृथग्जनैरिति पपाठ। पतिवर्त्मगा इत्यत्र स्मृतिः। आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशाः। मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रतेति ॥ ३३ ॥

अमुनैवेति। (अमुना) पुरोवर्त्तिना (सुभगेन) शोभनेन (प्रियगात्रभस्मनैव)। एवकारो मण्डनान्तरनिवृत्त्यर्थः। (कषायितस्तनी) रञ्जितस्तनी। रागे क्वाथे कषायोऽस्त्री निर्यासे सौरभे रस इति वैजयन्ती। (नवपल्लवसंस्तरे यथा) नवपल्लवतल्प इव

कुसुमास्तरणे सहायतां
बहुशः सौम्य! गतस्त्वमावयोः।
कुरु सम्प्रति तावदाशु मे
प्रणिपाताञ्जलियाचितश्चिताम्॥ ३५॥

तदनु ज्वलनं मदर्पितं
त्वरयेर्दक्षिणवातवीजनैः।
विदितं खलु ते यथा स्मरः
क्षणमप्युत्सहते न मां विना॥ ३६॥

(विभावसौ) वह्नौ (तनुं) शरीरं (रचयिष्यामि) निधास्यामीत्यर्थः॥ ३४॥

कुसुमेति। हे (सौम्य!) साधो! (त्वम् आवयो) रतिपञ्चवाणयोः (बहुशः) बहुवारं (कुसुमास्तरणे) पुष्पशयने (सहायतां गतः)। (सम्प्रति प्रणिपाताञ्जलियाचितः) प्रणिपाताञ्जलिना याचितः अञ्जलिपूर्व्वकं प्रार्थितः सन्नित्यर्थः। (आशु मे चितां) काष्ठचयं (कुरु) कुरुष्व तावत्। यथेह तथामुत्रोपकर्त्तव्यं मित्रेणेत्यर्थः॥ ३५॥

तदिति। (तदनु) तच्चिताकरणादनु अनन्तरं मय्यर्पितं (मदर्पितं) (ज्वलनं) अग्निं (दक्षिणवातवीजनैः) मलयमारुतसञ्चालनैः (त्वरयेः) त्वरितं ज्वलयेत्यर्थः। त्वराहेतुमाह (ते) तव (विदितं खलु) मतिबुद्धिपूजार्थेभ्यश्चेति वर्त्तमाने क्तः(१)। तद्योगात् षष्ठी। (यथा) येन प्रकारेण (स्मरः मां विना क्षणमपि नोत्सहते) न हृष्यति तथा त्वया ज्ञातमेवेत्यर्थः॥ ३६॥

---

(१) पा० ३।२।१८८ सू०।

इति चापि विधाय दीयतां
सलिलस्याञ्जलिरेक एव नौ ।
अविभज्य परत्र तं मया
सहितः पास्यति ते स बान्धवः ॥३७॥

परलोकविधौ च माधव !
स्मरमुद्दिश्य विलोलपल्लवाः ।
निवपेः सहकारमञ्जरीः
प्रियचूतप्रसवो हि ते सखा ॥ ३८ ॥

इति देहविमुक्तये स्थितां
रतिमाकाशभवा सरस्वती ।

इतीति । (इति अपि च) इत्येवं (विधाय) कृत्वा (नौ) आवाभ्याम् (एक एव सलिलस्याञ्जलिर्दीयताम्) । (तं) अञ्जलिं (स ते बान्धवः) सखा स्मरः (परत्र) परलोके (मया सहितोऽविभज्य पास्यति ) ॥ ३७ ॥

परलोक इति । किञ्च हे (माधव !) वसन्त ! परलोकविधौ पिण्डोदकादिकर्म्मणि (स्मरमुद्दिश्य विलोलपल्लवाः) विलोलाः पल्लवाः यासु ताः (सहकारमञ्जरीः चूतवल्लरीः (निवपेः) देहि ( हि ) यस्मात्कारणात् ( ते सखा ) स्मरः ( प्रियचूतप्रसवः ) प्रियाः चूतप्रसवाः यस्य स तथोक्तः ॥ ३८ ॥

इतीति । (इति) ( देहविमुक्तये ) देहस्य विमुक्तये शरीरस्य विसर्गाय (स्थितां) कृतनिश्चयामिति यावत् (रतिम्) (आकाशभवा सरस्वती ) अशरीरा वाक् (हृदशोषविक्लवां) हृदस्य जलाधारस्य

शफरीं ह्रदशोषविक्लवां
प्रथमा वृष्टिरिवान्वकम्पयत् ॥३९॥

कुसुमायुधपत्नि! दुर्लभ-
स्तव भर्त्ता न चिराद्भविष्यति।
शृणु येन स कर्म्मणा गतः
शलभत्वं हरलोचनार्च्चिषि ॥ ४० ॥

अभिलाषमुदीरितेन्द्रियः
स्वसुतायामकरोत् प्रजापतिः।
अथ तेन निगृह्य विक्रिया-
मभिशप्तः फलमेतदन्वभूत् ॥ ४१ ॥

शोषेण विक्लवां (शफरीं) प्रोष्ठीम् प्रोष्ठी तु शफरी द्वयोरित्यमरः। (प्रथमा वृष्टिः) वर्षमिव (अन्वकम्पयत्) अनुकम्पितवती सदयमुवाचेत्यर्थः। कृपा दयानुकम्पा स्यादित्यमरः ॥ ३९ ॥

कुसुमेति। हे (कुसुमायुधपत्नि)! (तव भर्त्ता चिरात्) चिरं (दुर्लभो न भविष्यति) किन्त्वचिरमेव सुलभो भविष्यतीत्यर्थः। किञ्च (शृणु) तत्कर्म्मेति शेषः (येन कर्म्मणा सः ते भर्त्ता हरलोचनार्च्चिषि) हरलोचनस्यार्च्चिः ज्वाला। ज्वाला भासो न पुंस्यर्च्चिरित्यमरः। तस्मिन्। (शलभत्वं) पतङ्गत्वं (गतः)। समौ पतङ्गशलभावित्यमरः ॥ ४० ॥

तदेव कर्म्मोपाचष्टे

अभिलाषमिति। (उदीरितेन्द्रियः) प्रेरितेन्द्रियः स्मरेणेति शेषः। (प्रजापतिः) ब्रह्मा (स्वसुतायां) सरस्वत्याम् (अभिलाषम्)

परिणेष्यति पार्व्वतीं यदा
तपसा तत्प्रवणीकृतो हरः।
उपलब्धसुखस्तदा स्मरं
वपुषा स्वेन नियोजयिष्यति ॥ ४२ ॥
इति चाह स धर्म्मयाचितः
स्मरशापावधिदां सरस्वतीम्।
अशनेरमृतस्य चोभयो-
र्वशिनश्चाम्बुधराश्च योनयः॥४३॥ (युग्मकम्)

अनुरागम् (अकरोत्)। (अथ तेन) प्रजापतिना (विक्रियाम्) इन्द्रियविकारं (निगृह्य) निरुध्य (अभिशप्तः) सन् (एतत् फलं) दाहात्मकं स्वकर्म्मफलम् (अन्वभूत्) ॥ ४१ ॥

शापावधिरपि तेनैवोक्त इत्याह श्लोकद्वयेन परिणेष्यतीत्यादिना। (धर्म्मयाचितः) धर्म्मेण धर्म्माख्यप्रजापतिना याचितः प्रार्थितः (सः) भगवान् ब्रह्मा ( तपसा ) कारणेन (तत्प्रवणीकृतः) तस्यां पार्व्वत्यां प्रवणीकृतः अभिमुखीकृतः (हरः) शिवः (यदा पार्व्वतीं परिणेष्यति) उद्वक्ष्यति तदा ( उपलब्धसुखः ) प्राप्तानन्दः सन् ( स्मरं ) कामं ( स्वेन वपुषा नियोजयिष्यति ) सङ्गमयिष्यति (इति एवं (स्मरशापावधिदाम्) स्मरशापस्यावधिदाम् अवसानदायिनीं ( सरस्वतीं ) वाचं च (आह) एवं शापावधिमप्युक्तवानित्यर्थः। ननु तथा क्रुद्धस्य कथमीदृशी शान्तिरत आह। (वशिनः) जितेन्द्रियाश्च) (अम्बुधराश्च) (अशनेरमृतस्य) चेति (उभयोर्योनयः) प्रभवाः। वशिपक्षे अशन्यमृतशब्दौ कोपप्रसादपरौ अन्यत्र वैद्युतामुदकपरौ। युग्मकम् ॥ ४२॥॥ ४३॥

तदिदं परिरक्ष शोभने
भवितव्यप्रियसङ्गमं वपुः ।
रविपीतजला तपात्यये
पुनरोघेन हि युज्यते नदी ॥ ४४ ॥

इत्थं रतेः किमपि भूतमदृश्यरूपं
मन्दीचकार मरणव्यवसायबुद्धिम् ।
तत्प्रत्ययाच्च कुसुमायुधबन्धुरेना-
माश्वासयत् सुचरितार्थपदैर्वचोभिः ॥ ४५ ॥

तदिति । हे (शोभने !) (तत्) तस्मात्कारणात् (भवितव्यप्रियसङ्गमं) भवितव्यः भविष्यन् प्रियसङ्गमो यस्य तत्तथोक्तम् (इदं) (वपुः) (परिरक्ष) । (हि) तथाहि (रविपीतजला नदी) (तपात्यये) प्रावृषि । प्रावृट् तपात्यय इति हलायुधः । (पुनरोघेन) प्रवाहेण (युज्यते) सङ्गच्छते हि ॥ ४४ ॥

इत्थमिति । (इत्थं) अनेन प्रकारेण (अदृश्यरूपं किमपि भूतं) कश्चित्प्राणी ( युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिष्वित्यमरः । (रतेः) मदनदाराणां (मरणव्यवसायबुद्धिं) मरणोद्योगबुद्धिं (मन्दीचकारः) निवारयामासेत्यर्थः । मूढाल्पापटुनिर्भाग्या मन्दा इत्यमरः । अथ (कुसुमायुधबन्धुः) वसन्तश्च ( तत्प्रत्ययात् ) तस्मिन् भूते विश्वासात् । प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुष्वित्यमरः। (एनां) रतिं (सुचरितार्थपदैः) सुष्ठु चरितार्थानि पदानि येषां तैः (वचोभिः) वाक्यैः (आश्वासयत्) । सर्व्वथा ते देवताप्रसादात् प्रियसङ्गमो भविष्यतीत्यादिवचनैः अस्याः दुःखमपाचकारेत्यर्थः ॥ ४५ ॥

अथ मदनवधूरुपप्लवान्तं
व्यसनकृशा परिपालयाम्बभूव।
शशिन इव दिवातनस्य लेखा
किरणपरिक्षयधूसरा प्रदोषम् ॥ ४६ ॥

इति श्रीकालिदासकृतौ कुमारसम्भवे
महाकाव्ये रतिविलापो नाम
चतुर्थः सर्गः।

अथेति। (अथ) अनन्तरं (व्यसनकृशा) व्यसनेन दुःखेन कृशा (मदनवधूः) रतिः (उपप्लवान्तं) विपदवधिं (किरणपरिक्षयधूसरा) किरणपरिक्षयेण धूसरा मलिना (दिवातनस्य) दिनभवस्य सायश्चिरमित्यादिना ष्टयुप्रत्ययः। (शशिनः) चन्द्रस्य (लेखा) (प्रदोषं) रात्रिमिव (परिपालयाम्बभूव) प्रतीक्षाञ्चक्रे। पुष्पिताग्रावृत्तम् अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रेति लक्षणात्॥ ४६ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां
चतुर्थः सर्गः ॥

## पञ्चमः सर्गः।

तथा समक्षं दहता मनोभवं
पिनाकिना भग्नमनोरथा सती।
निनिन्द रूपं हृदयेन पार्व्वती
प्रियेषु सौभाग्यफला हि चारुता॥ १॥

तथेति। पर्व्वतस्यापत्यं स्त्री (पार्व्वती तथा) तेन प्रकारेण अक्ष्णोः समीपे (समक्षं) पुरतः। अव्ययं विभक्तिसमीपसमृद्धी-त्यादिना अव्ययीभावः (१)। (मनोभवं) मन्मथं (दहता) भस्मी-कुर्व्वता (पिनाकिना) ईश्वरेण भग्नः खण्डितः मनोरथः अभिलाषो यस्याः सा तथोक्ता सती (भग्नमनोरथा सती हृदयेन) मनसा (रूपं) सौन्दर्य्यं (निनिन्द) धिक् मे रूपं यत् हरमनोहरणाय नालमिति गर्हितवतीत्यर्थः। युक्तञ्चैतदित्याह तथाहि (चारुता) सौन्दर्य्यं (प्रियेषु) पतिषु विषयेषु सौभाग्यं प्रियवाल्लभ्यं फलं यस्याः सा तथोक्ता (सौभाग्यफला)। सौन्दर्य्यस्य तदेव फलं यद्भर्त्तृसौभाग्यं लभ्यते नोचेत् विफलं तदिति भावः। अस्मिन् सर्गे वंशस्थं वृत्तम्। जतौ तु वंशस्थमुदीरितं जराविति लक्षणात्॥ १॥

---

(१) पा० २। १। ६ सू०।

इयेष सा कर्त्तुमवन्ध्यरूपतां
समाधिमास्थाय तपोभिरात्मनः ।
अवाप्यते वा कथमन्यथा द्वयं
तथाविधं प्रेम पतिश्च तादृशः ॥ २ ॥
निशम्य चैनां तपसे कृतोद्यमां
सुतां गिरीशप्रतिसक्तमानसाम् ।

इयेषेति । (सा) पार्व्वती (समाधिम्) एकाग्रताम् (आस्थाय) अवलम्ब्य (तपोभिः वक्ष्यमाणनियमैः करणभूतैः (आत्मनः) स्वस्य (अवन्ध्यरूपतां) सफलसौन्दर्य्यं (कर्त्तुम् इयेष) इच्छति स्म इषधातोरतीते लिट् तपसा शिवं वशीकर्त्तुमुद्युक्तेत्यर्थः । (अन्यथा) ततोऽन्यप्रकारेण (कथं वा तद्द्वयमवाप्यते) । किं तद्द्वयं तथाभूता विधा प्रकारो यस्य तत् (तथाविधं प्रेम) स्नेहः येनार्द्धाङ्गहरा भवेदिति भावः । (तादृशः पतिश्च) यो मृत्युञ्जय इति भावः । द्वयमेव खलु स्त्रीणामपेक्षितं यद्भर्त्तृवाल्लभ्यं जीवद्भर्त्तृकत्वञ्चेति तच्च तपश्चर्य्यैकसाध्यमिति निश्चिकायेत्यर्थः । अत्र मनुः । यद्दुष्करं यद्दुरापं यद्दुर्गं यच्च दुस्तरम् तत्सर्व्वं तपसा प्राप्यं तपो हि दुरतिक्रममिति (अ० ११ श्लो० २३८) ॥ २ ॥

निशम्येति । (मेना) मेनका (च गिरीशप्रतिसक्तमानसां) हरासक्तचित्तां (तपसे) तपश्चरणाय (कृतोद्यमां) कृतोद्योगां (सुतां निशम्य) श्रुत्वा (एनां) पार्व्वतीं (वक्षसा परिरभ्य) आलिङ्ग्य (महतः मुनिव्रतात्) तपसः (निवारयन्ती उवाच) । मुनिव्रतादित्यत्र यद्यपि मुनिव्रतस्य मेनकाया अनीप्सितत्वात् वारणार्थानामी-

उवाच मेना परिरभ्य वक्षसा
निवारयन्ती महतो मुनिव्रतात् ॥ ३ ॥
मनीषिताः सन्ति गृहेषु देवता-
स्तपः क्व वत्से क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं
शिरीषपुष्पं न पुनः पतत्रिणः ॥ ४ ॥

ष्मितं(१) इति नापादानत्वम् तथापि कृतोद्यमामिति मानसप्रवेशोक्त-त्वात् ध्रुवमपायेऽपादानमिति अपादानत्वमेव स्यात् यथाह भाष्य-कारः । यत्र मिथ्या सम्प्राप्य निवर्त्तते तत्र ध्रुवमपायेऽपादानमिति प्रसिद्धम् ॥ ३ ॥

सामान्यनिषेधमुक्त्वा विशेषनिषेधमाह

मनीषिता इति । हे (वत्से) मनस ईषिताः इष्टाः (मनीषिताः) पृषोदरादित्वात्साधुः । (देवताः) शच्यादयः (गृहेषु सन्ति) त्वं ता आराधयेति शेषः । (तपः क्व) तवेदं (तावकम् । युष्मदस्मदोरन्य-तरस्यां खञ् च इत्यणप्रत्ययः तवकममकावेकवचने इति(२) तवका-देशः । (वपुश्च क्व) तथाहि (पेलवं) मृदुलं (शिरीषपुष्पं भ्रमरस्य) भृङ्गस्य (पदं) पदस्थितिं (सहेत) । (पतत्रिणः पुनः) पक्षिणस्तु (पदं न सहेत) अतिसौकुमार्य्याद्दिव्योपभोगयोग्यं ते वपुर्न दारुणतपः-क्षममित्यर्थः । दृष्टान्तस्तु सधर्म्मस्य वस्तुनः प्रतिविम्बनमिति लक्ष-णादत्र दृष्टान्तालङ्कारः ॥ ४ ॥

---

(१) पा० १ । ४ । २७ सू० ।
(२) पा० ४ । ३ । ३ सू० ।

इति ध्रुवेच्छामनुशासती सुतां
शशाक मेना न नियन्तुमुद्यमात् ।
क ईप्सितार्थस्थिरनिश्चयं मनः
पयश्च निम्नाभिमुखं प्रतीपयेत् ॥ ५ ॥
कदाचिदासन्नसखीमुखेन सा
मनोरथज्ञं पितरं मनस्विनी ।
अयाचतारण्यनिवासमात्मनः
फलोदयान्ताय तपःसमाधये ॥ ६ ॥

इतीति । (इति) एवम् (अनुशासती) उपदिशन्ती (मेना ध्रुवेच्छां) स्थिरव्यवसायां (सुतां) पार्वतीम् (उद्यमात्) उद्योगात्तपोलक्षणात् (नियन्तुं) निवारयितुं (न शशाक) समर्था नाभूत् । तथाहि ईप्सितार्थे स्थिरनिश्चयं (ईप्सितार्थस्थिरनिश्चयं मनः निम्नाभिमुखं पयश्च कः प्रतीपयेत्) प्रतिकूलयेत प्रतिनिवर्त्तयेदित्यर्थः । निम्नप्रवणं पय इव इष्टार्थाभिनिविष्टं मनो दुर्व्वारमिति भावः । अप्रस्तुतप्रस्तुतयोरेकधर्म्माभिसम्बन्धत्वादप्रस्तुतप्रस्तुतयो दीपकन्तु निगद्यते । अथकारकमेकं स्यादनेकासु क्रियासु चेदिति लक्षणादत्र दीपकानुप्राणितः सामान्येन विशेषसमर्थनादर्थान्तरन्यासालङ्कारः ॥ ५ ॥

कदाचिदिति । अथ (कदाचित् मनस्विनी) स्थिरचित्ता (सा) पार्व्वती (मनोरथज्ञम्) अभिलाषाभिज्ञं (पितरं) हिमवन्तम् आसन्नसखी आप्तसखी सैव मुखम् उपायः मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपीति विश्वः । तेन (आसन्नसखीमुखेन) । फलोदयः फलोत्पत्तिः अन्तः अवधिर्यस्य तस्मै (फलोदयान्ताय तपःसमाधये)

अथानुरूपाभिनिवेशतोषिणा
कृताभ्यनुज्ञा गुरुणा गरीयसा।
प्रजासु पश्चात् प्रथितं तदाख्यया
जगाम गौरी शिखरं शिखण्डिमत् ॥७॥

विमुच्य सा हारमहार्य्यनिश्चया
विलोलयष्टिप्रविलुप्तचन्दनम्।
बबन्ध बालारुणबभ्रु वल्कलं
पयोधरोत्सेधविशीर्णसंहति ॥ ८ ॥

तपोनियमार्थम् (आत्मनः) स्वस्य (अरण्यनिवासं) वनवासम् (अयाचत)। दुह्याचित्यादिना दुह्याचपचदण्डरुधिप्रच्छिभ्रू चिशासि-जिमन्थमुषाम्। कर्म्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् द्विकर्म्मकत्वम् ॥ ६ ॥

अथेति। (अथ गौरी) अनुरूपेण योग्येन अभिनिवेशेनाग्रहेण तुष्यतीति तथोक्तेन (अनुरूपाभिनिवेशतोषिणा गरीयसा) पूज्यतमेन (गुरुणा) पित्रा (कृताभ्यनुज्ञा) तपः कुर्व्विति कृतानुमतिः सती (पश्चात्) तपःसिद्ध्युत्तरकालं (प्रजासु) जनेषु (तदाख्यया) तस्याः गौर्य्याः संज्ञया प्रथितं गौरीशिखरमिति प्रसिद्धमित्यर्थः। (शिखण्डिमत्) नतु हिंस्रप्राणिप्रचुरमिति भावः। (शिखरं) शृङ्गं (जगाम) ययौ ॥ ७ ॥

विमुच्येति। (अहार्य्यनिश्चया) अनिवार्य्यनिश्चया (सा) गौरी विलोलाभिश्चलाभिः यष्टिभिः प्रतिसरैः प्रविलुप्तं प्रमृष्टं चन्दनं स्तनान्तरगतं येन तं तथोक्तं (विलोलयष्टिप्रविलुप्तचन्दनं हारं) मुक्तावलीं (विमुच्य) विहाय (बालारुणबभ्रु) बालार्कपिङ्गलं पयो-

यथा प्रसिद्धैर्मधुरं शिरोरुहै-
र्जटाभिरप्येवमभूत्तदाननम् ।
न षट्पदश्रेणिभिरेव पङ्कजं
सशैवलासङ्गमपि प्रकाशते ॥ ९ ॥
प्रतिक्षणं सा कृतरोमविक्रियां
व्रताय मौञ्जीं त्रिगुणां बभार याम् ।

धरयोः स्तनयोः उत्सेधेन उच्छ्रायेण विशीर्णा विघटिता त्रुटिता संहतिरवयवसंश्लेषो यस्य तत् तथोक्तं (पयोधरोत्सेधविशीर्णसंहति वल्कलं) कण्ठलम्बि स्तनोत्तरीयभूतं (बबन्ध) धारयामासेत्यर्थः ॥८॥

यथेति । तस्याः देव्याः आननं (तदाननं प्रसिद्धैः) भूषितैः । प्रसिद्धौ ख्यातभूषितावित्यमरः । रोहन्तीति रुहाः । इगुपधज्ञाप्रीकिरः क इति (१) कप्रत्ययः । शिरसि रुहाः तैः (शिरोरुहैः) मूर्द्धजैः (यथा मधुरं) प्रियम् (अभूत्) स्वादुप्रियौ तु मधुराविव्यमरः । (जटाभिरप्येवं मधुरम् अभूत्) । तथाहि (पङ्कजं) पद्मं (षट्पदश्रेणिभिः) भ्रमरपङ्क्तिभिरेव (न) । किन्तु सह शैवलासङ्गेन (सशैवलासङ्गमपि) । तेन सहेति तुल्ययोगे (२) बहुव्रीहिः । (प्रकाशते) शैवलेनापि शोभत एवेत्यर्थः ॥ ९ ॥

प्रतिक्षणमिति । (सा) देवी (प्रतिक्षणं) क्षणे क्षणे (कृतरोमविक्रियां) पारुष्यात्कृतरोमाञ्चां (त्रिगुणां) त्रिरावृत्तां यां (मौञ्जीं) मुञ्जमयीं मेखलां (व्रताय) तपसे (बभार) । तदेव पूर्व्वं प्रथमं यस्य तत्पूर्व्वं यथा तथा निबद्धया (तत्पूर्व्वनिबद्धया तया)

---

(१) पा० ३ । १ । १३५सू० ।  (२) पा० २ । २ । २८सू० ।

अकारि तत्पूर्व्वनिबद्धया तया
सरागमस्या रशनागुणास्पदम् ॥ १० ॥
विसृष्टरागादधरान्निवर्त्तितः
स्तनाङ्गरागारुणिताच्च कन्दुकात् ।
कुशाङ्कुरादानपरिक्षताङ्गुलिः
कृतोऽक्षसूत्रप्रणयी तया करः ॥ ११ ॥
महार्हशय्यापरिवर्त्तनच्युतैः
स्वकेशपुष्पैरपि या स्म दूयते ।

मौञ्ज्या ( अस्याः ) देव्याः रशनागुणस्यास्पदं (रशनागुणास्पदं) स्थानं जघनं सह रागेण (सरागं) सलोहितम् (अकारि) कृतम् सौकुमार्य्यातिशयादिति भावः ॥ १० ॥

विसृष्टेति । (तया) देव्या (विसृष्टरागात्) त्यक्तलाक्षारस-रञ्जनात् निसृष्टेति पाठे नितरां त्यक्तलाक्षारागात् । (अधरात्) अधरोष्ठात् (निवर्त्तितः) रागत्यागेन निष्प्रयोजनत्वादिति भावः । तथा स्तनाङ्गरागेण अरुणितात् अरुणीकृतात् (स्तनाङ्गरागात्) पतनसमये तस्य स्तनयोरुपरोधादिति भावः । (कन्दुकाच्च निवर्त्तितः) इत्यर्थः कुशाङ्कुराणाम् आदानेन लवनेन परिक्षताः व्रणिता अङ्गुलयो तस्य स तथोक्तः (कुशाङ्कुरादानपरिक्षताङ्गुलिः करः) पाणिः (अक्षसूत्रप्रणयी) अक्षमालासहचरः (कृतः) ॥११॥

महार्हेति । महानर्हो मूल्यं यस्याः सा महार्हा श्रेष्ठा या शय्या तस्यां परिवर्त्तनेन लुण्ठनेन च्युतैर्भ्रष्टैः (महार्हशय्यापरि-वर्त्तनच्युतैः स्वकेशपुष्पैरपि या) देवी ( दूयते स्म ) क्लिश्यति स्म पुष्पाऽधिकसौकुमार्य्यादिति भावः । (सा) देवी बाहुलतामुपधत्ते

अशेत सा बाहुलतोपधायिनी
निषेदुषी स्थण्डिल एव केवले ॥ १२ ॥
पुनर्ग्रहीतुं नियमस्थया तया
द्वयेऽपि निक्षेप इवार्पितं द्वयम्।
लतासु तन्वीषु विलासचेष्टितं
विलोलदृष्टं हरिणाङ्गनासु च ॥ १३ ॥
अतन्द्रिता सा स्वयमेव वृक्षकान्
घटस्तनप्रस्रवणैर्व्यवर्द्धयत्।

उपधानीकरोतीति (बाहुलतोपधायिनी) सती (केवले) संस्तरणरहिते (स्थण्डिले) भूमौ (एव अशेत) शयितवती तथा (निषेदुषी) उपविष्टा च क्वसुश्चेति क्वसुः उगितश्चेति ङीप्! भूमावेव शयनादिव्यवहारो न जातूपरीत्यर्थः ॥ १२ ॥

पुनरिति। (नियमस्थया) व्रतस्थया (तया) देव्या (द्वयेऽपि द्वयं पुनः ग्रहीतुं) पुनरादातुं (निक्षेपः अर्पितमिव) निक्षेपत्वेन अर्पितं किन्तु क्वचित् द्वयीषु इति प्रामादिकः पाठः। कुत्र द्वये किं द्वयमर्पितं तदाह (तन्वीषु) (लतासु) विलास एव चेष्टितम् (विलासचेष्टितं हरिणाङ्गनासु विलोलदृष्टं) चञ्चलावलोकितञ्च। व्रतस्थायां तस्यां तयोरदर्शनाल्लतादिषु दर्शनाच्च अर्पितमिवेत्युत्प्रेक्षा न तु वस्तुतोऽर्पणमस्तीति भावः ॥ १३ ॥

अतन्द्रितेति। (सा) देवी (स्वयमेव अतन्द्रिता) असञ्जाततन्द्रा सती तारकादित्वादितच्प्रत्ययः। (वृक्षकान्) स्वल्पवृक्षान्। अल्पे इत्यल्पार्थे कप्रत्ययः। घटावेव स्तनौ तयोः प्रस्रवणैः प्रस्नुतपयोभिः (घटस्तनप्रस्रवणैः व्यवर्द्धयत्)। (गुहः) कुमारः (अपि प्रथमाप्त-

गुरुर्न्नोऽपि येषां प्रथमाप्तजन्मनां
न पुत्रवात्सल्यमपाकरिष्यति ॥ १४ ॥
अरण्यबीजाञ्जलिदानलालिता-
स्तथा च तस्यां हरिणा विशश्वसुः ।
यथा तदीयैर्नयनैः कुतूहलात्
पुरः सखीनाममिमीत लोचने ॥ १५ ॥
कृताभिषेकां हुतजातवेदसं
त्वगुत्तरासङ्गवतीमधीतिनीम् ।

जन्मनां) प्रथमलब्धजन्मनाम् अग्रजातानामित्यर्थः (येषां) वृक्षकाणां सम्बन्धि (पुत्रवात्सल्यं) सुतप्रेम (नापाकरिष्यति) । उत्तरत्र कुमारोदयेऽपि न तेषु पुत्रवात्सल्यं निवर्त्तिष्यत इत्यर्थः ॥ १४ ॥

अरण्येति । अरण्यबीजानां नीवारादीनामञ्जलयस्तेषां दानेन लालिताः ( अरण्यबीजाञ्जलिदानलालिता हरिणाश्च तस्यां) देव्यां (तथा विशश्वसुः) विस्रम्भं जग्मुः । समौ विस्रम्भविश्वासावित्यमरः। (यथा कुतूहलात्) औत्सुक्यात् (तदीयैः) हरिणसम्बन्धिभिः (नयनैः) नेत्रैः करणैः स्वकीये ( लोचने सखीनां पुरः) पुरतः अनेन तेषां सम्बन्धसहत्वमुक्तम् (अमिमीत) अक्षिपरिमाणतारतम्यज्ञानाय मानं चकारेत्यर्थः। केचित्तु सा पार्व्वती तदीयैर्नेत्रैः कुतूहलात् पुरोऽग्रे वर्त्तमानानां सखीनां लोचने अमिमीत व्रतस्थत्वान्नात्मन इत्याहुः । माङ्माने इत्यस्माद्धातोर्लङ्। इयमेव खलु विश्वासस्य परा काष्ठा यदक्षिपीड़नेऽपि न क्षुभ्यन्तीति भावः ॥ १५ ॥

तपःप्रभावमाह

कृतेति । (कृताभिषेकां) कृतस्नानां (हुतजातवेदसं) हुता-

दिदृक्षवस्तामृषयोऽभ्युपागमन्
न धर्म्मवृद्धेषु वयः समीक्ष्यते ॥ १६ ॥

विरोधिसत्त्वोज्झितपूर्व्वमत्सरं
द्रुमैरभीष्टप्रसवार्च्चितातिथि।
नवोटजाभ्यन्तरसम्भृतानलं
तपोवनं तच्च बभूव पावनम् ॥ १७ ॥

भिक्षां कृतहोमामित्यर्थः। त्वचा वल्कलेन उत्तरासङ्गवतीं उत्तरीयवतीम् (त्वगुत्तरासङ्गवतीम्) अधीतमस्याः अस्तीति (अधीतिनीं) स्तुतिपाठादि कुर्व्वतीम्। इष्टादिभ्यश्च इतीनिप्रत्ययः (१)। (तां) देवीं (दिदृक्षवः) द्रष्टुमिच्छवः (ऋषयः) मुनयः (अभ्युपागमन्) समुपागताः। न चात्र कनिष्ठसेवादोष इत्याह (धर्म्मवृद्धेषु वयो न समीक्ष्यते) न प्रमाणीक्रियते। सति धर्म्मज्यैष्ठ्ये वयोज्यैष्ठं न प्रयोजनमित्यर्थः। तथाच मनुः। न तेन वृद्धो भवति येनास्य पलितं शिरः। यो वा युवाप्यधीयानस्तं देवाः स्थविरं विदुरिति (अ० २ श्लो० १५६) ॥ १६ ॥

विरोधीति। विरोधिभिः सत्त्वैर्गोव्याघ्रादिभिः उज्झितपूर्व्वमत्सरं त्यक्तपूर्व्ववैरं (विरोधिसत्त्वोज्झितपूर्व्वमत्सरं) हिंसारहितमित्यर्थः (द्रुमैः) अभीष्टप्रसवेन इष्टफलेन अर्च्चिताः पूजिताः अतिथयो यस्मिन् तत्तथोक्तं (अभीष्टप्रसवार्च्चितातिथि) नवानामुटजानां पर्णशालानाम् अभ्यन्तरेषु सम्भृताः सञ्चिताः अनलाः अग्नयो यस्मिन् तत्तथोक्तं (नवोटजाभ्यन्तरसम्भृतानलम् तच्च तपोवनं) पाव-

(१) पा० ५। २। ८८ सू०।

यदा फलं पूर्व्वतपःसमाधिना
न तावता लभ्यममंस्त काङ्क्षितम् ।
तदानपेक्ष्य स्वशरीरमार्द्दवं
तपो महत् सा चरितुं प्रचक्रमे ॥ १८ ॥
क्लमं ययौ कन्दुकलीलयापि या
तया मुनीनां चरितं व्यगाह्यत ।
ध्रुवं वपुः काञ्चनपद्मनिर्म्मितं
मृदु प्रकृत्या च ससारमेव च ॥ १९ ॥

यतीति (पावनं बभूव)। अहिंसातिथिसत्काराग्निपरिचर्य्याभिर्जगत्पावनं बभूवेत्यर्थः ॥ १७ ॥

यदेति । (सा) देवी (यदा) यस्मिन् काले (तावता) तावत्प्रमाणेन (पूर्वतपःसमाधिना) पूर्वेणानुष्ठीयमानप्रकारेण तपोनियमेन (काङ्क्षितं फलं लभ्यं) लब्धुं शक्यं (नामंस्त) अशक्यममंस्तेत्यर्थः । (तदा) तत्काले अविलम्बेनेत्यर्थः स्वशरीरस्य मार्द्दवं मृदुत्वं सौकुमार्य्यम् (स्वशरीरमार्द्दवं अनपेक्ष्य) अविगणय्य (महत्) दुश्चरं (तपश्चरितुं) साधयितुं (प्रचक्रमे) उपचक्रमे॥ १८ ॥

क्लममिति । (या) देवी (कन्दुकलीलया) कन्दुकक्रीडयापि (क्लमं ययौ) ग्लानिं प्राप (तया) देव्या (मुनीनां चरितं)तीव्रं तपः (व्यगाह्यत) प्रविष्टम् । अत्रोत्प्रेक्षते (ध्रुवम्) अस्याः (वपुः) काञ्चनपद्मेन निर्म्मितं सुवर्णकमलेन घटितम् (काञ्चनपद्मनिर्म्मितं) अतएव (प्रकृत्या) पद्मस्वभावेन (मृदु च) सुकुमारमपि काञ्चनस्वभावेन (ससारञ्च) कठिनम् (एव) । तथा च तदुपादानकत्वाद्देव्या वपुषः सुकुमारस्यापि तीव्रतपःक्षमत्वमित्युत्प्रेक्षार्थः ॥ १९ ॥

शुचौ चतुर्णां ज्वलतां शुचिस्मिता
हविर्भुजां मध्यगता सुमध्यमा।
विजित्य नेत्रप्रतिघातिनीं प्रभा-
मनन्यदृष्टिः सवितारमैक्षत ॥ २० ॥

तथाभितप्तं सवितुर्गभस्तिभि-
र्मुखं तदीयं कमलश्रियं दधौ।
अपाङ्गयोः केवलमस्य दीर्घयोः
शनैः शनैः श्यामिकया कृतं पदम् ॥२१॥

शुचाविति। (शुचौ) ग्रीष्मे (शुचिस्मिता) विशदमन्दहासा (सुमध्यमा) पार्वती (ज्वलतां) दीप्तिमतां (चतुर्णां हविर्भुजाम्) अग्नीनां (मध्यगता) सती नेत्रे प्रतिहन्तीति तां (नेत्रप्रतिघातिनीं प्रभां) सावित्रं तेजः (विजित्य) न विद्यते अन्यत्र दृष्टिर्यस्याः) सा (अनन्यदृष्टिः) सती (सवितारं) सूर्यम् (ऐक्षत) ददर्श। ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशय इति स्मरणात् पञ्चाग्निमध्ये तपश्चचारेत्यर्थः। तत्र सवितैव पञ्चमोऽग्निः अग्निः सविता सवितै-वाग्निरिति श्रौतलिङ्गात् ॥ २० ॥

तथेति। (सवितुः) सूर्यस्य (गभस्तिभिः) किरणैः (तथा) पूर्वोक्तप्रकारेण (अभितप्तं) सन्तप्तं तस्याः इदं (तदीयं मुखं कमल-श्रियं) कमलस्य शोभां (दधौ) प्राप। यथा रवितापात् कमलं न म्लायति प्रत्युत विकसति तथा तदीयं मुखमासीदिति भावः। किन्तु (अस्य) मुखस्य (दीर्घयोरपाङ्गयोः केवलं) नेत्रान्तयोरेव (शनैः शनैः) मन्दं मन्दं (श्यामिकया) कालिम्ना (पदं) स्थानं (कृतं) तयोः सौकुमार्य्यादित्यर्थः ॥ २१ ॥

अयाचितोपस्थितमम्बु केवलं
रसात्मकस्योडुपतेश्च रश्मयः।
बभूव तस्याः किल पारणाविधि-
र्न वृक्षवृत्तिव्यतिरिक्तसाधनः॥ २२॥

निकामतप्ता विविधेन वह्निना
नभश्चरेणेन्धनसम्भृतेन सा।
तपात्यये वारिभिरुक्षिता नवै-
र्भुवा सहोष्माणममुञ्चदूर्द्ध्वगम्॥ २३॥

अयाचितेति। (अयाचितोपस्थितम्) अप्रार्थितोपनतं (केवलम् अम्बु) उदकं (रसात्मकस्य) अमृतमयस्य उडूनां नक्षत्राणां पतिश्चन्द्रस्तस्य (उडुपतेश्च रश्मयश्च तस्याः) पार्व्वत्याः (पारणाविधिः) अभ्यवहारकर्म्म (बभूव) तावन्मात्रसाधनकोऽभूदित्यर्थः। साध्यसाधनयोरभेदेन व्यपदेशः साधनान्तरव्यावृत्त्यर्थः। (किल) इति प्रसिद्धौ वृक्षाणां या वृत्तिर्जीवनोपायस्तद्व्यतिरिक्तं साधनमुपायो यस्य स तथोक्तः (वृक्षवृत्तिव्यतिरिक्तसाधनः) पारणाविधिः (न बभूव) (वृक्षोऽप्ययाचितोपस्थितेन मेघोदकेन इन्दुकिरणैश्च जीव्यतीति प्रसिद्धम् अम्बिकापि तावन्मात्रमवालम्बतेत्यर्थः॥ २२॥

निकामेति। (विविधेन) पञ्चविधेनेत्यर्थः (नभश्चरेण) खेचरेण आदित्यरूपेणेत्यर्थः। (इन्धनसम्भृतेन) काष्ठसमिद्धेन (वह्निना निकाममत्यन्तं तप्ता (निकामतप्ता सा) अम्बिका (तपात्यये) ग्रीष्मान्ते प्रावृषीत्यर्थः (नवैर्वारिभिः उक्षिता) सिक्ता सती (भुवा) पञ्चाग्नितप्तया (सह ऊर्द्ध्वगम्) ऊर्द्ध्वप्रसृतम् (उष्माणं वाष्पम् (अमुञ्चत) ग्रीष्मोष्मवाष्पोष्माण इति यादवः॥ २३॥

स्थिताः क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे
चिरेण नाभिं प्रथमोदबिन्दवः ॥ २४ ॥
शिलाशयान्तामनिकेतवासिनीं
निरन्तरास्वन्तरवातवृष्टिषु ।

स्थिता इति । उदकस्य बिन्दवः उदबिन्दवः मन्थोदनेत्यादिना मन्थादिषु परेषु उदकस्य उदः स्यात् । उदकशब्दस्य उदादेशः । प्रथमे उदबिन्दवः ( प्रथमोदबिन्दवः ) प्रथमविशेषणात् बिन्दूनां विरलत्वं बहुवचनान्नातिविरलत्वञ्च गम्यते तथा च चिरत्वेनाभ्यन्तरगमनयोर्निर्व्वाहः । (तस्याः) पार्व्वत्याः (पक्ष्मसु) नेत्रलोमसु (क्षणं स्थिताः) स्थितिं गताः स्थिता इति पक्ष्मणां सान्द्रत्वं क्षणमिति स्नैग्ध्यञ्च गम्यते । अनन्तरं ताडितः व्यथितः अधर ओष्ठो यैस्ते तथोक्ताः ( ताडिताधराः ) एतेनाधरस्य मार्दवं गम्यते । ततः पयोधरयोः स्तनयोरुत्सेधे उपरिभागे निपातेन पतनेन चूर्णिताः जर्जरिताः ( पयोधरोत्सेधनिपातचूर्णिताः ) कुचकाठिन्यादिति भावः । तदनु (वलीषु) उदररेखासु (स्खलिताः) निम्नोन्नतत्वादिति भावः । इत्थं (चिरेण) न तु शीघ्रं प्रतिबन्धबाहुल्यादिति भावः ( नाभिं प्रपेदिरे) प्रविष्टाः न तु निर्जग्मुः एतेन नाभेर्गाम्भीर्य्यं गम्यते । अत्र प्रतिपदमर्थवत्त्वात् 'उक्तिविशेषणैः साभिप्रायैः परिकरो मत' इति लक्षणात् परिकरालङ्कारः ॥ २४ ॥

शिलेति । (नीरन्तरासु) नीरन्ध्रासु अन्तर मध्ये वातो यासां तास्तादृशा वृष्टयस्तासु (अन्तरवातवृष्टिषु) न निकेते गृहे वस-

व्यलोकयन्नुन्मिषितैस्तडिन्मयै-
र्महातपः साक्ष्य इव स्थिताः क्षपाः ॥२५॥
निनाय सात्यन्तहिमोत्किरानिलाः
सहस्यरात्रीरुदवासतत्परा।
परस्पराक्रन्दिनि चक्रवाकयोः
पुरो वियुक्ते मिथुने कृपावती ॥ २६ ॥

तीति (अनिकेतवासिनीम्) अनावृतदेशवासिनीमित्यर्थः। शिलायां शेते (शिलाशयां) शिलातलशायिनीम्। अधिकरणे शेतेरिति अच्प्रत्ययः। (तां) पार्व्वतीं साक्षाद्द्रष्टा साक्षी। साक्षाद्द्रष्टरि संज्ञायाम् इतीन्प्रत्ययः। तस्य कर्म्म साक्ष्यं (महातपसः साक्षे स्थिताः क्षपाः तडिन्मयैः) विद्युद्रूपैः (उन्मिषितैः) अवलोकनैः (व्यलोकयन्निव) इवेति चक्षुषा विलोकनमुत्प्रेक्ष्यते साक्षन्त आदित्य-चन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च सन्ध्ये धर्म्मश्च जानाति नरस्य वृत्तमिति प्रमाणसिद्धत्वात् नोत्प्रेक्ष्यमित्यनुसन्धेयम् ॥ २५ ॥

एवं वर्षासु विहितं तपःप्रकारमुक्त्वा सम्प्रति हेमन्ते तपश्चरण-प्रकारमाह

निनायेति। (सा) पार्व्वती उत्किरन्ति क्षिपन्तीत्युत्किराः। इगुपधज्ञेत्यादिना कः। अत्यन्तं हिमानामुत्किराः अनिलाः यासु ताः (अत्यन्तहिमोत्किरानिलाः सहस्यरात्रीः) (पौषरात्रीः। पौषे तैषसहस्यौ द्वावित्यमरः। उदके वासः उदवासः पेषवासवाहन-धीषु चेत्युदादेशः। उदवासे तत्परा आसक्ता (उदवासतत्परा) तथा (परस्पराक्रन्दिनि) अन्योन्यमाक्रोशिनि (पुरः) अग्रे

सुखेन सा पद्मसुगन्धिना निशि
प्रवेपमानाधरपत्त्रशोभिना ।
तुषारवृष्टिक्षतपद्मसम्पदां
सरोजसन्धानमिवाकरोदपाम् ॥ २७ ॥
स्वयंविशीर्णद्रुमपर्णवृत्तिता
परा हि काष्ठा तपसस्तथा पुनः ।

(वियुक्ते) विरहिणि वियोगं प्राप्त इति यावत् । चक्रवाकी च चक्रवाकश्च चक्रवाकौ तयोः ( चक्रवाकयोर्मिथुने ) द्वन्द्वे ( कृपावती ) सती ( निनाय ) । दुःखिषु कृपालुत्वं महतां स्वभाव इति चक्रवाकमिथुने कृपा न तु कामितयेति वाच्यानवकाशः । अपसु वासस्तु हेमन्ते क्रमशो वर्द्धयेत्तप इति मनुः (अ०६श्लो०२३) ॥ २६ ॥

सुखेनेति । (सा) पार्व्वती ( निशि ) रात्रौ पद्मवत्सुगन्धिना सुरभिणा (पद्मसुगन्धिना) गन्धस्येत्यादिना इकारः । प्रवेपमानः कम्पमानः अधर ओष्ठ एव पत्त्रं दलं तेन शोभत इति तथोक्तेन ( प्रवेपमानाधरपत्त्रशोभिना सुखेन ) तुषारवृष्ट्या तुहिनवर्षेण क्षताः नाशिताः पद्मसम्पदो यासाम् तासाम् अपां (सरोजसन्धानं) पद्मसङ्घटनम् (अकरोदिव) 'भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मने'ति लक्षणादित्युत्प्रेक्षालङ्कारः। पद्मान्तरन्तुहिनेनोपहन्यते तन्मुखपद्मन्तु न तथेति 'आधिक्यमुपमेयस्योपमानान्न्यूनताथवा । व्यतिरेक' इति लक्षणात् व्यतिरेकालङ्कारो व्यज्यते इत्युभयोः सङ्करः ॥ २७ ॥

स्वयमिति । स्वयं विशीर्णानि स्वतश्च्युतानि द्रुमपर्णान्येव वृत्तिर्जीवनं यस्य तस्य भावस्तत्ता (स्वयंविशीर्णद्रुमपर्णवृत्तिता तपसः

तदप्यपाकीर्णमतः प्रियंवदां
वदन्त्यपर्णेति च तां पुराविदः ॥ २८ ॥
मृणालिकापेलवमेवमादिभि-
र्व्रतैः स्वमङ्गं ग्लपयन्त्यहर्निशम्।
तपः शरीरैः कठिनैरुपार्ज्जितं
तपस्विनां दूरमधश्चकार सा ॥ २९ ॥

परा काष्ठा) परमुत्कर्षो हि। काष्ठोत्कर्षे स्थितौ दिशीत्यमरः। (तया) देव्या (पुनः तत्) पर्णवर्त्तनमपि (अपाकीर्णम्) अपाकृतम्। (अतः) पर्णापकरणाद्धेतोः (प्रियं वदतीति (प्रियंवदा) प्रियवशे वदः खच् इति खच्प्रत्ययः (१) अरुर्द्विषदजन्तस्य मुम् इति मुमागमः (२)। (तां) पार्व्वतीं (पुराविदः) पुराणज्ञाः तपः करणसमये अविद्यमानं पर्णभक्षणं यस्याः सा ( अपर्णा इति वदन्ति ) नामान्तरसमुच्चयार्थश्चकारः। स्वयं प्रियंवदाः परेषामपि प्रियवादभाजनानि भवन्तीति भावः। अत्रापर्णामित्यपपाठः इतिशब्दाभिहिते द्वितीयानुपपत्तेः। यथाह वामनः निपातेनाप्यभिहिते कर्म्मणि न कर्मविभक्तिःपरिगणनस्य प्रायिकत्वादिति॥२८॥

मृणालिकेति। (मृणालिकापेलवं) पद्मिनीकन्दकोमलं (स्वं) स्वकीयम् (अङ्गं) शरीरम् ( एवम् ) उक्तप्रकारतयाभिमध्यवासव्रतमादिर्येषां तैः (एवमादिभिः व्रतैः) अहश्च निशा च अहर्नि-

(१) पा० ३। २। ३८ सू०।
(२) पा० ६। ३। ६७ सू०।

अथाजिनाषाढ़धरः प्रगल्भवाक्
ज्वलन्निव ब्रह्ममयेन तेजसा।
विवेश कश्चिज्जटिलस्तपोवनं
शरीरबद्धः प्रथमाश्रमो यथा ॥ ३० ॥
तमातिथेयी बहुमानपूर्व्वया
सपर्य्यया प्रत्युदियाय पार्व्वती।

श्रम्)। समाहारे द्वन्द्वैकवद्भावः। अत्यन्तसंयोगे द्वितीया। (ग्लपयन्ती) कर्षयन्ती (सा) पार्व्वती (कठिनैः) क्लेशसहैरित्यर्थः। (शरीरैः उपार्ज्जितं) सम्पादितं (तपस्विनाम्) ऋषीणां (तपः दूरम्) अत्यन्तम् (अधश्चकार) तिरश्चकार अतिशिश्ये इत्यर्थः तपस्विभिरप्येवं तपः कर्त्तुं न शक्यत इति तात्पर्य्यार्थः ॥ २९ ॥

अथेति। (अथ) अनन्तरं अजिनं कृष्णचर्मत्वक् आषाढ़ः प्रयोजनमस्येत्याषाढ़ः पालाशदण्डः। पालाशो दण्ड आषाढ़ इत्यमरः। विशाखाषाढ़ादण् मन्थदण्डयोः इत्यण्प्रत्ययः(१)। तयोर्धरः तथोक्तः (अजिनाषाढ़धरः प्रगल्भवाक्) प्रौढ़वचनः (ब्रह्ममयेन) वैदिकेन (तेजसा) ब्रह्मवर्चसेत्यर्थः। (ज्वलन्निव) स्थितः इवशब्दो निर्द्धारणार्थः (कश्चित्) अनिर्दिष्टः (जटिलः) जटावान् ब्रह्मचारीति शेषः। पिच्छादित्वादिलच्प्रत्ययः। शरीरबद्धः) बद्धशरीरः शरीरवानित्यर्थः। आहिताग्न्यादिषु पाठात्साधुः (प्रथ-

(१) पा० ५। १। ११० सू०।

भवन्ति साम्येऽपि निविष्टचेतसां
वपुर्विशेषेष्वतिगौरवाः क्रियाः ॥ ३१ ॥
विधिप्रयुक्तां परिगृह्य सत्क्रियां
परिश्रमं नाम विनीय च क्षणम् ।
उमां स पश्यन् ऋजुनैव चक्षुषा
प्रचक्रमे वक्तुमनुज्झितक्रमः ॥ ३२ ॥

माश्रमो यथा) ब्रह्मचर्य्याश्रम इव यथाशब्द इवार्थः (तपोवनं) देव्या इति शेषः (विवेश) प्रविष्टवान् ॥ ३० ॥

तमिति। अतिथिषु साध्वी (आतिथेयी)। पथ्यतिथ्यादिना ढञ्प्रयः। टिड्ढाणञित्यादिना ङीप्। (पार्व्वती तं) ब्रह्मचारिणं (बहुमानपूर्व्वया) बहुमानः पूर्व्वो यस्यास्तया गौरवपूर्व्वयेत्यर्थः (सपर्य्यया) अर्च्चया। सपर्य्यार्च्चार्हणाः समा इत्यमरः। (प्रत्युदियाय) प्रत्युज्जगाम। कथं समानेऽपि तस्यास्ताहशी प्रतिपत्तिरत आह। (साम्ये) सति (अपि निविष्टचेतसां) स्थिरचित्तानां (वपुर्विशेषेषु) व्यक्तिविशेषेषु अतिशयितं गौरवं यासु ताः (अतिगौरवाः) अतिगौरवसहिताः (क्रियाः) चेष्टाः (भवन्ति) प्रवर्त्तन्त इत्यर्थः। साधवो न साम्याभिनिवेशिन इति भावः॥३१॥

विधीति। (सः) ब्रह्मचारी विधिना प्रयुक्तामनुष्ठितां (विधिप्रयुक्तां सत्क्रियां) पूजां (परिगृह्य) स्वीकृत्य (क्षणं परिश्रमं) विश्राम्य (विनीय नाम) नामेत्यपरमार्थे। अथ (उमाम् ऋजुनैव) विलासरहितेनैव (चक्षुषा पश्यन् अनुज्झितक्रमः) अत्यक्तोचितपरिपाटीकः सन् (वक्तुं प्रचक्रमे) प्रारेभे ॥३२॥

अपि क्रियार्थं सुलभं समित्कुशं
जलान्यपि स्नानविधिक्षमाणि ते।
अपि स्वशक्त्या तपसि प्रवर्त्तसे
शरीरमाद्यं खलु धर्म्मसाधनम् ॥ ३३ ॥
अपि त्वदावर्ज्जितवारिसम्भृतं
प्रवालमासामनुबन्धि वीरुधाम्।
चिरोज्झितालक्तकपाटलेन ते
तुलां यदारोहति दन्तवाससा ॥३४॥

अपीति। अत्र अपिशब्दः प्रश्ने। (क्रियार्थं) होमादिकर्म्मानुष्ठानार्थं समिधश्च कुशाश्च (समित्कुशम्)। जातिरप्राणिनामितिद्वन्द्वैकवद्भावः। (सुलभमपि) सुलभं कच्चित् (जलानि ते) तव (स्नानविधिक्षमाणि) स्नानक्रियायोग्यानि (अपि) कच्चित् किञ्च (स्वशक्त्या) निजसामर्थ्यानुसारेण (तपसि प्रवर्त्तसे अपि) देहमपीड़यित्वा तपश्चरसि कच्चिदित्यर्थः। युक्तञ्च नामैतत् (खलु) यस्मात् (शरीरम् आद्यं धर्म्मसाधनम्)। धर्म्मस्तु कायेन मनसा वाचा बुद्ध्या धनादिना च बहुभिः साध्यते तेषु च वपुरेव मुख्यं साधनं सति देहे धर्म्मार्थकाममोक्षलक्षणाश्चतुर्वर्गाः साध्यन्ते। अतएव सततमात्मानमेव गोपायीतेति श्रुतिः ॥ ३३ ॥

अपि त्वदेति। त्वया आवर्ज्जितेन सिक्तेन वारिणा सम्भृतं जनितम् (त्वदावर्ज्जितवारिसम्भृतं आसां वीरुधां) लतानां (प्रवालं) पल्लवम् (अनुबन्ध्यपि) अनुसूतं किं यत् प्रवालं चिरोज्झितश्चिरकालत्यक्तः लाक्षारागो येन तत्तथापि पाटलं स्वभावरक्तमित्यर्थः तेन (चिरोज्झितालक्तकपाटलेन ते) तव (दन्तवाससा) अधरेण।

अपि प्रसन्नं हरिणेषु ते मनः
करस्थदर्भप्रणयापहारिषु ।
य उत्पलाक्षि प्रचलैर्विलोचनै-
स्तवाक्षिसादृश्यमिव प्रयुञ्जते ॥ ३५ ॥
यदुच्यते पार्व्वति पापवृत्तये
न रूपमित्यव्यभिचारि तद्वचः ।

ओष्ठाधरौ तु रदनच्छदौ दशनवाससी इत्यमरः। (तुलां) साम्यम् (आरोहति) गच्छतीत्यर्थः। अत्र तुलाशब्दस्य सादृश्यवाचित्वात्तद्योगेऽपि तुल्यार्थैरतुलोपमाभ्यामिति (१) न तृतीयाप्रतिषेधः तत्र सूत्रे सदृशवाचिन एव ग्रहणादिति ॥ ३४ ॥

अपीति। करस्थान् दर्भान् प्रणयेन स्नेहेन अपहरन्तीति ते तथोक्तेषु सापराधेष्विति भावः। (करस्थदर्भप्रणयापहारिषु) अपराधिष्विति पाठे दर्भाणां प्रणयेन प्रार्थनया अपराधिषु (हरिणेषु) विषये (ते मनः प्रसन्नमपि) न क्षुभितं किं सापराधेष्वपि न कोपितव्यं तपस्विभिरिति भावः। हे (उत्पलाक्षि! ये) हरिणाः (प्रचलैः) चञ्चलैः (विलोचनैः) नेत्रैः (तव अक्षिसादृश्यं प्रयुञ्जते इव) अभिनयन्तीव प्रसन्नत्वात् मृगनेत्राणि त्वन्नयनैः साम्यमुपयान्तीति भावः। उत्पलक्षेपचलैरिति पाठान्तरे उत्पलकम्पचलैः भावानयने द्रव्यानयनमिति न्यायेन क्षिप्यमाणोत्पलचलैरित्यर्थः॥३५॥

यदिति। हे (पार्व्वति! रूपं) सौम्याकृतिः (पापवृत्तये) पापाचरणाय (न) भवतीति (यदुच्यते) लोकैरिति शेषः। (तद्वचः न)

---

(१) पा० २। ३। ७२ सू०।

तथा हि ते शीलमुदारदर्शने
तपस्विनामप्युपदेशतां गतम् ॥ ३६ ॥
विकीर्णसप्तर्षिबलिप्रहासिभि-
स्तथा न गाङ्गैः सलिलैर्दिवश्च्युतैः।
यथा त्वदीयैश्चरितैरनाविलै-
र्महीधरः पावित एष सान्वयः ॥ ३७ ॥

व्यभिचरति न स्खलतीति (अव्यभिचारि)। सत्यम् "यत्राकृतिस्तत्र गुणा" "न सुरूपाः पापसमाचारा भवन्ती"त्यादयो लोकवादा न विसंवादमासादयन्तीत्यर्थः। किमिति ज्ञायते (तथाहि) हे (उदारदर्शने) आयताक्षि सुरूपे इत्यर्थः। अथवा उन्नतज्ञाने विवेकवतीत्यर्थः। (ते) तव (शीलं) सद्वृत्तं शीलं स्वभावे सद्वृत्त इत्यमरः। (तपस्विनामपि) उपदिश्यते अनेनेत्युपदेशः प्रवर्त्तकं प्रमाणं तत्ताम् (उपदेशतां गतं) प्राप्तम्। मुनयोऽपि त्वां वीक्ष्य स्ववृत्ते प्रवर्त्तन्त इति भावः ॥ ३६ ॥

विकीर्णेति। (एषः महीधरः) हिमवान् सप्त च ते ऋषयश्च सप्तर्षयः। दिक्सङ्ख्ये संज्ञायाम् संज्ञायामेव दिग्वाचकसंख्यावाचकौ समस्येते स तत्पुरुषः। असंज्ञायां तु द्विगुरेव (१)। इति समासः। विकीर्णैः पर्यस्तैः सप्तर्षीणां सम्बन्धिभिः बलिभिः पुष्पोपहारैः प्रहसन्ति ये तैः तथोक्तैः (विकीर्णसप्तर्षिबलिप्रहासिभिः दिवः) अन्तरीक्षात् (च्युतैः गाङ्गैः सलिलैः तथा न पावितः)

---

(१) पा० २।१।५० सू०।

अनेन धर्म्मः सविशेषमद्य मे
त्रिवर्गसारः प्रतिभाति भाविनि ।
त्वया मनोनिर्विषयार्थकामया
यदेक एव प्रतिगृह्य सेव्यते ॥ ३८ ॥
प्रयुक्तसत्कारविशेषमात्मना
न मां परं सम्प्रतिपत्तुमर्हसि ।

(अनाविलैः) अकलुषैः (त्वदीयैः चरितैः यथा सान्वयः) सपुत्त्रपौत्त्रः (पावितः) पवित्रीकृतः ॥ ३७ ॥

अनेनेति । हे (भाविनि) ! प्रशस्ताभिप्राये ! (अनेन) कारणेन (धर्म्मः सविशेषं सातिशयम् ( अद्य मे ) त्रयाणां धर्म्मकामार्थानां वर्गस्त्रिवर्गः । त्रिवर्गो धर्म्मकामार्थैश्चतुवर्गः समोक्षकैरित्यमरः । तत्र सारः श्रेष्ठः ( त्रिवर्गसारः प्रतिभाति ) । ( यत् ) यस्मात्कारणात् मनसो निर्विषयौ अर्थकामौ यस्यास्तया (मनोनिर्विषयार्थकामया त्वया एकः धर्म्म एव प्रतिगृह्य ) स्वीकृत्य (सेव्यते) । यत्त्वया अर्थकामौ विहाय धर्म्म एवावलम्बितः अतः सर्व्वेषां नः स श्रेयानिति प्रतिपद्यत इत्यर्थः ॥ ३८ ॥

सम्प्रति मनोरथं जिज्ञासुः प्रस्तौति

प्रयुक्तेति । ( आत्मना ) त्वया प्रयुक्तः कृतः सत्कारविशेषः पूजातिशयो यस्य तं (प्रयुक्तसत्कारविशेषं मां परं) अन्यं (सम्प्रतिपत्तुम्) अवगन्तुं (नार्हसि) हे (सन्नतगात्रि) ! सन्नताङ्गि ! अङ्गगात्रकण्ठेभ्यः अङ्गादिभ्य उपसर्ज्जनेभ्यः स्वाङ्गवाचिभ्यो ङीप् स्यात् । इति वक्तव्यात् ङीप् ( यतः ) कारणात् मनस ईषिभिः (मनीषिभिः) विद्वद्भिः । पृषोदरादित्वात्साधुः । ( सतां सङ्गतं ) सख्यं सप्तभिः पदैरापाद्यत इति (साप्तपदीनं) सप्तपदोच्चारणसाध्यम्

यतः सतां सन्नतगात्रि सङ्गतं
मनीषिभिः साप्तपदीनमुच्यते ॥ ३९ ॥
अतोऽत्र किञ्चिद्भवतीं बहुक्षमां
द्विजातिभावादुपपन्नचापलः ।
अयं जनः प्रष्टुमनास्तपोधने
न चेद्रहस्यं प्रतिवक्तुमर्हसि ॥ ४० ॥
कुले प्रसूतिः प्रथमस्य वेधस-
स्त्रिलोकसौन्दर्य्यमिवोदितं वपुः ।

(उच्यते) । तचावयोस्त्वत्कृतसत्कारप्रयोगादेव सिद्धमित्यर्थः । साप्तपदीनं सख्यमिति निपातनात्साधुः ॥ ३९ ॥

अत इति । हे (तपोधने ! अतः) सख्याद्धेतोः (अत्र) प्रस्तावे (बहुक्षमां) बह्वक्तिसहां यद्वा क्षमावतीं (भवतीं) त्वां (द्विजातिभावात्) ब्राह्मणत्वात् (उपपन्नचापलः) सुलभधार्ष्ट्यः (अयं जनः) स्वयमित्यर्थः । किञ्चित्प्रष्टुं मनो यस्य सः (किञ्चित्प्रष्टुमनाः) प्रष्टुकामः तुम्काममनसोरपीति लुम्पेदवश्यमः कृत्ये तुम्काममनसोरपीत्यादिना मकारलोपः । रहसि भवं (रहस्यं) गोप्यं (न चेत् प्रतिवक्तुमर्हसि) ॥ ४० ॥

प्रष्टव्यमाह

कुल इति । (प्रथमस्य वेधसः) हिरण्यगर्भस्य (कुले) अन्ववाये (प्रसूतिः) उत्पत्तिः । यज्ञार्थं हि मया सृष्टो हिमवानचलेश्वर इति ब्रह्मपुराणवचनात् । (वपुः) शरीरं त्रयाणां लोकानां सौन्दर्य्यमिव (त्रिलोकसौन्दर्य्यमिव उदितम्) एकत्र समाहृतम् (ऐश्वर्य्यसुखं) सम्पत्सुखम्) अमृग्यम्) अन्वेषणीयं न भवति किन्तु

अलभ्यमैश्वर्य्यसुखं नवं वय-
स्तपःफलं स्यात् किमतः परं वद ॥४१॥
भवत्यनिष्टादपि नाम दुःसहा-
न्मनस्विनीनां प्रतिपत्तिरीदृशी ।
विचारमार्गप्रहितेन चेतसा
न दृश्यते तच्च कृशोदरि ! त्वयि ॥४२॥
अलभ्यशोकाभिभवेयमाकृति-
र्विमानना सुभ्रु ! कुतः पितुर्गृहे ।

सिद्धमेवेत्यर्थः (वयः नवं) यौवनमित्यर्थः । (अतः परम्) अतोऽन्यत् (किं तपःफलं स्यात् वद) अस्ति चेदिति शेषः न किञ्चिदस्तीत्यर्थः॥४१॥

भवतीति । (दुःसहात्) सोढुमशक्यात् (अनिष्टात्) भर्त्रादिकृतादपि (मनस्विनीनां) धीरस्त्रीणाम् (ईदृशी) तपश्चरणलक्षणा (प्रतिपत्तिः) प्रवृत्तिः । प्रतिपत्तिस्तु गौरवे। प्राप्तौ प्रवृत्तौ प्रागल्भ्ये इति केशवः । (भवति नाम) । नामेति सम्भावनायाम् । विचारमार्गे प्रहितेन प्रेरितेन (विचारमार्गप्रहितेन चेतसा) चित्तेन (तत्) अनिष्टञ्च हे (कृशोदरि ! त्वयि न दृश्यते)। विचार्य्यमाणे तदपि नास्ति असम्भावितत्वादित्यर्थः॥ ४२ ॥

अनिष्टाभावमेव प्रपञ्चयति

अलभ्येति । हे (सुभ्रु ! इयं) त्वदीया (आकृतिः) मूर्त्तिः अलभ्यः लब्धुमनर्हः शोकेन भर्त्राद्यवमानजेन दुःखेन अभिभवः तिरस्कारो यस्याः सा तथोक्ता (अलभ्यशोकाभिभवा) दृश्यत इति शेषः। असम्भावितश्चायमर्थ इत्याह (पितुर्गृहे विमानना) अवमानः (कुतः) न सम्भाव्यत एवेत्यर्थः । नचाप्यन्यस्माद्भवतीत्याह । (परा-

पराभिमर्शो न तवास्ति कः परं
प्रसारयेत् पन्नगरत्नसूचये ॥ ४३ ॥
किमित्यपास्याभरणानि यौवने
धृतं त्वया वार्द्धकशोभि वल्कलम् ।

भिमर्शः) परधर्षणन्तु (तव नास्ति पन्नगरत्नसूचये) फणिशिरोमणि-शलाकां ग्रहीतुमित्यर्थः। क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः(१) इति चतुर्थी। (करं) हस्तं कः प्रसारयेत्)। सुभ्रु! इत्यत्र भ्रूशब्दस्योवङ्स्थानीयत्वात् नेयङुवङ्स्थानावस्त्रीति नदीसंज्ञाप्रतिषेधात् अम्बार्थनद्योर्ह्रस्वः (२) इति ह्रस्वत्वं नास्ति तेन ह्रस्वः प्रमादिक इति केचित् अन्ये तु अप्राणिजातेश्चारज्ज्वादीनाम् इत्यत्र अलाबूः कर्कन्धूरितुरकारान्तादप्युङ्प्रत्ययमुदाजहार भाष्यकारः एतस्मादेव ज्ञापकात् क्वचिदूकारान्तस्याप्यूङन्तत्वान्नदीत्वे ह्रस्वमित्याहुः। अतएवाह वामनः ऊकारादप्यूङ्प्रकृतेरिति। सुभ्रूः कुतस्तातग्रहेऽवमाननमिति पाठान्तरकरणन्तु असाध्वसमेव उक्तोपपत्तिसम्भावनात्। अन्यत्रापि सुभ्रु! त्वं कुपितेत्यपास्तमशनं त्यक्ता कथा योषितामित्यादिप्रयोगदर्शनात् वंशस्थवृत्ते पादादौ जगणभङ्गप्रसङ्गाच्चेत्यलं गोष्ठीभिः ॥ ४३ ॥

किमिति। हे गौरि! (किमिति) केन हेतुना (यौवने त्वया आभरणान्यपास्य) विहाय वृद्धस्य भावो वार्द्धकम् मनोज्ञादित्वात् अञ्प्रत्ययः। वार्द्धकं वृद्धसङ्घाते वृद्धत्वे वृद्धकर्म्मणीति विश्वः। तत्र शोभत इति (वार्द्धकशोभि वल्कलं धृतम्) (प्रदोषे) रजनीमुखे स्फुटाः प्रकटाश्चन्द्रस्तारकाश्च यस्याः सा (स्फुटचन्द्रतारका

(१) पा० २।३।१४ सू०। (२) पा० ७।३।१०७ सू०।

वद प्रदोषे स्फुटचन्द्रतारका
विभावरी यद्यरुणाय कल्पते ॥ ४४ ॥
दिवं यदि प्रार्थयसे वृथा श्रमः
पितुः प्रदेशास्तव देवभूमयः ।
अथोपयन्तारमलं समाधिना
न रत्नमन्विष्यति मृग्यते हि तत् ॥ ४५ ॥
निवेदितं निश्वसितेन सोष्मणा
मनस्तु मे संशयमेव गाहते ।

विभावरी) रात्रिः (अरुणाय) सूर्यसूताय (कल्पते यदि) अरुणं गन्तुं कल्पते किं (वद) ब्रूहि । क्रियार्थोपपदस्येत्यादिना (१) चतुर्थी । दीप्यमानशशाङ्कतारके प्रदोषे यद्यरुणा उदेति ततो विभूषणापहारेण तव वल्कलधारणं सङ्घटत इति भावः ॥ ४४ ॥

तपःप्रयोजनं निराकर्त्तुमाह

दिवमिति । (दिवं) स्वर्गं (प्रार्थयसे) कामयसे (यदि) तर्हि (श्रमः) तपश्चरणप्रयासः (वृथा) निष्फलः यदि स्वर्गार्थं तप्यसे ततः श्रमं मा कार्षीः । कुतः (तव पितुः) हिमवतः (प्रदेशाः देवभूमयः) स्वर्गपर्यायाः तत्रत्या इत्यर्थः । (अथ उपयन्तारं) वरं प्रार्थयसे तर्हि (समाधिना) तपसा (अलं) न कर्त्तव्यमित्यर्थः । निषेध्यस्य निषेधं प्रतिकरणत्वात्तृतीया । (हि) तथाहि (रत्नं) कर्तृ (नान्विष्यति) न मृगयते ग्रहीतारमिति शेषः । किन्तु (तद्रत्नं मृग्यते) ग्रहीतृभिरिति शेषः । नहि वरार्थं त्वया तपसि वर्त्तितव्यम् किन्तु तेनैव त्वदर्थमिति भावः ॥ ४५ ॥

(१) पा० २ । ३ । १४ सू० ।

न दृश्यते प्रार्थयितव्य एव ते
भविष्यति प्रार्थितदुर्लभः कथम् ॥ ४६ ॥
अहो स्थिरः कोऽपि तवेप्सितो युवा
चिराय कर्णोत्पलशून्यतां गते।
अपेक्षते यः श्लथलम्बिनीर्जटाः
कपोलदेशे कलमाग्रपिङ्गलाः ॥ ४७ ॥

वरवाचकाक्षरश्रवणानन्तरमेव दृष्ट्वा उष्णोच्छ्वासमालक्ष्य प्रश्नेषु च प्रत्युत्तरमनुपलभ्य स्वयमेवाशङ्क्याह

निवेदितमिति। (सोष्मणा निश्वसितेन) निश्वासवायुना (निवेदितं) चिन्तानुभावेन उष्णोच्छ्वासेन ते वरार्थित्वं सूचितमित्यर्थः। तर्हि किं प्रश्नव्यसनेनेत्याह मन इति। (मनस्तु) तथापि (मे संशयमेव गाहते) प्राप्नोति। कुतः (ते) तव कृत्यानां कर्त्तरि चेति षष्ठी। (प्रार्थयितव्यः) प्रार्थयितुमर्हः (एव न दृश्यते प्रार्थितदुर्लभः) प्रार्थितो यो दुर्लभः स (कथं भविष्यति) नास्त्येवेत्यर्थः ॥ ४६ ॥

अथ पतिप्रार्थनामेव सिद्धवत्कृत्याह

अहो इति। (अहो) चित्रं (तव ईप्सितः) आप्तुमिष्टः (युवा कोऽपि स्थिरः) कठिनः वर्त्तत इति शेषः। कुतः (यः) युवा (चिराय) चिरात्प्रभृति (कर्णोत्पलशून्यतां गते) प्राप्ते कपोलदेशे) गण्डस्थले श्लथाः शिथिलबन्धनाः अतएव लम्बिन्यः ताः (श्लथलम्बिनीः) कलमा(शालिविशेषाः तेषामग्राणि तद्वत्पिङ्गलाः (कलमाग्रपिङ्गलाः जटाः अपेक्षते) यस्त्वामीदृशीं दृष्ट्वा न व्यथते स नूनं वज्रहृदय इत्यर्थः ॥ ४७ ॥

मुनिव्रतैस्त्वामतिमात्रकर्शितां
दिवाकराप्लुष्टविभूषणास्पदाम्।
शशाङ्कलेखामिव पश्यतो दिवा
सचेतसः कस्य मनो न दूयते॥ ४८॥
अवैमि सौभाग्यमदेन वञ्चितं
तव प्रियं यश्चतुरावलोकिनः।
करोति लक्ष्यं चिरमस्य चक्षुषो
न वक्त्रमात्मीयमरालपक्ष्मणः॥ ४९॥

मुनिव्रतैरिति। (मुनिव्रतैः) चान्द्रायणादिभिः (अतिमात्रम्) अत्यन्तं (कर्शितां) कृशीकृतां दिवाकरेण सूर्येण आप्लुष्टानि दग्धानि वातातपसंस्पर्शान्मृदुत्वाच्च श्यामीकृतानि विभूषणास्पदानि भूषणस्थानानि यस्यास्तां तथोक्तां (दिवाकराप्लुष्टविभूषणास्पदाम्) अतएव (दिवा अह्नि शशाङ्करेखामिव) स्थितां त्वां (पश्यतः सचेतसः) जीवतः (कस्य) पुंसः (मनः न दूयते) न परितप्यते अपि तु सर्वस्यैवेत्यर्थः॥ ४८॥

अवैमीति। (तव प्रियं) वल्लभं (सौभाग्यमदेन) सौन्दर्यगर्वेण कर्त्रा (वञ्चितं) विप्रलब्धम् (अवैमि) वेद्मि। (यः) प्रियः चतुरं मधुरम् अवलोकत इति (चतुरावलोकिनः अरालपक्ष्मणः) कुटिलरोम्णः अरालं वृजिनं जिह्ममित्यमरः। (अस्य) त्वदीयस्य (चक्षुषः आत्मीयं वक्त्रं) मुखं (चिरं लक्ष्यं) विषयं (न करोति) दृष्टिपथं न गच्छतीत्यर्थः। तदयं गर्वेण हतो निष्फलात्मलाभो जात इति भावः॥ ४९॥

कियच्चिरं श्राम्यसि गौरि ! विद्यते
ममापि पूर्वाश्रमसञ्चितं तपः ।
तदर्द्धभागेन लभस्व काङ्क्षितं
वरं तमिच्छामि च साधु वेदितुम् ॥५०॥
इति प्रविश्याभिहिता द्विजन्मना
मनोगतं सा न शशाक शंसितुम् ।
अथो वयस्यां परिपार्श्ववर्त्तिनीं
विवर्त्तितानञ्जननेत्रमैक्षत ॥ ५१ ॥

कियदिति । हे (गौरि ! कियत्) किम्प्रमाणकं किमवधिकमित्यर्थः (चिरं श्राम्यसि) तपस्यसि । अत्यन्तसंयोगे द्वितीया(१) (ममापि) पूर्व्वाश्रमः प्रथमाश्रमः ब्रह्मचर्य्याश्रमः तत्र सञ्चितं सम्पादितं (पूर्व्वाश्रमसञ्चितं तपः विद्यते) अर्द्धश्चासौ भागश्च तेन तस्य तपसः अर्द्धभागेनैकदेशेन (तदर्द्धभागेन काङ्क्षितम्) इष्टं (वरम्) उपयन्तारं (लभस्व) तं वरं (साधु) सम्यक् (वेदितुं) ज्ञातुम् (इच्छामि) यद्यसौ योग्यो भवति तदा ममापि सम्मतिरिति भावः ॥ ५० ॥

इतीति । (इति) इत्थं (द्विजन्मना) द्विजेन (प्रविश्य) अन्तर्गत्वा आप्तवद्रहस्यबुद्ध्वाव्येत्यर्थः । अभिहिता उक्ता (सा) पार्व्वती (मनोगतं) हृदिस्थं वरं (शंसितुं) वक्तुं (न शशाक) समर्था नाभूत् लज्जयेति शेषः । (अथो) अनन्तरं (परिपार्श्ववर्त्तिनीं वयस्यां) सखीं विवर्त्तितं विवलितम् अनञ्जनं व्रतवशाद्वर्ज्जितकज्जलं नेत्रं

(१) पा० २ । १ । २९ सू० ।

सखी तदीया तमुवाच वर्णिनं
निबोध साधो ! तव चेत् कुतूहलम् ।
यदर्थमम्भोजमिवोष्णवारणं
कृतं तपःसाधनमेतया वपुः ॥ ५२ ॥
इयं महेन्द्रप्रभृतीनधिश्रिय-
श्चतुर्दिगीशानवमत्य मानिनी ।

यस्मिन् कर्म्मणि तत्तथा (विवर्त्तितानञ्जननेत्रं ऐक्षत) नेत्रसंज्ञयैव प्रत्युत्तरं वाचयाञ्चकारेत्यर्थः ॥ ५१ ॥

सखीति । तस्याः पार्व्वत्याः (इयं तदीया सखी) वयस्या (तं) वर्णः प्रशस्तिरिति क्षीरस्वामी । सोऽस्यास्तीति (वर्णिनं) ब्रह्मचारिणं वर्णाद्ब्रह्मचारिणीति इनिप्रत्ययः (१) । (उवाच) ब्रूते स्म । किमिति । हे (साधो) ! विद्वन् ! (तव कुतूहलञ्चेत्) श्रोतुमस्तीति शेषः तर्हि (निबोध) अवगच्छ आकर्णयेत्यर्थः । बुध अवगमनइति धातोर्भौवादिकाल्लोट् । श्रोतव्यं किन्तदाह । यस्मै लाभाय इदम् (यदर्थम्) । अर्थेन सह नित्यसमासःसर्व्वलिङ्गता चेति वक्तव्यमिति वार्त्तिकनियमात् क्रियाविशेषणम् । (एतया) पार्व्वत्या (अम्भोजं) पद्मम् (उष्णवारणम्) आतपत्रं (इव वपुः) शरीरं (तपः साधनं कृतं) तपः प्रवृत्तिकारणमुच्यते श्रूयतामित्यर्थः ॥ ५२ ॥

दृङ्मनःसङ्गसङ्कल्पो जागरः कृशता रतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दशेति । तत्रास्याः काश्चिद्दशाः क्रमशनादृत्यैव योजयति इयमित्यादिभिः षड्भिः श्लोकैः

इयमिति । (मानिनी) इन्द्राणीप्रभृतीरतिशय्य वर्त्तितव्यमि-

(१) पा० ५ । २ । १३४ सू०

अरूपहार्य्यं मदनस्य निग्रहात्
पिनाकपाणिं पतिमाप्तुमिच्छति ॥ ५३ ॥
असह्यहुङ्कारनिवर्त्तितः पुरा
पुरारिमप्राप्तमुखः शिलीमुखः।
इमां हृदि व्यायतपातमक्षिणो-
द्विशीर्णमूर्त्तेरपि पुष्पधन्वनः ॥ ५४ ॥

त्यभिमानवती (इयं) पार्व्वती (अधिश्रियः) अधिकैश्वर्य्यान् (महेन्द्रप्रभृतीन्) इन्द्रादीन् चतसृणां दिशामीशान् (चतुर्दिगीशान्) इन्द्रवरुणयमकुवेरान्। तद्धितार्थेत्यादिना उत्तरपदसमासः (१)। (अवमत्य) अवधूय (मदनस्य निग्रहात्) निवर्हणाद्धेतोः अकामुकत्वादित्यर्थः। रूपेण सौन्दर्य्येण हार्य्यो वशीकरणीयो न भवतीति (अरूपहार्य्यं) पिनाकः पाणौ यस्य तं (पिनाकपाणिं) हरम्। प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति साधुः। (पतिं) भर्त्तारं (आप्तुमिच्छति)। एतेन सङ्कल्पावस्था सूचिता ॥ ५३ ॥

असह्येति। (पुरा) पूर्व्वम् असह्येन सोढुमशक्येन हुङ्कारेण रौद्रेण निवर्त्तितः (असह्यहुङ्कारनिवर्त्तितः) अतएव (पुरारिं) हरम् (अप्राप्तमुखः) अप्राप्तफलः (विशीर्णमूर्त्तेः) नष्टशरीरस्य (अपि पुष्पधन्वनः) कामस्य (शिलीमुखः) बाणः (इमां) पार्व्वतीं (हृदि) व्यायतः सुदूरावगाढ इति यावत् तादृक् पातः प्रहारो यस्मिन् कर्म्मणि तत्तथा (व्यायतपातं अक्षिणोत्) अकर्शत् दग्धदेहस्यापि मार्गणो लग्नः स्मरः सर्व्वत्र बाध्यत इति भावः। अनेन विष्टखती शैलसुतापि भावमित्यत्रोक्तं चक्षुःप्रीतिमनःसङ्गाख्यमवस्थाद्वयमनन्तरावस्थोपयोगितया अनूद्य कार्श्यावस्था सूचिता ॥ ५४ ॥

(१) पा० २।१।५१ सू०।

तदा प्रभृत्युन्मदना पितुर्गृहे
ललाटिकाचन्दनधूसरालका।
न जातु बाला लभते स्म निर्वृतिं
तुषारसङ्घातशिलातलेष्वपि॥ ५५॥
उपात्तवर्णे चरिते पिनाकिनः
सवाष्पकण्ठस्खलितैः पदैरियम्।

तदेति। तदेति छेदः (तदा प्रभृति) तत आरभ्येत्यर्थः सप्तम्यर्थस्यापि दाप्रत्ययस्य पञ्चम्यर्थे लक्षणया प्रभृतियोगे पञ्चमीनियमात्। (पितुर्गृहे उन्मदना) उत्कटमन्मथा ललाटस्यालङ्कारः ललाटिका तिलकः। कर्णललाटात्कन् अलङ्कारे इति कन्प्रत्ययः(१)। तस्याश्चन्दनेन धूसराः धूसरवर्णाः अलकाः चूर्णकुन्तलाः यस्याः सा तथोक्ता (ललाटिकाचन्दनधूसरालका बाला) पार्व्वती (जातु) कदाचिदपि तुषारसङ्घाताः तुषारघनास्तएव शिलास्तासां तलेषु उपरिभागेष्वपि (तुषारसङ्घातशिलातलेष्वपि निर्वृतिं) सुखं (न लभते स्म) एतेनारत्यपरसंज्ञा विषयविद्वेषावस्था द्वादशावस्थापन्नसंज्वरस्य व्यज्यते॥ ५५॥

उपात्तेति। (पिनाकिनः) शम्भोः (चरिते) त्रिपुरविजयादिचेष्टिते (उपात्तवर्णे) प्रारब्धगीतक्रमे। गीतक्रमे स्तुतौ वेदे वर्णशब्दः प्रयुज्यत इति हलायुधः। सवाष्पे गद्गदे कण्ठे स्खलितैः विशीर्णैः (सवाष्पकण्ठस्खलितैः पदैः) सुप्तिङन्तरूपैः करणैः वनान्ते सङ्गीतेन निमित्तेन सखीः (वनान्तसङ्गीतसखीः) वयस्याः (किन्नरराजकन्यकाः अनेकशः) बहुशः (अरोदयत्) अश्रुमोच-

(१) पा० ४। ३। ६५ सू०।

अनेकशः किन्नरराजकन्यका
वनान्तसङ्गीतसखीररोदयत् ॥ ५६ ॥
त्रिभागशेषासु निशासु च क्षणं
निमील्य नेत्रे सहसा व्यबुध्यत।
क्व नीलकण्ठ ! व्रजसीत्यलक्ष्यवा-
गसत्यकण्ठार्पितबाहुबन्धना ॥ ५७ ॥
यदा बुधैः सर्वगतस्त्वमुच्यसे
न वेत्सि भावस्थमिमं कथं जनम्।

मकारयत्। हरचरितगानजनितमदनवेदनामेनां वीक्ष्य किन्नर्यो-ऽपि रुरुदुरिति भावः। अत्र वर्णस्खलनलक्षणकार्योक्त्या पुनः पुनस्तत्कारणीभूतमूर्च्छावस्थाप्रादुर्भावो व्यज्यते अन्यथा सखी-रोदनानुपपत्तेरिति द्वादशावस्था पक्षे तु प्रलापावस्था च व्यजते प्रलापो गुणकीर्त्तनमित्यालङ्कारिकाः ॥ ५६ ॥

त्रिभागेति। किञ्चेति चार्थः शिष्यत इति शेषः कर्म्मणि घञ्। त्रिभ्यो भागेभ्य शेषासु अवशिष्टासु। यद्वा रात्रेस्त्रियामत्वेन प्रसिद्धत्वात् तृतीयो भागः त्रिभागः संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वमिष्यते यथा शतांशः सहस्रांश इति। त्रिभागः शेषो यासां तासु (त्रिभागशेषासु निशासु क्षणं) क्षणमात्रं (नेत्रे निमील्य) मीलयित्वा (सहसा) सद्यः हे (नीलकण्ठ ! क्व व्रजसि) कुत्र गच्छसीत्यलक्ष्या निर्विषया वाग्वचनं यस्याः सा (अलक्ष्यवाक्) तथा असत्ये मिथ्याभूते कण्ठेऽर्पितं बाहुबन्धनं यस्याः सा (असत्य-कण्ठार्पितबाहुबन्धना) सती (व्यबुध्यत) विबुद्धवती। एतेन जाग-रोन्मादौ सूचितौ ॥ ५७ ॥

इति स्वहस्तोल्लिखितश्च मुग्धया
रहस्युपालभ्यत चन्द्रशेखरः ॥ ५८ ॥
यदा च तस्याधिगमे जगत्पते-
रपश्यदन्यं न विधिं विचिन्वती ।
तदा सहास्माभिरनुज्ञया गुरो-
रियं प्रपन्ना तपसे तपोवनम् ॥ ५९ ॥

स्वप्नसादृश्यप्रतिकृतिदर्शनतदङ्गस्पृष्टस्पर्शाख्याश्चत्वारो विरहिणां विनोदाः तत्र स्वप्नसन्दर्शनमुक्त्वा प्रतिकृतिदर्शनमाह

यदेति। (यदा) यत इत्यर्थः। यदेति हेताविदुरुक्ता गणव्याख्याने अन्यत्रोदाहृतत्वात्। (त्वं बुधैः) मनीषिभिः (सर्व्वगतः) सर्व्वव्यापीति (उच्यसे)। तत इत्यध्याहारः। भावे रत्याख्ये तिष्ठतीति (भावस्थं) त्वय्यनुरागिणमित्यर्थः (इमं जनम्) इममित्यात्मनिर्देशः। (कथं न वेत्सि) न जानासीति (मुग्धया) मूढ़या अकिञ्चित्करश्चित्रगतोपालम्भ इत्यजानानयेत्यर्थः। तया स्वहस्तेनोल्लिखितः चित्रे लिखितश्चन्द्रशेखरः (स्वहस्तोल्लिखितश्चन्द्रशेखरः) (रहसि) एकान्ते सखीमात्रसमक्षमित्यर्थः। (उपालभ्यत) साधिक्षेपमुक्तश्च। उक्तसमुच्चयार्थश्चकारः। यद्यपि रहसीत्युक्तं तथापि सखीसमक्षकरणाल्लज्जात्यागो व्यज्यत एव ॥ ५८ ॥

यदेति। (जगत्पतेस्तस्य) ईश्वरस्य (अधिगमे) प्राप्तौ (अन्यं विधिम्) उपायं (विचिन्वती) मृगयमाणा (यदा नापश्यत तदा इयं पार्व्वती (गुरोः) पितुः (अनुज्ञया अस्माभिः सह तपसे) तपश्चरितुं (तपोवनं प्रपन्ना) प्राप्ता ॥ ५९ ॥

द्रुमेषु सख्या कृतजन्मसु स्वयं
फलं तपःसाक्षिषु दृष्टमेष्वपि ।
न च प्ररोहाभिमुखोऽपि दृश्यते
मनोरथोऽस्याः शशिमौलिसंश्रयः ॥६०॥
न वेद्मि स प्रार्थितदुर्लभः कदा
सखीभिरस्रोत्तरमीक्षितामिमाम् ।
तपःकृशामभ्युपपत्स्यते सखीं ।
वृषेव सीतां तदवग्रहक्षताम् ॥ ६१ ॥

द्रुमेष्विति । (सख्या) पार्वत्या (स्वयं) कृतं जन्म येषां तेषु (कृतजन्मसु) स्वयं रोपितेष्वित्यर्थः । तपसः साक्षिषु साक्षाद्द्रष्टृषु (तपःसाक्षिषु एषु द्रुमेष्वपि फलं दृष्टं) लब्धं जनितमित्यर्थः । (अस्याः) पार्वत्याः (शशिमौलिसंश्रयः) चन्द्रशेखरविषयः (मनोरथस्तु प्ररोहाभिमुखः ) अङ्कुरोन्मुखोऽपि ( न दृश्यते) प्ररोहस्त्वङ्कुर इति वैजयन्ती। स्वयंरोपितवृक्षफलकालेऽपि अस्याः मनोरथस्य नाङ्कुरोदयोऽप्यस्ति फलाशा तु दूरापास्तेत्यर्थः ॥ ६० ॥

न वेद्मीति । प्रार्थितः सन् दुर्लभः (प्रार्थितदुर्लभः स) देवः (तपःकृशां) तपसा कृशां क्षीणाम् अतएव (सखीभिः अस्रोत्तरम्) अश्रुप्रधानं यथा भवति तथा ( ईक्षिताम् इमां नः सखीं) तस्य इन्द्रस्य अवग्रहेण अनावृष्ट्या क्षतां पीड़िताम् (तदवग्रहक्षतां ( वृष्टिवैर्षे तद्विघातेऽवग्राहावग्रहौ समावित्यमरः । अवग्रहो वर्षप्रतिबन्ध इत्यर्थः । (सीतां) कृष्टभुवम् । सीता लाङ्गलपद्धति-रित्यमरः । (वृषा) वासव (इव) । वासवो वृत्रहा वृषेत्यमरः । (कदा अभ्युपपत्स्यते) कदा अनुग्रहीष्यति (न वेद्मि) अत्र वाक्यार्थः

अगूढसद्भावमितीङ्गितज्ञया
निवेदितो नैष्ठिकसुन्दरस्तया ।
अयीदमेवं परिहास इत्युमा-
मपृच्छदव्यञ्जितहर्षलक्षणः ॥ ६२ ॥
अथाग्रहस्ते मुकुलीकृताङ्गुलौ
समर्पयन्ती स्फटिकाक्षमालिकाम् ।

कर्म्म । तदवग्रहक्षतामित्यत्र अवग्रहक्षतामित्यनेनैव गतार्थत्वे तत्पदस्य वैयर्थ्यापत्तेः तदिति भिन्नपदं वेत्सीत्यस्य कर्म्म इति युक्त-मुत्पश्यामः ॥ ६१ ॥

अगूढेति । (इङ्गितज्ञया) पार्व्वतीहृदयाभिज्ञया इङ्गितं हृद्गतो भाव इति सज्जनः । (तया) गौरीसख्या (इति) एवं (अगूढसद्भावं) प्रकाशितसदभिप्रायं यथा तथा (निवेदितः) ज्ञापितः निष्ठा मरण-मवधिर्यस्य स नैष्ठिकः यावज्जीवब्रह्मचरी सुन्दरो विलासी नैष्ठिकश्चासौ सुन्दरश्चेति तथोक्तः (नैष्ठिकसुन्दरः) द्वयोरन्यतरस्य विशेषणत्वविवक्षायां विशेषणसमासः । किन्तु नैष्ठिकत्वविशेषणेन कामित्वविरोधः अथवा देवस्य अलौकिकमहिमत्वादुभयं तात्त्विक-मिति न विरोधः । अव्यञ्जितं हर्षलक्षणं मुखरागादि हर्षलिङ्गं यस्य तथाभूतः सन् (अव्यञ्जितहर्षलक्षणः) (अयि) गौरि ! अयीति कोमलामन्त्रणे (इदं) त्वत्सखीभाषितम् (एवं) सत्यं किमित्यर्थः । (परिहासः) केलिर्वा । द्रवकेलिपरिहास इत्यमरः । (इत्येव-मुमामपृच्छत्) पृष्टवान् ॥ ६२ ॥

अथेति । (अथ) अनन्तरम् (अद्रेस्तनया) पार्व्वती (मुकुली-कृताङ्गुलौ) सम्पुटीकृताङ्गुलौ अग्रश्चासौ हस्तश्चेति समाना-धिकरणसमासः । हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदादिति वामनः ।

कथञ्चिदद्रेस्तनया मिताक्षरं
चिरव्यवस्थापितवागभाषत ॥ ६३ ॥
यथाश्रुतं वेदविदांवर ! त्वया
जनोऽयमुच्चैःपदलङ्घनोत्सुकः।
तपः किलेदं तदवाप्तिसाधनं
मनोरथानामगतिर्न विद्यते ॥ ६४ ॥
अथाह वर्णी विदितो महेश्वर-
स्तदर्थिनी त्वं पुनरेव वर्त्तसे।

तस्मिन् (अग्रहस्ते) स्फटिकानामक्षमालिकां (स्फटिकाक्षमालिकां) जपमालिकां (अर्पयन्ती) आमुञ्चन्ती (कथञ्चित्) महता कष्टेन (चिरव्यवस्थापितवाक्) चिरेण स्वीकृतवाक् एतेन लज्जोपरोधो व्यज्यते। (मिताक्षरं) परिमितवर्णं यथा तथा(अभाषत)बभाषे॥६३॥

किमुवाचेत्याह

यथेति। हे (वेदविदांवर)! वैदिकश्रेष्ठ! (त्वया यथाश्रुतं) सम्यक् श्रुतम्। श्रुतार्थमेवाह (अयं जनः) स्वयमित्यर्थः। उच्चैः पदस्य शिवरूपोन्नतस्थानस्य लङ्घने आक्रमणे उत्सुकः (उच्चैःपद-लङ्घनोत्सुकः)। किमत्रायुक्तमित्यत्राह (इदन्तपः) तदवाप्तेः तस्य उच्चैःपदस्य अवाप्तेः प्राप्तेः साधनं (तदवाप्तिसाधनं किल)। किले-त्यलीके। अतितुच्छत्वादसाधकमेवेत्यर्थः। तर्हि त्यजतामित्या-शङ्क्य दुराशा मां न मुञ्चतीत्याशयेनाह (मनोरथानां) कामानाम् (अगतिः) अविषयः (न विद्यते) नहि स्वशक्तिपर्य्यालोचनया कामाः प्रवर्त्तन्त इति भावः॥ ६४॥

अथेति। (अथ वर्णी) ब्रह्मचारी वर्णिनो ब्रह्मचारिण

अमङ्गलाभ्यासरतिं विचिन्त्य तं
तवानुवृत्तिं न च कर्त्तुमुत्सहे ॥ ६५ ॥
अवस्तुनिर्बन्धपरे कथं नु ते
करोऽयमामुक्तविवाहकौतुकः ।
करेण शम्भोर्वलयीकृताहिना
सहिष्यते तत्प्रथमावलम्बनम् ॥ ६६ ॥

इत्यमरः । (आह) उवाचेत्यर्थः । आहेति भूतार्थे लट्प्रयोगो भ्रान्तिमूल इत्याह वामनः । किमित्याह (महेश्वरः) महादेवः (विदितः) मया ज्ञायत इत्यर्थः । बुद्धर्थत्वाद्वर्त्तमाने क्तप्रत्ययः तद्योगात् षष्ठी च । येन त्वं प्राक् भग्नमनोरथा कृतेति भावः । (पुनरेव त्वं) तमीश्वरमर्थयते (तदर्थिन्येव) तत्कामैव प्रवर्त्तसे तत्प्रभावमनुभूयापीति भावः । अनुसरणे को दोषस्तत्राह अमङ्गलाभ्यासे अमङ्गलाचारे रतिर्यस्य तं (अमङ्गलाभ्यासरतिम् तम्) ईश्वरं (विचिन्त्य) विचार्य्य (तव अनुवृत्तिम्) अनुसरणं (कर्त्तुं नोत्सहे) नानुमन्तुं शक्नोमीत्यर्थः ॥ ६५ ॥

अवस्त्विति । अवस्तुनि तुच्छवस्तुनि निर्बन्धः अभिनिवेशः परं प्रधानं यस्याः तस्याः सम्बुद्धिः (अवस्तुनिर्बन्धपरे !) पार्व्वति ! आमुक्तम् आसञ्जितं विवाहे यत्कौतुकं हस्तसूत्रं तद्यस्य स (आमुक्तविवाहकौतुकः ते अयं करः) । कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहल इति शाश्वतः । (वलयीकृताहिना) भूषणीकृतसर्पेण (शम्भोः) महादेवस्य (करेण) करणभूतेन तदेव प्रथमं तत्प्रथमम् अपरिचितत्वादतिभयङ्करमिति भावः । तच्च तत् अवलम्बनं ग्रहणञ्चेति (तत् प्रथमावलम्बनं) कथं नु (सहिष्यते)

त्वमेव तावत् परिचिन्तय स्वयं
कदाचिदेते यदि योगमर्हतः ।
बधूदुकूलं कलहंसलक्षणं
गजाजिनं शोणितबिन्दुवर्षि च ॥ ६७ ॥
चतुष्कपुष्पप्रकरावकीर्णयोः
परोऽपि को नाम तवानुमन्यते ।

कथञ्चिदपि न सहिष्यत इत्यर्थः । अग्रतो यद्भावि तद्दूरेऽवतिष्ठतां प्रथमं करग्रह एव दुःसह इति भावः ॥ ६६ ॥

त्वमेवेति । हे गौरि ! ( त्वमेव स्वयम् ) आत्मना (तावत्) इति मानार्थे । यावन्मात्रं विचारणीयं तावन्मात्रमित्यर्थः । इदमेवोदाहृतञ्च गणव्याख्याने । (परिचिन्तय) पर्य्यालोचय । किमिति (कलहंसलक्षणं) कलहंसचिह्नम् । चिह्नं लक्ष्म च लक्षणमित्यमरः । बध्वाः नवोढायाः दुकूलं ( बधूदुकूलम्) । बधूः स्नुषा नवोढा स्त्रीति विश्वः । तथा शोणितबिन्दून् वर्षतीति तथोक्तं (शोणितबिन्दुवर्षि च) आर्द्रमित्यर्थः ( गजाजिनञ्च ) कृत्तिवासश्च तत्पिनाकिन इत्याशयः । (एते कदाचित्) जात्वपि (योगं) सङ्गतिम् (अर्हतः यदि) अर्हतः किम् एतत्त्वमेव चिन्तयेति पूर्व्वेणान्वयः । पाणिग्रहणे किल बधूवरयोर्वस्त्रान्तग्रन्थिः क्रियते कृत्तिवाससा पाणिपीडने तु दुकूलधारिण्यास्तव स कथं सङ्घटिष्यत इति भावः ॥ ६७ ॥

चतुष्केति । चतुष्के गृहविशेषे यः पुष्पप्रकरः तत्र अवकीर्णयोः न्यस्तयोः (चतुष्कपुष्पप्रकरावकीर्णयोः) कुसुमास्तृतदिव्यभवनभूसञ्चारोचितयोरित्यर्थः ( तव पादयोः अलक्तकाङ्कानि ) लाक्षारञ्जितानि (पदानि) पादाकाराणि पादन्यासचिह्नानि । पदं

अलक्तकाङ्कानि पदानि पादयो-
र्विकीर्णकेशासु परेतभूमिषु ॥ ६८ ॥
अयुक्तरूपं किमतः परं वद
त्रिनेत्रवक्षः सुलभं तवापि यत् ।
स्तनद्वयेऽस्मिन् हरिचन्दनास्पदे
पदं चिताभस्मरजः करिष्यति ॥ ॥ ६९ ॥

शब्दे च वाक्ये च व्यवसायापदेशयोः । पादतच्चिह्नयोरिति विश्वः । विकीर्णाः विक्षिप्ताः केशाः शवशिरोरुहाः यासु तासु ( विकीर्णकेशासु) । अतत्स्थं तत्र दृष्टश्चेति वचनात् स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् इति विकल्पान्न ङीष् । (परेतभूमिषु ) प्रेतभूमिषु श्मशानेष्वित्यर्थः ( परोऽपि ) शत्रुरपि ( को नाम अनुमन्यते ) न कोपीत्यर्थः । नामेति कुत्सायाम् । पिनाकपाणिपाणिग्रहणे तस्य परेतभूसञ्चारित्वेन साहचर्यात्तवापि तत्र सञ्चारोऽवश्यम्भावीति भावः ॥ ६८ ॥

अयुक्तेति । ( त्रिनेत्रवक्षः) त्र्यम्बकालिङ्गनमित्यर्थः । (तव) तत्सम्बन्धितया (सुलभमपि) सुप्रापञ्च भवतीति शेषः । तवेति शेषे षष्ठी । न लोकाव्ययेत्यादिना कृद्योगलक्षणे षष्ठ्या निषेधात् । (अतः परम् ) अस्मात्त्रिनेत्रवक्षोलाभादन्यत् ( अयुक्तरूपम्) अत्यन्तायुक्तं (किं वद) न किञ्चिदित्यर्थः । प्रशंसायां रूपविति रूपप्प्रत्ययः(१) । कुतः यद्यस्मात्कारणात् ( हरिचन्दनास्पदे ) हरिचन्दनस्य आस्पदे स्थानभूते ( अस्मिन् स्तनद्वये ) चिताभस्म श्मशानभस्म तदेव रजः (चिताभस्मरजः) चूर्णं कर्त्तृ (पदं करिष्यति) पदं निधास्यति) भर्त्तुर्भवस्य भस्माङ्गरागादिति भावः ॥ ६९ ॥

---

(१) पा० ५ । ३ । ६६ सू० ।

इयञ्च तेऽन्या पुरतो विडम्बना
यदूढ़या वारणराजहार्य्यया
विलोक्य वृद्धोक्षमधिष्ठितं त्वया
महाजनः स्मेरमुखो भविष्यति ॥ ७० ॥
द्वयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया पिनाकिनः ।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ ७१ ॥

इयमिति । (इयञ्च ते) तव (पुरतः) आदावेव (अन्या विडम्बना) परिहास इत्यर्थः । का सेत्यत्राह (ऊढया) परिणीतया । वहेः कर्म्मणि क्तः (वारणराजहार्य्यया) गजेन्द्रवाह्यया (त्वया अधिष्ठितम्) आरूढ़ं वृद्धमुक्षाणं (वृद्धोक्षम्) । अचतुरेत्यादिना निपातः (१) । (विलोक्य महाजनः) साधुजनः (स्मेरमुखः) स्मितमुखः (भविष्यति) उपहसिष्यति यत् इयमिति पूर्व्वेण सम्बन्धः स्मेरेति नमिकम्पिस्म्यजसेत्यादिना रप्रत्ययः (२) ॥ ७० ॥

द्वयमिति । (पिनाकिनः) ईश्वरस्य (समागमप्रार्थनया) प्राप्तिकामनया क्रियमाणयेति शेषः । (सम्प्रति द्वयं शोचनीयतां) शोच्यत्वं (गतम्) । किन्तदाह (सा) प्रागेव हरशिरोगता । अत्र अतिप्रसिद्धार्थत्वान्न यच्छब्दापेक्षा तदुक्तं काव्यप्रकाशे । प्रकान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यदुपादानं नापेक्षत इति । (कान्तिमती) नित्ययोगे मतुप् । (कलावतः) चन्द्रस्य (कला) षोड़शो

(१) पा० ५ । ४ । ७७ सू० । (२) पा० ३ । २ । १६७ सू० ।

वपुर्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु।
वरेषु यद् बालमृगाक्षि! मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने॥ ७२॥

भागस्य (अस्य लोकस्य नेत्रकौमुदी) नेत्रानन्दिनीत्यर्थः (त्वञ्च)। कान्तिमतीत्वनेत्रकौमुदीत्वविशेषणयोरुभयत्राप्यन्वयः। प्रागेकैव शोच्या सम्प्रति तु त्वमप्यपरेति द्वयं शोच्यमिति पिण्डितार्थः। शोच्यत्वञ्च निकृष्टाश्रयणादिति भावः॥ ७१॥

कन्या वरयते रूपं माता वित्तं पिता श्रुतम्। बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जना इति लोकानामाभाषणकम्। तत्र किञ्चिदपि नास्तीत्याह

वपुरिति। (वपुः)तावदस्य विरूपाणि विकृतरूपाणि अक्षीणि नेत्राणि यस्य तत् (विरूपाक्षम्)। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् इति षच्प्रत्ययः(१)। वैरूप्यञ्च त्रिनेत्रत्वादिति क्षीरस्वामी। अतो न सौन्दर्य्यवार्त्तापीत्यर्थः। अलक्ष्यमज्ञातं जन्म यस्य तस्य भावस्तत्ता (अलक्ष्यजन्मता) कुलमपि न ज्ञायत इत्यर्थः। अलक्षिता जनिरिति पाठे जनिः उत्पत्तिः अलक्षिता न ज्ञाता। जनिरुत्पत्तिरुद्भव इत्यमरः। (वसु) वित्तं (दिगम्बरत्वेनैव निवेदितं) नास्तीति ज्ञापितमित्यर्थः। यदि वित्तं भवति तदा कथं दिगम्बरो भवति अतो ज्ञेयं निर्द्धनोऽयमिति। किं बहुना हे बालमृगाक्षि! पार्व्वति! (वरेषु) वोढृषु। वरो जामातृवोढाराविति विश्वः। (यत्) रूपवित्तादिकं (मृग्यते) कन्यातद्बन्धुभिरन्विष्यते (तत् त्रिलोचने) त्र्यम्बके (व्यस्तम्) एकमपि समस्तं मा भूदिति भावः (अस्ति किं) नास्त्येवेत्यर्थः॥ ७२॥

---

(१) पा० ५। ४। ११३ सू०।

निवर्त्तयास्मादसदीप्सितान्मनः
क्व तद्विधस्त्वं क्व च पुण्यलक्षणा।
अपेक्षते साधुजनेन वैदिकी
श्मशानशूलस्य न यूपसत्क्रिया॥ ७३॥
इति द्विजातौ प्रतिकूलवादिनि
प्रवेपमानाधरलक्ष्यकोपया।
विकुञ्चितभ्रूलतमाहिते तया
विलोचने तिर्य्यगुपान्तलोहिते॥ ७४॥

निवर्त्तयेति। (अस्मादसदीप्सितात्) अनिष्टमनोरथात् (मनः निवर्त्तय) निवारय सा पूर्व्वोक्ता विधा प्रकारो यस्य स तथोक्तः (तद्विधः) अमङ्गलशील इत्यर्थः (क्व) महदन्तरमित्यर्थः (पुण्यलक्षणा) प्रशस्तभाग्यचिह्ना (त्वञ्च क्व) अतो न तवायमर्हं इत्यर्थः। तथाहि। (साधुजनेन)। साधुर्वार्द्धुषिके चारौ सज्जने चाभिधेयवदिति विश्वः। (श्मशानशूलस्य) श्मशानभूमिनिखातस्य बध्यशङ्कोः (वैदिकी) वेदोक्ता यूपो नाम पशुबन्धनसाधनभूतः संस्कृतदारुविशेषः। (तस्य सत्क्रिया) प्रोक्षणाभ्युक्षणादिसंस्कारः (यूपसत्क्रिया नापेक्षते) नेष्यते। यथा श्मशानशूले यूपसत्क्रिया न क्रियते तथा त्वमपि तस्मै न घटसे इति तात्पर्य्यार्थः॥ ७३॥

इतीति। (इति) एवं प्रकारेण (द्विजातौ) द्विजे (प्रतिकूलवादिनि) सति प्रवेपमानेन चञ्चलेन अधरेण अधरोष्ठेन लक्ष्यः अनुमेयः कोपः क्रोधः यस्यास्तया (प्रवेपमानाधरलक्ष्यकोपया तया) पार्व्वत्या (उपान्तलोहिते) प्रान्तरक्ते (विलोचने) विकुञ्चिते कुटिलिते भ्रूलते यस्मिन् तत् तथा (विकुञ्चितभ्रूलतम्) सभ्रू-

उवाच चैनं परमार्थतो हरं
न वेत्सि नूनं यत एवमात्थ माम्।
अलोकसामान्यमचिन्त्यहेतुकं
द्विषन्ति मन्दाश्चरितं महात्मनाम् ॥७५॥
विपत्प्रतीकारपरेण मङ्गलं
निषेव्यते भूतिसमुत्सुकेन वा।

भङ्गमित्यर्थः। (तिर्यक्) साचि (आहिते) निहिते अनादरात्तिर्यगैच्यतेत्यर्थः ॥ ७४ ॥

उवाचेति। अथ (एनं) ब्रह्मचारिणम् (उवाच च) किमिति (परमार्थतः) तत्त्वतः (हरं न वेत्सि) जानासि (नूनम्)। कुतः (यतः माम् एवम्) उक्तया रीत्या (आत्थ) ब्रवीषि। ब्रुवः पञ्चानामादितः इति रूपसिद्धिः (१)। अज्ञानादेवायं शिवद्वेषस्तवेत्याशयेनाह (मन्दाः) मूढाः। मूढाल्पापटुनिर्भाग्या मन्दा इत्यमरः। लोकसामान्यम् इतरजनसाधारणं न भवतीति (अलोकसामान्यम् अचिन्त्यहेतुकं) दुर्बोधकारणकं (महात्मनाश्चरितं द्विषन्ति) हेतुत्वपरिज्ञानात् दूषयन्ति। विद्वांसस्तु कोऽप्यत्र हेतुरस्तीति बहु मन्यन्त इत्यर्थः ॥ ७५ ॥

सम्प्रत्यमङ्गलाभ्यासरतिमित्याद्युक्त(६५श्लो०) दूषणजातं विपदित्यादिभिः षड्भिः श्लोकैः परिहर्त्तुमारभते

विपदिति। (विपत्प्रतीकारपरेण) अनर्थपरिहारार्थिनेत्यर्थः। उपसर्गस्य घञ्यमनुष्ये बहुलमिति दीर्घः (२)। (भूतिसमुत्सुकेन) ऐश्वर्यकामेन (वा मङ्गलं) गन्धमाल्यादिकं (निषेव्यते)

---

(१) पा० ३।४।८४ सू०। (२) पा० ६।३।१२२ सू०।

जगच्छरण्यस्य निराशिषः सतः
किमेभिराशोपहतात्मवृत्तिभिः ॥ ७६ ॥
अकिञ्चनः सन् प्रभवः स सम्पदां
त्रिलोकनाथः पितृसद्मगोचरः ।
स भीमरूपः शिव इत्युदीर्य्यते
न सन्ति याथार्थ्यविदः पिनाकिनः ॥७७॥

शरणे रक्षणे साधुः शरण्यः । तत्र साधुरिति यत्प्रत्ययः(१) । शरणं गृहरक्षित्रोरित्यमरः । जगतः शरण्यः तस्य (जगच्छरण्यस्य निराशिषः) निरभिलाषस्य (सतः) शिवस्य । आशीरुरगदंष्ट्रायां विप्रवाक्याभिलाषयोरिति शाश्वतः । आशया तृष्णया उपहता दूषिता आत्मवृत्तिः अन्तःकरणवृत्तिः येषां तैः ( आशोपहतात्मवृत्तिभिः एभिः) मङ्गलैः (किं) वृथेत्यर्थः । पूर्वं मङ्गलमित्येकवचनस्य जात्यभिप्रायत्वादेभिरिति बहुवचनेन परामर्शो न विरुध्यते । इष्टावाप्तानिष्टपरिहारार्थिनो हि मङ्गलाचारनिर्बन्धः तदुभयासंस्पृष्टस्य तु यथाकथञ्चिदास्तां को दोष इत्यर्थः । एतेनामङ्गलाभ्यासरतिमित्युक्तं प्रत्युक्तम् ॥ ७६ ॥

अकिञ्चन इति । (स) हरः न विद्यते किञ्चन द्रव्यं यस्य सः (अकिञ्चनः) दरिद्रः (सन् सम्पदां) प्रभवत्यस्मादिति (प्रभवः) कारणं ( पितृसद्मगोचरः ) श्मशानाश्रयः सन् त्रयाणां लोकानां नाथः ( त्रिलोकनाथः ) तद्धितार्थेत्यादिना उत्तरपदसमासः (२) । (सः) देवः (भीमरूपः) भयङ्कराकारः सन् (शिवः) सौम्यरूपः (इत्युदी-

(१) पा० ४ । ४ । ९८ सू० । (२) पा० २ । १ । ५१ सू० ।

विभूषणोद्भासि पिनद्धभोगि वा
गजाजिनालम्बि दुकूलधारि वा।
कपालि वा स्यादथवेन्दुशेखरम्
न विश्वमूर्त्तेरवधार्य्यते वपुः॥ ७८॥
तदङ्गसंसर्गमवाप्य कल्पते
ध्रुवं चिताभस्मरजो विशुद्धये।

र्य्यते) उच्यते। अतः (पिनाकिनः) हरस्य यथाभूतोऽर्थः यथार्थः तस्य भावः याथार्थ्यं तत्त्वं तद्विदः (याथार्थ्यविदः न सन्ति)। लोकोत्तरमहिम्नो निर्लेपस्य यथाकथञ्चिदवस्थानं न दोषायेति भावः। एतेन अवस्तुनिर्बन्धपरे इति (६६) श्लोकोक्तं परिहृतं वेदितव्यम्॥ ७७॥

देवस्य लौकिकमलौकिकञ्च प्रसाधनं नास्तीत्याशयेनाह

विभूषणेति। विश्वं मूर्त्तिर्यस्येति (विश्वमूर्त्तेः) अष्टमूर्त्तेः शिवस्य(वपुः) शरीरं विभूषणैरुद्भासत इति (विभूषणोद्भासि स्यात्) (पिनद्धभोगि) आमुक्तभुजङ्गमं (वा स्यात्)। पिनद्धेति नह्यतेरपिपूर्व्वात्कर्म्मणि क्तः वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरिति अकारलोपः। (गजाजिनालम्बि स्यात्) (अथवा दुकूलधारि स्यात्)। कपालमस्यास्तीति (कपालि) ब्रह्मशिरःकपालशेखरं (वा स्यात् इन्दुशेखरं वा स्यात् नावधार्य्यते) न निर्द्धार्य्यते सर्व्वं सम्भवतीत्यर्थः एतेन त्वमेव तावदिति (६७) श्लोकोक्तं प्रत्युक्तमिति ज्ञेयम्॥ ७८॥

अयुक्तरूपं किमतः परं वदेति(६९) श्लोकोक्तं प्रत्याह

तदङ्गेति। तस्य शिवस्य अङ्गं तस्य संसर्गम् (तदङ्गसंसर्गं अवाप्य) आसाद्य चिताभस्मैव रजः (चिताभस्मरजः विशुद्धये कल्पते) अलं पर्य्याप्तो भवतीत्यर्थः। अलमर्थयोगान्नमःस्वस्तिस्वाहेत्यादिना

तथाहि नृत्याभिनयक्रियाच्युतं
विलिप्यते मौलिभिरम्बरौकसाम् ॥७९॥
असम्पदस्तस्य वृषेण गच्छतः
प्रभिन्नदिग्वारणवाहनो वृषा।
करोति पादावुपगम्य मौलिना
विनिद्रमन्दाररजोऽरुणाङ्गुली ॥ ८० ॥

चतुर्थी(१)। (ध्रुवं) शोधकत्वं प्रमाणसिद्धमित्यर्थः। प्रमाणमेवाह (तथाहि) प्रसिद्धमेवेत्यर्थः। नृत्ये ताण्डवे यः अभिनयः अर्थ-व्यञ्जकचेष्टाविशेषः स एव क्रिया तया निमित्तेन च्युतं पतितं (नृत्याभिनयक्रियाच्युतं) चिताभस्मरज इति शेषः (अम्बरौकसां) देवानां (मौलिभिः विलिप्यते) ध्रियते। असुद्धं चेत् कथमिन्द्रा-दिभिर्ध्रियते इत्यर्थापत्तिरनुमानं वा प्रमाणमित्यर्थः॥ ७९॥

यदुक्तं दिगम्बरत्वेन निवेदितं वसु, (७२श्लो०) इयञ्च तेऽन्या पुरतो विडम्बनेत्यादि (७०श्लो) च तत्रोत्तरमाह

असम्पद इति। प्रभिन्नो मदस्रावी दिग्वारणः दिग्गजः वाहनं यस्य सः (प्रभिन्नदिग्वारणवाहनः) ऐरावतेनोढ इत्यर्थः। (वृषा) देवेन्द्रः (असम्पदः) दरिद्रस्य (वृषेण गच्छतः) वृषभारूढस्य (तस्य) ईश्वरस्य(पादौ मौलिना) मुकुटेन (उपगम्य) प्रणम्येत्यर्थः। विनिद्राणां विकसितानां मन्दाराणां कल्पतरुकुसुमानां रजोभिः परागैः अरुणाः अङ्गुलयः ययोस्तौ तथोक्तौ (विनिद्रमन्दाररजो-ऽरुणाङ्गुली करोति)। दिग्गजारोहिणाम् इन्द्रादीनामपि वन्द्यस्य इन्दुमौलेः किं सम्पदा, वृषारोहणे वा को दोष इत्यर्थः॥८०॥

---

(१) पा० २। ३। १६ सू०।

विवक्षता दोषमपि च्युतात्मना
त्वयैकमीशं प्रति साधु भाषितम् ।
यमामनन्त्यात्मभुवोऽपि कारणं
कथं स लक्ष्यप्रभवो भविष्यति ॥ ८१ ॥

अलं विवादेन यथा श्रुतस्त्वया
तथाविधस्तावदशेषमस्तु सः ।
ममात्र भावैकरसं मनः स्थितं
न कामवृत्तिर्वचनीयमीक्षते ॥ ८२ ॥

यदुक्तम् अलक्ष्यजन्मतेति (७२श्लो०) तत्रोत्तरमाह

विवक्षतेति। (च्युतात्मना) नष्टस्वभावेन अतएव (दोषं) दूषणं (विवक्षता)। वक्तुमिच्छतापि (त्वया ईशं) प्रति (एकम्) अलक्ष्यजन्मतेत्येतदेकं वच इत्यर्थः। (साधु भाषितं) सम्यगुक्तं कुतः (यम्) ईश्वरम् (आत्मभुवोऽपि। ब्रह्मणोऽपि। ब्रह्मात्मभूः सुरज्येष्ठ इत्यमरः। (कारणमामनन्ति) उदाहरन्ति विद्वांस इति शेषः। पाघ्राध्मास्थाम्नादाणित्यादिना मनादेशः (१)। (सः) ईश्वः (कथं लक्ष्यप्रभवः) लक्ष्यजन्मा (भविष्यति)। अनादिनिधनस्य भगवतः कारणशङ्का कलङ्कश्च नान्विष्यत इत्यर्थः ॥ ८१ ॥

अलमिति। अथवा (विवादेन) कलहेन) (अलम् त्वया यथा) येन प्रकारेण (सः) ईश्वरः (श्रुतः अशेषं) कात्स्न्येन (तथाविधः) तावत् प्रकार एव (अस्तु)। (मम मनः) तु (अत्र) ईश्वरे भावः शृङ्गार एकः अद्वितीयो रसः आस्वादो यस्य तत् (भावैकरसं तथा)

---

(१) पा० ७। ३। ७८ सू०।

निवार्य्यतामालि! किमप्ययं वटुः
पुनर्विवक्षुः स्फुरितोत्तराधरः।
न केवलं यो महतोऽपभाषते
शृणोति तस्मादपि यः स पापभाक् ॥८३॥
इतो गमिष्याम्यथवेति वादिनी
चचाल बाला स्तनभिन्नवल्कला।

(स्थितम्)। तथाहि (कामवृत्तिः) स्वेच्छाव्यवहारी (वचनीयम्) अस्थानसङ्गापवादं (नेक्षते) न विचारयति! न हि स्वेच्छासञ्चारिणो लोकापवादाद्बिभ्यतीति भावः ॥ ८२ ॥

निवार्य्यतामिति। हे (आलि)! सखि! आलिः सखी वयस्या चेत्यमरः। (स्फुरितोत्तराधरः) स्फुरणभूयिष्ठौष्ठः (अयं) वटुः) माणवकः (पुनः किमपि विवक्षुः) वक्तुमिच्छुः। ब्रुवः सनन्तादुप्रत्ययः। (निवार्य्यताम्)। तर्हि वक्तुमेव कथं न ददासीत्याह। तथाहि (यो महतः) पूज्यान् (अपभाषते) अपवदति (न केवलं स पापभाक्) भवतीति शेषः। अत्र स्मृतिः। गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते। कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यत इति। (यः) जनः (तस्मात् शृणोति सः पापभाक्) भवतीति शेषः ॥ ८३ ॥

सम्प्रति गन्तव्यपक्षमेवाश्रयते

इत इति। (अथवा इतः) अन्यत्र (गमिष्यामीति वादिनी) वदन्ती स्तनाभ्यां भिन्नवल्कला रयवशात् कुचस्रस्तचीरा (स्तनभिन्नवल्कला बाला) पार्व्वती (चचाल)। (वृषराजकेतनः) वृषभध्वजश्च

स्वरूपमास्थाय च तां कृतस्मितः
समाललम्बे वृषराजकेतनः ॥ ८४ ॥
तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
र्निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥८५॥
अद्य प्रभृत्यवनताङ्गि ! तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।

(स्वरूपमास्थाय) निजरूपमाश्रित्य (कृतस्मितः) सन् (तां) पार्व्वतीं (समाललम्बे) जग्राह ॥ ८४ ॥

तमिति । (तं) देवं (वीक्ष्य वेपथुमती) कम्पवती (सरसाङ्गयष्टिः) खिन्नगात्री महादेवदर्शनेन देव्याः सात्त्विकभावोदय उक्तः। (निक्षेपणाय) अन्यत्र विन्यासाय (उद्धृतम्) उत्क्षिप्तं (पदम्) अङ्घ्रिम् (उद्वहन्ती शैलाधिराजतनया) पार्व्वती मार्गे अचलः तस्य व्यतिकरेण समाहत्या अवरोधनेनेति यावत्। आकुलिता सम्भ्रमिता (मार्गाचलव्यतिकराकुलिता सिन्धुः) नदी (इव)। देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियामित्यमरः। (न ययौ न तस्थौ) लज्जयेति भावः। उक्ता वसन्ततिलका तभजा जगौ ग इति लक्षणात् वसन्ततिलका वृत्तमेतत् ॥ ८५ ॥

अद्येति। (चन्द्रमौलौ) शिवे हे (अवनताङ्गि!) पार्व्वति! अद्यप्रभृति) अस्माद्दिनादारभ्येत्यर्थः। प्रभृतियोगादद्येति सप्तम्यर्थवाचिना पञ्चम्यर्थो लक्ष्यते। (तव तपोभिः क्रीतः)। दासश्च

अङ्काय सा नियमजं क्लममुत्ससर्ज्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥ ८६ ॥

इति श्रीकालिदासकृतौ कुमारसम्भवे
महाकाव्ये तपःफलोदयो नाम

पञ्चमः सर्गः।

दाने दासते आत्मनं ददातीति (दासः अस्मि इति वादिनि) वदति सति। (सा) देवी (अङ्काय) सपदि। द्राक् झटित्यञ्जसाङ्काय द्राङ्मङ्क्षु सपदि द्रुतमित्यमरः ! (नियमजं) तपोजन्यं (क्लमं) क्लेशम् (उत्ससर्ज्ज) फलप्राप्त्या क्लेशं विसस्मारेत्यर्थः। (हि) तथाहि (क्लेशः फलेन) फलसिद्ध्या (पुनर्नवतां विधत्ते) पूर्व्ववदेवाक्लिष्टतामापादयतीत्यर्थः। सफलः क्लेशो न क्लेश इति भावः ॥८६॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां
पञ्चमः सर्गः।

---

## षष्ठः सर्गः ।

अथ विश्वात्मने गौरी सन्दिदेश मिथः सखीम् ।
दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति॥१॥
तया व्याहृतसन्देशा सा बभौ निभृता प्रिये ।
चूतयष्टिरिवाभ्यासे मधौ परभृतोन्मुखी ॥२॥

अथेति । (अथ) देवदेवानुग्रहानन्तरं (गौरी) पार्व्वती विश्वम् आत्मा स्वरूपं यस्येति विश्वस्य आत्मेति वा तस्मै (विश्वात्मने शिवाय (मिथः) रहसि । मिथोऽन्योन्यं रहस्यपीत्यमरः । (सखीं सन्दिदेश) अतिससर्ज्ज । क्रियामात्रप्रयोगेऽपि सम्प्रदानत्वाच्चतुर्थी । किमिति (भूभृतां नाथः) हिमवान् (मे) मम (दाता) सन् (प्रमाणीक्रियतां इति) दातृत्वेन प्रमाणीक्रियतामित्यर्थः । प्रार्थनायां लोट् । पित्रा दीयमानायाः परिग्रहो मम महाननुग्रह इति भावः ॥ १॥

तयेति । (तया) सख्या सखीमुखेनेत्यर्थः (व्याहृतसन्देशा) उक्तवाचिका (प्रिये) हरे विषये (निभृता) निश्चला परमासक्तेत्यर्थः (सा) गौरी (मधौ) वसन्ते निभृता स्थिरा परभृतया कोकिलया उन्मुखी मुखरा (परभृतोन्मुखी)। मुखशब्देन अभिभाषणव्यापारो लक्ष्यते । तथाच परभृतामुखेन व्याहरन्तीत्यर्थः ।

स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम्।
ऋषीन् ज्योतिर्मयान् सप्त सस्मार स्मरशासनः॥३॥
ते प्रभामण्डलैर्व्योम द्योतयन्तस्तपोधनाः।
सारुन्धतीकाः सपदि प्रादुरासन् पुरः प्रभोः॥४॥

परभृतेति क्रियाशब्दविवक्षायां जातेरस्त्रीति ङीप्प्रत्ययो (१) न भवति। तयेत्युपमेयस्य व्यक्तत्वादुपमानवाचिपरभृताशब्दस्य समासः सोढ़व्यः। अथवा भृङ्कुराणां सम्पादादित्वात् क्विप्। परैर्भृत् यस्यास्तया परभृता इति व्यासेन व्याख्येयम्। पदमञ्जरीकारस्तु परैर्भ्रियत इति कर्मणि क्विपमाह। (चूतयष्टिः) चूतशाखेव (अभ्यासे) अन्तिके (बभौ)। सदेशाभ्याससविधसमर्यादसवेशवत्। उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययमित्यमरः॥ २॥

स इति। (सः) प्रकृतः। शास्तीति शासनः। बहुलग्रहणात् कर्त्तरि ल्युट्। स्मरस्य शासनः (स्मरशासनः) ईश्वरः (तथेति प्रतिज्ञाय) तथा करिष्यामीत्युक्त्वेत्यर्थः। (उमां कथमपि (कृच्छ्रेण (विसृज्य) तत्र गाढ़ानुरागत्वादिति भावः। (ज्योतिर्मयान्) तेजोरूपान् (सप्तर्षीन्) अङ्गिरःप्रभृतीन् (सस्मार) स्मृतवान्॥ ३॥

त इति। (ते) तप एव धनं येषान्ते (तपोधनाः) सप्तर्षयः (प्रभामण्डलैः) तेजःपुञ्जैः (व्योम) आकाशं (द्योतयन्तः) प्रकाशयन्तः अरुन्धत्या सह वर्त्तन्त इति (सारुन्धतीकाः) सन्तः नद्यृतश्चेति कप्(२)। (सपदि प्रभोः) ईश्वरस्य पुरः पुरोभागे (प्रादुरासन्) प्रत्यक्षाः बभूवुः॥ ४॥

---

(१) पा० ४। १। ६३ सू०।
(२) पा० ५। ४। १५३ सू०!

आप्लुतास्तीरमन्दारकुसुमोत्किरवीचिषु ।
व्योमगङ्गाप्रवाहेषु दिङ्नागमदगन्धिषु ॥ ५ ॥
मुक्तायज्ञोपवीतानि बिभ्रतो हैमवल्कलाः ।
रत्नाक्षसूत्राः प्रव्रज्यां कल्पवृक्षा इवाश्रिताः ॥६॥

इतः परं षड्भिः श्लोकैस्तानेव मुनीन् वर्णयति आप्लुता इत्यादिभिः । उत्किरन्ति विक्षिपन्तीत्युत्किराः । इगुपधेत्यादिना कप्रत्ययः (१) । तीरे ये मन्दाराः कल्पवृक्षाः तेषां कुसुमानाम् उत्किराः वीचयः तरङ्गाः येषां तेषु (तीरमन्दारकुसुमोत्किरवीचिषु) दिङ्नागानां दिग्गजानां मदगन्धो येष्विति तथोक्तेषु (दिङ्नागमदगन्धिषु व्योमगङ्गाप्रवाहेषु) आकाशगङ्गास्रोतःसु (आप्लुताः) स्नाताः ॥ ५ ॥

मुक्तेति । मुक्तानां मौक्तिकानां यज्ञोपवीतानि (मुक्तायज्ञोपवीतानि) मुक्तामयानीत्यर्थः (बिभ्रतः) दधानाः । हेममयानि वल्कलानि येषां ते ( हैमवल्कलाः ) । रत्नमयानि अक्षसूत्राणि येषान्ते (रत्नाक्षसूत्राः) । (प्रव्रज्यां) प्रव्रजनम् । व्रजयजोर्भावे क्यबिति क्यप् (२) । (आश्रिताः कल्पवृक्षा इव) स्थिताः । अत्र चतुर्थाश्रमवाचिना प्रव्रज्याशब्देन वानप्रस्थाश्रमो लक्ष्यते जङ्गः परिग्रहव्रीडां प्राजापत्यास्तपस्विन इति ( ६स० ३४श्लोके ) सपत्नीकत्वाभिधानात् सुतविन्यस्तपत्नीकस्तया वानुगतोऽपि सन्निति वानप्रस्थस्योभयथा स्मरणात् ॥ ६ ॥

---

(१) पा० ३ । १ । १३५ सू० ।

(२) पा० ३ । ३ । ९८ सू० ।

अधःप्रस्थापिताश्वेन समावर्जितकेतुना ।
सहस्ररश्मिना साक्षात् सप्रणाममुदीक्षिताः॥७॥
आसक्तबाहुलतया सार्द्धमुद्धृतया भुवा ।
महावराहदंष्ट्रायां विश्रान्ताः प्रलयापदि ॥८॥
सर्गशेषप्रणयनाद्विश्वयोनेरनन्तरम् ।
पुरातनाः पुराविद्भिर्धातार इति कीर्त्तिताः॥९॥

अध इति । (अधःप्रस्थापिताश्वेन) सूर्यमण्डलोपरिवर्त्तित्वात् सप्तर्षिमण्डलस्येति भावः । ( समावर्ज्जितकेतुना ) तन्मण्डलाघातशङ्कया नमितध्वजेन (सहस्ररश्मिना) सूर्य्येण (साक्षात्) स्वयमेव (सप्रणामम् उदीक्षिताः) गमनाभ्यनुज्ञादानपर्य्यन्तमित्यर्थः । भगवतः सूर्य्यस्याप्युपास्या इति भावः ॥ ७ ॥

आसक्तेति । पुनः किं विधाः ( प्रलयापदि ) कल्पान्तसङ्कटे ( आसक्तबाहुलतया ) दंष्ट्रायामिति शेषः । ( उद्धृतया ) दंष्ट्रयेति शेषः । (भुवा सार्द्धं) धरण्या सह (महावराहदंष्ट्रायां विश्रान्ताः) महाप्रलयेऽप्यविनाशिन इत्यर्थः ॥ ८ ॥

सर्गशेषेति । (विश्वयोनेः) ब्रह्मणः (अनन्तरं) सर्गशेषस्य प्रणयनात्( सर्गशेषप्रणयनात् ) ब्रह्मसृष्टावशिष्टसृष्टेः करणाद्धेतोरित्यर्थः । (पुराविद्भिः( पुराणवेदिभिः व्यासादिभिः ( पुरातनाः) (धातार इति कीर्त्तिताः) । विश्वयोनेरिति सम्बन्धमात्रे षष्ठी तस्यानन्तरमिति भाष्ये दर्शनात् । अपादानत्वविवक्षायां तु पञ्चमी । अयमदःशब्दो यथाशब्दादृत्तादनन्तरस्येति शावरभाष्ये दर्शनात् । तथा अथातो धर्म्मजिज्ञासा वेदाध्यायादनन्तरमित्याचार्य्याः कविश्च पुराणपत्रापगमादनन्तरमिति एवमन्यत्रापि द्रष्टव्यम् ॥ ९ ॥

प्राक्तनानां विशुद्धानां परिपाकमुपेयुषाम् ।
तपसामुपभुञ्जानाः फलान्यपि तपस्विनः॥१०। कुलकं
तेषां मध्यगता साध्वी पत्युः पादार्पितेक्षणा ।
साक्षादिव तपःसिद्धिर्बभासे बह्वरुन्धती ॥ ११ ॥
तामगौरवभेदेन मुनींश्चापश्यदीश्वरः ।
स्त्रीपुमानित्यनास्थैषा वृत्तं हि महितं सताम्॥१२॥
तद्दर्शनादभूत् शम्भोर्भूयान् दारार्थमादरः ।

प्राक्तनानामिति । ( प्राक्तनानां ) जन्मान्तरभवानां (विशुद्धानां) निर्मलानां ( परिपाकं ) फलदानोन्मुखत्वम् ( उपेयुषां ) गतानां (तपसां फलानि उपभुञ्जानाः अपि तपस्विनः) तपोनिष्ठाः। प्रारब्धभोगिनो निस्पृहाश्चेति भावः ! कुलकम् ॥ १० ॥

तेषामिति । ( तेषां ) ऋषीणां (मध्यगता साध्वी) पतिव्रता अतएव (पत्युः) वशिष्ठस्य पादयोः अर्पितेक्षणा (पादार्पितेक्षणा) निविष्टदृष्टिः (अरुन्धती साक्षात्) प्रत्यक्षा (तपःसिद्धिरिव) तेषामेवेति शेषः। तेषां मध्यगतेति लिङ्गवचनादिसाम्यादियमुपमा। (बहु) भूयिष्ठं (बभासे) भाति स्म ॥ ११ ॥

तामिति । ( ईश्वरः ) भगवान् ( ताम् ) अरुन्धतीं (मुनींश्च अगौरवभेदेन) समानप्रतिपत्त्या (अपश्यत्) दृष्टवान् । नचायमविवेक इत्याह । (हि) यस्मात् (स्त्रीपुमांश्चेत्येषा अनास्था) स्त्रीपुंसभेदो न विवक्षितः किन्तु (सतां) साधूनां ( वृत्तं ) चरित्रमेव (महितं) पूज्यम् । गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वय इति भावः ॥ १२ ॥

तदिति । (तद्दर्शनात्) अरुन्धतीदर्शनात् ( शम्भोः दारार्थं )

क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलकारणम् १३
धर्म्मेणापि पदं शर्व्वे कारिते पार्व्वतीं प्रति।
पूर्व्वापराधभीतस्य कामस्योच्छ्वसितं मनः ॥१४॥
अथ ते मुनयः सर्व्वे मानयित्वा जगद्गुरुम्।
इदमूचुरनूचानाः प्रीतिकण्टकितत्वचः ॥ १५ ॥

दारपरिग्रहार्थम् आदरो भूयान्) बहुतरः (अभूत्)। ननु दाराः कुत्रोपयुज्यन्त इत्यत्राह (धर्म्याणां) धर्म्मादनपेतानां। धर्म्मपत्यर्थन्यायादनपेते इति यत्प्रत्ययः(१) (क्रियाणां) इज्यादीनां सत्यः पतिव्रताः पत्न्यः ( सत्पत्न्यः )। पत्युर्नो धर्म्मसंयोगे इति ङीप्(२) नकारश्च। (मूलकारणं खलु) ॥ १३ ॥

धर्म्मेणेति। (धर्म्मेण) दारसङ्ग्रहलक्षणेनापि कर्त्रा (शर्व्वे) ईश्वरे (पार्व्वतीं प्रति पदं कारिते) सति। हृक्रोरन्यतरस्यामिति शर्व्वस्याणिकर्त्तुः कर्म्मत्वम्(३)। (पूर्व्वापराधभीतस्य कामस्य मनः उच्छ्वसितं)पुनरुज्जीवनावकाशो भवतीति सप्रत्याशमभूदित्यर्थः॥१४॥

अथेति। (अथ अनूचानः) साङ्गवेदप्रवक्तारः। अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु य इत्यमरः। उपेयिवाननाश्वाननूचानश्चेति निपातः(४)। प्रीत्या कण्टकिताः पुलकिताः त्वचो येषान्ते तथोक्ताः (प्रीतिकण्टकितत्वचः ते सर्व्वे मुनयः जगद्गुरुं) हरं (मानयित्वा) पूजयित्वा (इदं) वक्ष्यमाणं (ऊचुः) ॥ १५ ॥

---

(१) पा० ४।४।९२ सू०।　(२) पा० ४।१।३३ सू०।
(३) पा० १।४।५३ सू०।　(४) पा० ३।२।१०९ सू०।

यद् ब्रह्म सम्यगाम्नातं यदग्नौ विधिना हुतम् ।
यच्च तप्तं तपस्तस्य विपक्कं फलमद्य नः ॥ १६ ॥
यदध्यक्षेण जगतां वयमारोपितास्त्वया ।
मनोरथस्याविषयं मनोविषयमात्मनः ॥ १७ ॥
यस्य चेतसि वर्त्तेथाः स तावत् कृतिनां वरः ।

यदिति । (ब्रह्म) वेदः । वेदस्तत्वं तपो ब्रह्मेत्यमरः । (सम्यक्) नियमपूर्व्वकं (आम्नातम्) अधीतमिति (यत् अग्नौ विधिना हुतं) इति ( यत् तपः ) चान्द्रायणादिकं ( तप्तं ) इति च ( यद् ) (तस्य) अध्ययनेज्यातपोरूपस्य आश्रमत्रयसाध्यस्य कृतस्नस्यापि कर्म्मण इत्यर्थः । समुदायाभिप्रायकमेकवचनम् अन्यथा आवृत्त्यान्वयप्रसङ्गात् । न च नपुंसकैकवद्भावः अनपुंसकेनेति नियमात् । (फलं) कार्य्यम् ( अद्य नः ) अस्माकं (विपक्कं) सुनिष्पन्नमित्यर्थः । कर्म्मणि क्तः पचो व इति निष्ठातस्य वत्वम् (१) ॥ १६ ॥

तदेव फलमाह

यदिति । (यत् यस्मात्कारणात् (जगतामध्यक्षेण) अधिपेन (त्वया वयं मनोरथस्य ) अभिलाषस्य (अविषयम् ) अगोचरम् (आत्मनः) स्वस्य (मनोविषयं) मनोदेशम् (आरोपिताः( प्रापिताः । तस्माद्विपक्वं फलमिति पूर्व्वेण सम्बन्धः । सकलजगदन्वेष्यस्य भगवतोऽपि वयमन्वेष्या भवाम इति परमोत्कृष्टा वयमिति भावः ॥ १७ ॥

तदेवोपपादयति

यस्येति ( यस्य ) जनस्य ( चेतसि) वर्त्तेथाः ) येन स्मर्य्यसे

---

(१) पा० ८ । २ । ५२ सू० ।

किं पुनर्ब्रह्मयोनेर्यस्तव चेतसि वर्त्तते ॥ १८ ॥
सत्यमर्काच्च सोमाच्च परमध्यास्महे पदम् ।
अद्य तूच्चैस्तरं ताभ्यां स्मरणानुग्रहात्तव ॥१९॥
त्वत्सम्भावितमात्मानं बहु मन्यामहे वयम् ।
प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः ॥ २० ॥

इत्यर्थः । (स तावत्) स एव (कृतिनां) कृतकृत्यानां (वरः) श्रेष्ठः । ब्रह्मणः वेदस्य वेधसो वा योनेः कारणस्य यद्वा वेदप्रमाणकस्य (ब्रह्मयोनेः तव चेतसि यो वर्त्तते) त्वया स्मर्य्यत इत्यर्थः (किम्पुनः) स कृतिनां वरः इति किमु वक्तव्यमित्यर्थः ॥ १८ ॥

सत्यमिति ! अर्कात् ( सूर्यात् (सोमात्) चन्द्राच्च (परम्) उच्चैः (पदं) स्थानम् (अध्यास्महे) तिष्ठामः वयमिति शेषः (सत्यम्) । अधिशीङ्स्थासां कर्म्मेति कर्म्मत्वम् (१) । (अद्य तु तव) कर्त्तुः स्मरणमेव अनुग्रहः प्रसादः तस्मात् (स्मरणानुग्रहात्) हेतोः (ताभ्यां)अर्केन्दुभ्याम् (उच्चैस्तरं) अत्युच्चं (पदम् अध्यास्महे) इति सम्बन्धः । उच्चैस्तरमिति किमेतिङव्ययघादाम्वद्रव्यप्रकर्षे किमादिभ्यः घसंज्ञकतरतमप्रत्ययाच्चामुस्यान्नतुद्रव्यप्रकर्षे इति द्रव्यप्रकर्षे तन्निषेधात् । द्रव्यप्रकर्षत्वान्नामुप्रत्ययः ॥ १९ ॥

त्वदिति । ( वयं ) त्वया सम्भावितं सत्कृतं (त्वत्सम्भावितम्) (आत्मानम्) आत्मस्वरूपं (बहु) अधिकं यथा तथा (मन्यामहे) । तथाहि (उत्तमादरः( सत्पुरुषकर्तृकः सत्कारः (स्वगुणेषु) विषये (प्रायः) प्रायेण भूम्ना (प्रत्ययं) विश्वासम् (आदत्ते) जनयति । सर्व्वस्यापि महाजनपरिग्रह एव पूज्यताहेतुरित्यर्थः ॥ २० ॥

---

(१) पा० १ । ४ । ४६ सू० । (२) पा० ५ । ४ । ११ सू० ।

या नः प्रीतिर्विरूपाक्ष ! त्वदनुध्यानसम्भवा ।
सा किमावेद्यते तुभ्यमन्तरात्मासि देहिनाम्॥२१॥
साक्षाद्दृष्टोऽसि न पुनर्विद्मस्त्वां वयमञ्जसा ।
प्रसीद कथयात्मानं न धियां पथि वर्त्तसे ॥२२॥
किं येन सृजसि व्यक्तमुत येन बिभर्षि तत् ।
अथ विश्वस्य संहर्त्ता भागः कतम एष ते ॥२३॥

येति । हे (विरूपाक्ष ! त्वदनुध्यानसम्भवा) त्वत्कर्तृकस्मरण-जन्या ( नः ) अस्माकं (या प्रीतिः सा) प्रीतिः (तुभ्यं किमावेद्यते) किमर्थं निवेद्यते तथाहि (देहिनां) प्राणिनाम् (अन्तरात्मा) अन्तर्यामी ( असि ) । सर्वसाक्षिणा त्वया अस्मत्प्रीतिरनावेदितापि ज्ञायत एव यतस्ततो न बुद्धबोधनं सम्भवतीति भावः ॥ २१ ॥

साक्षादिति । हे देव ! ( साक्षात् ) प्रत्यक्षेण (दृष्टोऽसि अञ्जसा पुनः) तत्त्वतस्तु (त्वां वयं न विद्मः) । दृश्यमानस्य रूपस्यातात्त्विकत्वादिति भावः । अतः (प्रसीद) अनुग्रहाण (आत्मानं) निजस्वरूपं ( कथय ) । नचाकथितं तत्सुबोधमित्याह ( धियां ) बुद्धीनां (पथि न वर्त्तसे) अतः त्वयैव तद्रूपं कथनीयमित्यर्थः ॥ २२ ॥

तात्त्विकं रूपं तावदास्तां न दृश्यमानमपि रूपं तत्त्वतो रूपयितुं शक्यमित्याह

किमिति । हे देव ! (एषः) दृश्यमानः (ते भागः) मूर्त्तिः (किं येन) भागेन (व्यक्तं) प्रपञ्चं (सृजसि) सः । यत्तदोर्नित्यसम्बन्धात्सार्व्वत्र तच्छब्देरध्याहार्य्यः । (उत येन) भागेन (तत्) व्यक्तं ( बिभर्षि ) पालयसि स वा अथ यः (भागः विश्वस्य)

अथवा सुमहत्येषा प्रार्थना देव ! तिष्ठतु।
चिन्तितोपस्थितांस्तावत् शाधि नः करवाम किं॥२४
अथ मौलिगतस्येन्दोर्विशदैर्दशनांशुभिः।
उपचिन्वन् प्रभां तन्वीं प्रत्याह परमेश्वरः॥२५॥
विदितं वो यथा स्वार्था न मे काश्चित् प्रवृत्तयः।
ननु मूर्त्तिभिरष्टाभिरित्थम्भूतोऽस्मि सूचितः॥२६॥

व्यक्तस्य (संहर्त्ता) स वा। किमादयः सन्देहे। कतमः ब्रह्मविष्णुमहेश्वरेषु (एषः कतमः भागः) तदुच्यतामित्यर्थः॥ २३ ॥

ननु हर इत्येवं निश्चयात् कथमयम् संशयस्तत्राह

अथवेति। (अथवा) हे (देव! सुमहती) गुह्यतमत्वादतिदुर्लभेत्यर्थः। (एषा प्रार्थना) निजरूपनिरूपणप्रार्थना (तिष्ठतु)। किन्तु चिन्तितेन चिन्तिता वा उपस्थितास्तान् (चिन्तितोपस्थितान् नः) अस्मान् (तावत् शाधि) आज्ञापय (किं करवाम)। प्रार्थनायां लोट्। अलमप्रस्तुतेन प्रस्तुते तावन्नियुङ्क्ष्वेत्यर्थः॥ २४ ॥

अथेति। (अथ परमेश्वरः मौलिगतस्य इन्दोः तन्वीम्) अल्पां कलमात्रत्वादिति भावः। (प्रभां) कान्तिं (विशदैः) शुभ्रैः (दशनांशुभिः उपचिन्वन्) वर्द्धयन् (प्रत्याह) प्रत्युवाचेत्यर्थः॥२५॥

विदितमिति। (हे मुनयः! काश्चिदपि मे प्रवृत्तयः) व्यापाराः (स्वार्थाः) (न) भवन्ति (यथा) तथा (वः) युष्माकं (विदितम्)। वाकार्थः कर्म बुद्ध्यर्थत्वाद्वर्त्तमाने क्तः तद्योगात् षष्ठी। प्रवृत्तिपारार्थ्ये प्रमाणमाह (अष्टाभिः मूर्त्तिभिः) (इत्थम्भूतः) इमं प्रकारं परार्थप्रवृत्तिरूपं प्राप्तः। भूप्राप्ताविति धातोः कर्त्तरि क्तः। (सूचितः) ज्ञापितः (अस्मि)। मत्स्वमूर्त्तिचेष्टया स्वपारार्थ्यमनुमेयमित्यर्थः॥ २६ ॥

सोऽहं तृष्णातुरैर्वृष्टिं विद्युत्वानिव चातकैः ।
अरिविप्रकृतैर्देवैः प्रसूतिं प्रति याचितः ॥२७॥
अत आहर्त्तुमिच्छामि पार्व्वतीमात्मजन्मने ।
उत्पत्तये हविर्भोक्तुर्यजमान इवारणिम् ॥२८॥
तामस्मदर्थे युष्माभिर्याचितव्यो हिमालयः ।
विक्रियायै न कल्पन्ते सम्बन्धाः सदनुष्ठिताः॥२९॥

स इति । (सः) परार्थप्रवृत्तिः (अहं तृष्णातुरैः चातकैः वृष्टिं विद्युत्वान्) मेघः (इव) (अरिविप्रकृतैः( शत्रुपीड़ितैः (देवैः प्रसूतिं) पुत्त्रोत्पादनं (प्रति याचितः) याचेर्दुहादित्वात् अप्रधाने कर्म्मणि क्तः ॥२७ ॥

अत इति । (अतः) सुरप्रार्थितत्वाद्धेतोः (आत्मजन्मने) पुत्त्राय पुत्त्रमुत्पादयितुमित्यर्थः । क्रियार्थोपपदस्येत्यादिना चतुर्थी (१) । (पार्व्वतीं यजमानः) यष्टा पूङ्यजोः शानन् इति शानन्प्रत्ययः (२) (हविर्भोक्तुः ) अग्नेः ( उत्पत्तये अरणिम् ) अग्निमन्थनदारुविशेषमिव । निर्म्मन्थ्यदारुणि त्वरणिर्द्वयोरित्यमरः । (आहर्त्तुं) संग्रहीतुम् (इच्छामि( ॥२८ ॥

तामिति । (अस्मदर्थे) अस्मत्प्रयोजने निमित्ते सति (युष्माभिः तां) पार्व्वतीं (हिमालयः) हिमवान् (याचितव्यः) । याचेर्दुहादित्वादप्रधाने कर्म्मणि—प्रधानकर्म्मण्याख्येये लादीनाहुर्द्विकर्म्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्म्म इति भाष्यवचनात् तव्यप्रत्ययः। आवश्यकश्चैतदित्याह सद्भिः सत्पुरुषैः अनुष्ठिताः सङ्घटिताः (सदनुष्ठिताः सम्बन्धाः) यौनादयः (विक्रियायैः)वैकल्यो-

(१) पा० २।३।१४ सू० । (२) पा० ३।२।१२८ सू० ।

उन्नतेन स्थितिमता धुरमुद्वहता भुवः ।
तेन योजितसम्बन्धं वित्त मामप्यवञ्चितम् ॥३०॥
एवं वाच्यः स कन्यार्थमिति वो नोपदिश्यते ।
भवत्प्रणीतमाचारमामनन्ति हि साधवः ॥३१॥
आर्य्याप्यरुन्धती तत्र व्यापारं कर्त्तुमर्हति ।

त्पादनाय (न कल्पन्ते) न पर्य्याप्नुवन्ति न समर्था इत्यर्थः । अलमर्थ-योगाच्चतुर्थी ॥ २९ ॥

न चाहं लौल्यात् स्त्रियमिच्छामि किन्तु देवोपकाराय यद्येवं निखिलदेवेषु विद्यमानेषु हिमगिरेः शिलाभूतस्य कन्यापरिणयेच्छा कथमित्युक्ते स एव मे श्लाघ्यसम्बन्धोऽत्रभवान् हिमवानित्याह

उन्नतेनेति । (उन्नतेन) प्रांशुना प्रसिद्धेन च (स्थितिमता) प्रतिष्ठावता (भुवः धुरं) भारं (उद्वहता) निर्वाहकेणेत्यर्थः । (तेन) हिमवता योजितः सङ्घटितः सम्बन्धो यौनसम्बन्धो यस्य तं (योजितसम्बन्धं) (मामप्यवञ्चितम्) अव्यामोहितं (वित्त) जानीत विद ज्ञाने इति धातोर्लोट् ॥ ३० ॥

तर्हि स किं वाच्य इत्याशङ्क्याह

एवमिति । (कन्यार्थं) कन्याप्रदानाय (सः) हिमवान् (एवं वाच्य इति वः) युष्मभ्यं (नोपदिश्यते) । कुतः (हि) यस्मात् (साधवः) विद्वांसः भवद्भिः प्रणीतं (भवत्प्रणीतं) स्मृतिरूपेण निबद्धम् (आचारम् आमनन्ति) उपदिशन्ति । न हि स्वयमुपदेष्टारः परोपदेशमपेक्षन्त इत्यर्थः ॥ ३१ ॥

आर्य्येति । (आर्य्या) पूज्या (अरुन्धत्यपि तत्र) विवाहकृत्ये (व्यापारं) साहाय्यं (कर्त्तुम् अर्हति) । तथाहि (प्रायेण) प्राचुर्य्येण

प्रायेणैवंविधे कार्य्ये पुरन्ध्रीणां प्रगल्भता ॥३२॥
तत् प्रयातौषधिप्रस्थं सिद्धये हिमवत्पुरम् ।
महाकोशीप्रपातेऽस्मिन् सङ्गमः पुनरेव नः ॥३३॥
तस्मिन् संयमिनामाद्ये जाते परिणयोन्मुखे ।
जहुः परिग्रहव्रीड़ां प्राजापत्यास्तपस्विनः ॥३४॥
ततः परममित्युक्त्वा प्रतस्थे मुनिमण्डलम् ।

(एवंविधे कार्य्येत्र) विवाहादिकार्य्येत्र दुर्घट इत्यर्थः (पुरन्ध्रीणां) कुटुम्बिनीनाम् स्यात्तु कुटुम्बिनी पुरन्ध्रिरित्यमरः। (प्रगल्भता) चातुर्य्यत्रम्। स्त्रीप्रधानेषु कृत्येषु स्त्रीणामेव घटनापाटवमिति भावः ॥ ३२ ॥

(तदिति। (तत्) तस्मात्कारणात (ओषधिप्रस्थं) नाम (हिमवत्पुरं) हिमवन्नगरं (सिद्धये) कार्य्यत्रसिद्ध्यर्थं) (प्रयात) गच्छत। (अस्मिन्) पुरोवर्त्तिनि महाकोशी नाम तत्रत्या काचिन्नदी तस्याः प्रपाते भृगावेव (महाकोशीप्रपाते) सा नदी यत्र पतति तस्मिन्नित्यर्थः। प्रपातस्तटोभृगुरित्यमरः। (नः) अस्माकं पुनः सङ्गमः) अस्त्विति शेषः। भवत्समागमप्रतिपालयन्नहमिहैव निवत्स्यामीत्यर्थः ॥ ३३ ॥

तस्मिन्निति। (संयमिनां) योगिनाम् (आद्ये तस्मिन्) ईश्वरे (परिणयोन्मुखे विवाहोत्सुके (जाते) सति प्रजापतेरिमे (प्राजापत्याः) ब्रह्मपुत्रा इत्यर्थः (तपस्विनः) मुनयः परिग्रहैः पत्नीभिः व्रीडां गार्हस्थ्यनिमित्तामित्यर्थः पत्नीपरिजनादानमूलशापाः परिग्रहा इत्यमरः। (जहुः) तत्यजुः। जहातेर्लिटि रूपम्। नहि समानगुणदोषेषु व्रीडागमोऽस्तीति भावः ॥ ३४ ॥

भगवानपि सम्प्राप्तः प्रथमोद्दिष्टमास्पदम् ॥३५॥
ते चाकाशमसिश्याममुत्पत्य परमर्षयः।
आसेदुरोषधिप्रस्थं मनसा समरंहसः॥ ३६ ॥
अलकामतिवाह्यैव वसतिं वसुसम्पदाम्।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशितम् ॥ ३७॥
गङ्गास्रोतःपरिक्षिप्तं वप्रान्तर्ज्वलितौषधि।

तत इति। (ततः) अनन्तरं (मुनिमण्डलं) मुनिसमूहः (परममितुरक्त्वा। ओमितुरक्त्वा अनुमन्येत्यर्थः। अव्ययमेतत्। ओमेवं परमं मतमित्यमरः। (प्रतस्थे)। (भगवान्) ईश्वरः (अपि प्रथमोद्दिष्टं) पूर्व्वसङ्केतितम् (आस्पदं) स्थानं महाकोशीप्रपातं (सम्प्राप्तः) ॥ ३५ ॥

त इति। (मनसा समरंहसः) मनस्तुल्यवेगाः (ते परमर्षयश्च)। पूर्व्वश्लोकोक्तेश्वरसमुच्चयार्थश्चकारः। असिवच्छ्यामं नीलम् (असिश्यामं आकाशं) खं प्रति (उत्पत्य ओषधिप्रस्थं) हिमवत्पुरम् (आसेदुः) सद्यः प्रापुरित्यर्थः॥ ३६ ॥

इतःपरं दशभिः श्लोकैः ओषधिप्रस्थमेव वर्णयति

अलकामिति। (वसुसम्पदां) धनसमृद्धीनां (वसतिं) स्थानम् (अलकां) कुवेरनगरीम् (अतिवाह्य) परिच्छिद्येति यावत् (उपनिवेशितमिव) स्थितम्। तथा स्वर्गस्य अभिष्यन्दः अतिरेकः अतिरिक्तजन इति यावत्। तस्य वमनं निःसारणं (स्वर्गाभिष्यन्दवमनं कृत्वा उपनिवेशितमिव) स्थितम्। उभयत्रापि कौटिल्यः भूतपूर्व्वमभूतपूर्व्वं वा जनपदं परदेशापवाहेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेदिति। अलकामरावत्यतिशयितसमृद्धिकमित्यर्थः॥ ३७ ॥

बृहन्मणिशिलासालं गुप्तावपि मनोहरम् ॥३८॥
जितसिंहभया नागा यत्राश्वा विलयोनयः।
यक्षाः किंपुरुषाः पौरा योषितो वनदेवताः॥३९॥

गङ्गेति। गङ्गायाः स्रोतोभिः प्रवाहैः परिच्छिन्नं परिवेष्टितं (गङ्गास्रोतःपरिच्छिन्नं) तैरेव सपरिखमित्यर्थः। वप्रः चयः प्राकारचैत्यमिति यावत्। स्याच्चयो वप्रमस्त्रियामित्यमरः। तस्य अन्तः मध्ये ज्वलिताः प्रकाशमानाः ओषधयः यस्य तत् (वप्रान्तर्ज्वलितौषधि)। ज्वलितौषधित्वाद्रात्रिषु सञ्चारिणां दीपनिरपेक्षमित्यर्थः। बृहन् विपुलः मणिशिलानां माणिक्यानां सालः प्राकारो यस्य तत् तथोक्तं (बृहन्मणिशिलासालं) प्राकारो वरणः सालः इत्यमरः। अतएव (गुप्तावपि) सम्वरणेऽपि (मनोहरम्) अकृत्रिमदुर्गसंवरणमिति भावः॥ ३८॥

जितेति। (यत्र) पुरे (नागाः) गजाः जितं सिंहेभ्यो भयं यैस्ते (जितसिंहभयाः) सिंहाधिकबला इत्यर्थः। नाथस्तु पदं तुषारस्रुतिधौतरक्तम् इत्येतद्विरोधभयात् वीतवीतभया इति पपाठ। तथा न भेतव्यं तत्र वनगजानां सिंहहतत्वाभिधानात् अत्र तु ओषधिप्रस्थगजानां हिमवन्महिम्ना सिंहातिरेकसम्भवेनाविरोधादिति। वीतवीतेति पाठे वीतं विगतं वीतात् पादाङ्कुशकर्मभ्यां भयं येषां ते तथोक्ताः स्वभावविनीता इत्यर्थः। पादकर्म युतं प्रोक्तं यातमङ्कुशवारणम्। उभयं वीतमाख्यातमिति यादवः। (अश्वाः विलयोनयः) विलसम्भवाः। अन्यत्र तु न तथेति वैचित्र्यम्। उक्तञ्च। अमृताद्वाष्पतो वह्नेर्वेदेभ्योऽण्डाच्च गर्भतः। साम्नो हयानामुत्पत्तिः सप्तधा परिकीर्त्तितेति। (यक्षाः) प्रसिद्धाः (किम्पुरुषाः) किन्नराश्च (पौराः) पुरजनाः। (वनदेवता एव योषितः) न तु मानुष्य इत्यर्थः॥ ३९॥

शिखरासक्तमेघानां व्यज्यन्ते यत्र वेश्मनाम् ।
अनुगर्जितसन्दिग्धाः करणैर्मुरजस्वनाः ॥४०॥
यत्र कल्पद्रुमैरेव विलोलविटपांशुकैः ।
गृहयन्त्रपताकाश्रीरपौरादरनिर्मिता ॥४१॥
यत्र स्फटिकहर्म्येषु नक्तमापानभूमिषु ।
ज्योतिषां प्रतिबिम्बानि प्राप्नुवन्त्युपहारताम् ॥४२॥
यत्रौषधिप्रकाशेन नक्तं दर्शितसञ्चराः ।

शिखरेति । (यत्र) पुरे शिखरेषु आसक्ताः मेघा येषान्तेषां (शिखरासक्तमेघानां वेश्मनां) सम्बन्धिनः, अनुगर्ज्जितानि प्रतिगर्ज्जितानि तैः सन्दिग्धाः । (अनुगर्ज्जितसंन्दिग्धा मुरजस्वनाः करणैः) तालव्यवस्थापकैः ताड़नविशेषैः । तदुक्तं राजकन्दर्पेण । नृत्यवादित्रगीतानां प्रयोगवशभेदिनाम् संस्थानं ताड़नं रोधः करणानि प्रचक्षते इति । (व्यज्यन्ते) स्फुटीक्रियन्ते ॥ ४० ॥

यत्रेति । (यत्र) नगरे विलोलानि चञ्चलानि विटपेषु अंशुकानि येषां तैः (विलोलविटपांशुकैः कल्पद्रुमैरेव) अपौरादरेण पौरादरं विनैव निर्म्मिता (अपौरादरनिर्म्मिता) अयत्नसिद्धेत्यर्थः । गृहेषु यानि यन्त्राणि आधारदारूणि तेषु पताकाः तासां श्रीः (गृहयन्त्रपताकाश्रीः) सम्भवतीति शेषः । तत्र लम्बाम्बराः कल्पतरव एव वैजयन्तीति सम्भाव्यन्त इत्यर्थः ॥ ४१ ॥

यत्रेति । (यत्र) पुरे (नक्तं) रात्रौ (स्फटिकहर्म्येषु आपानभूमिषु) पानगोष्ठीप्रदेशेषु (ज्योतिषां) नक्षत्राणाम् (प्रतिबिम्बानि उपहारतां) पुष्पोपहारत्वं मौक्तिकोपहारत्वं वा (प्राप्नुवन्ति ॥ ४२ ॥

अनभिज्ञास्तमिस्राणां दुर्दिनेष्वभिसारिकाः॥४३॥
यौवनान्तं वयो यस्मिन्नान्तकः कुसुमायुधात्।
रतिखेदसमुत्पन्ना निद्रा संज्ञाविपर्य्ययः॥४४॥
भ्रूभेदिभिः सकम्पोष्ठैर्ललिताङ्गुलितर्ज्जनैः।

यत्रेति। (यत्र) पुरे (दुर्द्दिनेषु) मेघाच्छन्नदिवसेषु (नक्तं) ओषधीनां तृणज्योतिषां प्रकाशेन (ओषधिप्रकाशेन) सञ्चरन्त्यभिरिति सञ्चराः पन्थानः। गोचरसञ्चरेत्यादिना घप्रत्ययान्तो निपातः (१)। (दर्शितसञ्चराः( प्रकाशितमार्गाः (अभिसारिकाः) कान्तार्थिन्यः। कान्तार्थिनी तु या याति सङ्केतं साभिसारिकेत्यमरः। (तमिस्राणां) तमसाम्। ज्ञयोगात्कर्म्मणि षष्ठी (२)। (अनभिज्ञाः) तमांसि नाभिजानन्तीत्यर्थः॥ ४३॥

यौवनेति। (यस्मिन्) पुरे (वयः यौवनान्तं) यौवनावधिकं सर्व्वेप्यजरा इत्यर्थः। तथा (कुसुमायुधात्) कामात् अन्य इति शेषः। (अन्तकः) मृत्युः (न) अस्तीति शेषः। विरहिणां तादृग् दुःखोत्पादकत्वादन्तकत्वोपचारः। कामं विना मृत्युर्नास्तीत्यर्थः। अतएव तत्कार्य्यभूतकारणाभाव इत्याशयेनाह रतीति। (रतिखेदसमुत्पन्ना निद्रा) सुप्तिरेव (संज्ञाविपर्य्ययः) चेतनापगमो न तु दीर्घनिद्रारूप इत्यर्थः। अत्रत्याः सर्व्वे अजरामरा इति श्लोकतात्पर्य्यार्थः। अन्तयति अन्तं करोतीत्यन्तकः। अन्तयतेस्तत्करोतीति णयन्तात् ण्वुल्प्रत्ययः॥ ४४॥

भ्रूभेदिभिरिति। (यत्र) पुरे (प्रियाः) युवानः (भ्रूभेदिभिः) भ्रूभङ्गवद्भिः सकम्पाः ओष्ठाः येषु तैः (सकम्पोष्ठैः) ललितानि

(१) पा० ३। ३। ११९ सू०। (२) पा० २। ३। ६५। सू०।

यत्र कोपैः कृताः स्त्रीणामाप्रसादार्थिनः प्रियाः॥४५॥
सन्तानकतरुच्छायासुप्तविद्याधराध्वगम्।
यस्य चोपवनं बाह्यं गन्धवद्गन्धमादनम्॥४६॥ कुलकं
अथ ते मुनयो दिव्याः प्रेक्ष्य हैमवतं पुरम्।

अङ्कुलितर्ज्जनानि येषु तैः (स्खलिताङ्कुलितर्ज्जनैः स्त्रीणां कोपैः) मानाख्यैः (आप्रसादार्थिनः) आप्रसादं प्रसादपर्य्यन्तम् अर्थिनः याचकाः (कृताः) न तु शत्रुकोपैरिति भावः॥ ४५॥

सन्तानकेति। किञ्चेति चार्थः। सन्तानकतरोः छायासु सुप्ताः विद्याधराः देवताविशेषाः तएव अध्वगाः यस्मिन् तत् तथोक्तं (सन्तानकतरुच्छायासुप्तविद्याधराध्वगं) (गन्धवत्) गन्धाढ्य (गन्धमादनं) नाम गिरिः (यस्य) पुरस्य बहिर्भवं (बाह्यम्) (उपवनं) आरामः। अत्र गन्धवद्गन्धमादनमिति आगन्तुकः पाठः। प्राचीनपाठस्तु सुगन्धिर्गन्धमादन इति पुंलिङ्गान्तः। अतएव क्षीरस्वामिना गन्धमादनमन्ये चेत्यत्र गन्धेन मादयतीति गन्धमादन इति व्याख्याय प्रयोगे च पुंलिङ्गता दृश्यते इत्याशयेनोक्तं सुगन्धिर्गन्धमादन इति कालिदास इति। सन्तानकतरुच्छायेत्यत्र पूर्व्वपदार्थबाहुल्यसम्भवेऽपि शलभच्छायाम् इक्षुच्छायामितिवत् समस्तच्छायानिष्पत्तेस्तदपेक्षाभावात् छायाबाहुल्ये (१) इति नपुंसकत्वं नास्तीत्यनुसन्धेयम्॥ ४६॥

अथेति। (अथ ते) दिवि भवाः (दिव्याः मुनयः) हिमवत इदं (हैमवतं पुरं प्रेक्ष्य) स्वर्गाभिसन्धिना स्वर्गोद्देशेन यत्सुकृतं (स्वर्गाभिसन्धिसुकृतं) ज्योतिष्टोमाद्यनुष्ठानं तत् स्वर्गाभिसन्धिसुकृतं

(१) पा० २।४।२२ सू०।

स्वर्गाभिसन्धिसुकृतं वञ्चनामिव मेनिरे ॥४७॥
ते सद्मनि गिरेर्वेगादुन्मुखद्वाःस्थवीक्षिताः।
अवतेरुर्जटाभारैर्लिखितानलनिश्चलैः ॥ ४८ ॥
गगनादवतीर्णा सा यथावृद्धपुरःसरा।
तोयान्तर्भास्करालीव रेजे मुनिपरम्परा ॥४९॥
तानर्घ्यानर्घ्यमादाय दूरात् प्रत्युद्ययौ गिरिः।

(वञ्चनां) प्रतारणाम् (इव मेनिरे)। हिमवन्नगरमवेक्ष्य स्वर्गस्य सुकृतफलत्वं वदता वेदेन वयं विप्रलब्धा इत्यर्थः। स्वर्गादतिरमणीयमिति भावः ॥ ४७ ॥

त इति। (लिखितानलनिश्चलैः) चित्रगतज्वलननिष्पन्दैः इति वेगप्रकर्षोक्तिः। (जटाभारैः) उपलक्षिताः (ते) मुनयः द्वारि तिष्ठन्तीति द्वाःस्थाः द्वारपालकाः। प्रतीहारो द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः इत्यमरः। उन्मुखैरूर्द्ध्वमुखैः द्वाःस्थैः वीक्षिताः (उन्मुखद्वाःस्थवीक्षिताः) सन्तः न तु विनिवारिता इत्यर्थः। (गिरेः) हिमवतः (सद्मनि वेगादवतेरुः) अवतीर्णवन्तः ॥ ४८ ॥

गगनादिति। (गगनात् अवतीर्णा) अवरूढ़ा यथावृद्धं वृद्धानुक्रमेण स्थिताः पुरःसराः अग्रेसराः यस्याः सा तथोक्ता (यथावृद्धपुरःसरा) अनुपसर्ज्जनाधिकारात् न ङीप्। (सा मुनिपरम्परा) मुनिपङ्क्तिः (तोयान्तः) तोयाभ्यन्तरे (भास्करालौ) प्रतिविम्बितार्कपङ्क्तिः (इव रेजे)। एतेन मुनीनां तेजस्वित्वेऽपि सुखसन्दर्शनं सूचयति। भास्कराणां भूयिष्ठत्वसम्भावनार्थं तोयान्तरित्युक्तम्। अतएव बहुत्वसिद्धिश्च ॥ ४९ ॥

तानिति। (गिरिः) हिमवान् (अर्घ्यम्) अर्घ्यार्थं जलम्

नमयन् सारगुरुभिः पादन्यासैर्वसुन्धराम् ॥५०॥
धातुताम्राधरः प्रांशुर्देवदारुबृहद्भुजः।
प्रकृत्यैव शिलोरस्कः सुव्यक्तो हिमवानिति॥५१॥
विधिप्रयुक्तसत्कारैः स्वयं मार्गस्य दर्शकः।
स तैराक्रमयामास शुद्धान्तं शुद्धकर्मभिः ॥५२॥

(आदाय सारगुरुभिः) अन्तःसारदुर्भरैः (पादन्यासैः वसुन्धरां नमयन्) अधः प्रापयन्। अर्घमर्हन्तीति (अर्घ्यान्) पूज्यान् दण्डादित्वाद्यप्रत्ययः(१) (तान्) मुनीन् (दूरात्प्रत्युद्ययौ) ॥ ५० ॥

सम्प्रति हिमवन्तमेव जङ्गमस्थावररूपद्वयसाधारणैर्विशेषणैर्विशिनष्टि

धात्विति। धातुवत्ताम्रौऽधरौ यस्य सः तथोक्तः (धातुताम्राधरः) अन्यत्र धातुरेव ताम्रोऽधरो यस्य। (प्रांशुः) उन्नतः उभयत्रापि समानम्। देवदारुवद्बृहन्तौ भुजौ यस्य सः तथोक्तः(देवदारुबृहद्भुजः) देवदारव एव बृहन्तौ भुजौ यस्येत्यन्यत्र। (प्रकृत्या) स्वभावेनैव शिलावदुरो यस्य सः (शिलोरस्कः) शिलेवेत्यन्यत्र। उरःप्रभृतिभ्यः कप् इति कप् (२)। अतः (हिमवानिति सुव्यक्तः) वर्त्तमाने क्तः। सत्यं स एवायं हिमवानिति तद्धर्मप्रत्यभिज्ञानादवधारित इत्यर्थः ॥ ५१ ॥

विधीति। (सः) हिमवान् विधिना शास्त्रेण प्रयुक्तसत्कारैः (विधिप्रयुक्तसत्कारैः) कृतार्चनैः (शुद्धकर्मभिः) अदुष्टचरितैः शुद्धान्तप्रवेशार्हैरित्यर्थः। तैः मुनिभिः (स्वयं मार्गस्य) दर्शयतीति (दर्शकः) दर्शयिता सन्। पश्यतेर्ण्यन्तात् ण्वुल्प्रत्ययः। (शुद्धान्तम्)

---

(१) पा० ५। १। ६६ सू०। (२) पा० ५। ४। १५१ सू०।

तत्र वेत्रासनासीनान् कृतासनपरिग्रहः।
इत्युवाचेश्वरान् वाचं प्राञ्जलिर्भूधरेश्वरः ॥५३॥
अपमेघोदयं वर्षमदृष्टकुसुमं फलम्।
अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे ॥५४॥
मूढं बुद्धमिवात्मानं हैमीभूतमिवायसम्।

अन्तःपुरम् (आक्रमयामास) प्रवेशयामासेत्यर्थः। अत्र क्रमेरगत्यर्थत्वाद्गतिबुद्धीत्यादिना तैरित्यस्य न कर्म्मत्वम् (१) ॥ ५२ ॥

तत्रेति। वेत्रं लताविशेषः। (तत्र) शुद्धान्ते (वेत्रासनासीनान्) वेत्रमयविष्टरोपविष्टान् (ईश्वरान्) प्रभून् मुनीन् (भूधरेश्वरः) हिमवान् (कृतासनपरिग्रहः) उपविष्टः सन्नित्यर्थः। (प्राञ्जलिः) कृताञ्जलिः सन् (इति) एवं (वाचम् उवाच) ॥ ५३ ॥

अपेति। (अतर्कितोपपन्नम्) अविचारितमेवोपगतम् अत्यन्तासम्भावितमित्यर्थः। (वः) युष्माकं (दर्शनम् अपमेघोदयं वर्षम्) अनभ्रा वृष्टिः तथा अदृष्टं कुसुमं यस्य तत् तथोक्तं (अदृष्टकुसुमम् फलञ्च) सत् (मे प्रतिभाति)। अतिदुर्लभलाभः संवृत्त इत्यर्थः। अत्र मेघोदयकुसुमरूपकारणयोरभावेऽपि वर्षफलरूपकार्ययोरुदयाभिधानात् (विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यत इति लक्षणात् विभावना। रूपकं रूपितारोपात् विषये निरपह्नवे इति लक्षणात् रूपकम्। मुनिदर्शनस्य विशिष्टवृत्तित्वेन च रूपणाद्रूपकालङ्कारश्चेत्युभयोः संसृष्टिः ॥ ५४ ॥

मूढमिति। (भवदनुग्रहादात्मानं) मां (मूढं बुद्धमिव) मूढो भूत्वा यः बुद्धवान् तमिव कर्त्तरि क्तः। (आयसम्) अयोविकारं

(१) पा० १। ४। ५२ सू०

भूमेर्दिवमिवारूढं मन्ये भवदनुग्रहात् ॥ ५५ ॥
अद्य प्रभृति भूतानामधिगम्योऽस्मि शुद्धये।
यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते ॥ ५६ ॥
अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः !।
मूर्ध्नि गङ्गाप्रपातेन धौतपादाम्भसा च वः ॥५७॥
जङ्गमं प्रैष्यभावे वः स्थावरं चरणाङ्कितम्।

(हैमीभूतम्) आयसत्वं विहाय सौवर्णत्वं प्राप्तमित्यर्थः। (भूमेः) भूलोकात् ( दिवं ) स्वर्गम् ( आरूढमिव मन्ये )। ज्ञानरूपस्थानानि अद्य मे परमुत्कृष्यन्त इति भावः ॥ ५५ ॥

अद्येति। ( अद्य प्रभृति ) इतः आरभ्य (भूतानां) प्राणिनां (शुद्धये अधिगम्योऽस्मि) शुद्धार्थिनां तीर्थभूतोऽस्मीत्यर्थः। भवदागमनादिति शेषः। (हि) यस्मात् (यत् अर्हद्भिः) सद्भिः (अध्यासितम्) अधिष्ठितं जुष्टमिति यावत्। (तत्तीर्थं प्रचक्षते)। निपानागमयोस्तीर्थमृषिजुष्टजले गुरावित्यमरः ॥ ५६ ॥

अवैमीति। हे (द्विजोत्तमाः! आत्मानं) मां (द्वयेनैव पूतं) शुद्धम् (अवैमि) अवगच्छामि। केन द्वयेन (मूर्ध्नि गङ्गाप्रपातेन) मन्दाकिनीपातेन, (वः) युष्माकं धौतयोः क्षालितयोः पादयोरम्भसा (धौतपादाम्भसा च)। अत्र गङ्गाजलवत्पादाम्भसः पावनत्वमित्यौपम्यं गम्यते तच्च "प्रस्तुताप्रस्तुतयो दीपकन्तु निगद्यते" इति लक्षणात् दीपकालङ्कारः। 'प्रियः प्रियतराख्यान' मिति लक्षणात् प्रियोऽलङ्कार इति केचित् ॥ ५७ ॥

जङ्गममिति। हे मुनयः (द्विरूपं) जङ्गमस्थावरात्मकत्वात् द्विप्रकारमपि (मे वपुः विभक्तानुग्रहं) विभज्यकृतप्रसादं (मन्ये)।

विभक्तानुग्रहं मन्ये द्विरूपमपि मे वपुः ॥ ५८ ॥
भवत्सम्भावनोत्थाय परितोषाय मूर्च्छते ।
अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे॥५९॥
न केवलं दरीसंस्थं भास्वतां दर्शनेन वः ।
अन्तर्गतमपास्तं मे रजसोऽपि परं तमः ॥ ६० ॥

कुतः (जङ्गमं वपुः वः) युष्माकं ( प्रैष्यभावे ) कैङ्कर्य्ये स्थितमिति शेषः। प्राद्ध्होढ़ोढ़्य्रैषैष्येषु वृद्धिर्वक्तव्येति वृद्धिः । नियोज्यकिङ्कर-प्रैष्यभुजिष्यपरिचारका इत्यमरः । (स्थावरं वपुः चरणाङ्कितम्)। अयमेव हि महाननुग्रहो दासजनस्य यत्कर्म्मसु नियोजनं मूर्द्धनि पादन्यासश्चेति तात्पर्य्यार्थः ॥ ५८ ॥

भवदिति । व्याप्ताः दिगन्ताः यैस्तानि (व्याप्तदिगन्तानि) महान्त्यपीत्यर्थः। (मे) मम (अङ्गानि भवत्सम्भावनोत्थाय) युष्मदनुग्रहजन्याय (मूर्च्छते) व्याप्नुवते (परितोषाय न प्रभवन्ति) न पर्य्याप्नुवन्ति । अलमर्थयोगाच्चतुर्थी (१)। यथा महत्स्वपि मद्गात्रेषु न माति तथा मे हर्षो वर्द्धत इत्यर्थः ॥ ५९ ॥

नेति। (भास्वतां) तेजस्विनां विवस्वताञ्च (वः) युष्माकं (दर्शनेन केवलं दरीसंस्थं) गुहागतं (तमः) ध्वान्तरूपमेव (नापास्तं) किन्तु (मे अन्तर्गतम्) अन्तरात्मगतं (रजसः) रजोगुणात् (परम्) अनन्तरम् (तमः) अज्ञानरूपमपि (अपास्तम्)। रजस्तु पादन्यासैरेवापास्तमिति भावः। प्रसिद्धैः भास्वद्भिः वाह्यं तमोऽपास्यते एभिस्त्वन्तरमपि आधिक्यमुपमेयस्योपमानान् न्यूनतायवा। व्यतिरेक इति लक्षणात् व्यतिरेको व्यज्यते ॥ ६० ॥

(१) पा० २ । ३ । १६ सू० ।

कर्त्तव्यं वो न पश्यामि स्याच्चेत् किं नोपपद्यते।
मन्ये मत्पावनायैव प्रस्थानं भवतामिह ॥ ६१ ॥
तथापि तावत् कस्मिंश्चिदाज्ञां मे दातुमर्हथ।
विनियोगप्रसादा हि किङ्कराः प्रभविष्णुषु॥६२॥
एते वयममी दाराः कन्येयं कुलजीवितम्।
ब्रूत येनात्र वः कार्य्यमनास्था बाह्यवस्तुषु ॥६३॥

कर्त्तव्यमिति। (कर्त्तव्यं) कार्य्यं (वः) युष्माकं (न पश्यामि) निस्पृहत्वादिति भावः। अथ (स्याच्चेत्) विद्येत यदि (किं नोपपद्यते) किं नाम न सम्भवति सर्व्वं सुलभमेवेत्यर्थः। अथवा किमत्र प्रयोजनचिन्तयेत्याह (मत्पावनाय) मच्छोधनायैव (भवतामिह) विषये (प्रस्थानम्) इमं देशमुद्दिश्य इदं प्रयाणमित्यर्थः (मन्ये) तर्कयामि।६१।

तथापीति। (तथापि) भवतां निस्पृहत्वेऽपि (कस्मिंश्चित्) कर्म्मणीति शेषः। (आज्ञाम्) इदं कुर्व्वित्यादेशं (तावत्) इदानीं (मे) मह्यं (दातुम् अर्हथ) मदनुग्रहबुद्धेरिति भावः। (हि) यस्मात् (किङ्कराः) भृत्याः प्रभवन्तीति (प्रभविष्णुषु प्रभुषु विषये। भुवश्च इष्णुच्प्रत्ययः ((१)। विशेषेण नियोगः विनियोगः प्रेषणमेव प्रसादः अनुग्रहः येषां ते (विनियोगप्रसादाः)। अन्यथा स्वस्वामिभावो निस्फल इति भावः॥ ६२ ॥

एत इति। किं बहुना (एते वयम्, अमी दाराः, इयं कुलस्य जीवितं) प्राणभूता परमप्रेमास्पदमित्यर्थः (कन्या च) एषां मध्ये (येन) जनेन (वः कार्य्यं) प्रयोजनं (ब्रूत) तमिति शेषः। येन

(१) पा०। ३। २। १३८ सू०।

इत्यूचिवांस्तमेवार्थं गुहामुखविसर्पिणा।
द्विरिव प्रतिशब्देन व्याजहार हिमालयः ॥६४॥
अथाङ्गिरसमग्रण्यमुदाहरणवस्तुषु।
ऋषयो नोदयामासुः प्रत्युवाच स भूधरम् ॥६५॥
उपपन्नमिदं सर्व्वमतः परमपि त्वयि।
मनसः शिखराणाञ्च सदृशी ते समुन्नतिः ॥६६॥

सोऽपि दीयत इति भावः। रत्नहिरण्यादिकन्तु न मे गण्यमित्याह (बाह्यवस्तुषु) कनकरत्नादिषु (अनास्था) अनादरः। प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते। अदेयं न किञ्चिदस्तीति भावः ॥ ६३ ॥

इतीति। (इत्यूचिवान्) उक्तवान्। वचेः क्वसुप्रत्ययः (हिमालयः) हिमवान् गुहानां मुखेषु विवरेषु विसर्पतीति (गुहामुखविसर्पिणा प्रतिशब्देन तं) पूर्व्वोक्तं एवार्थं (द्विः) द्विवारम्। द्वित्रिचतुर्भ्यः सुजिति सुच्प्रत्ययः(१)। (व्याजहार) बभाषे ॥ ६४ ॥

अथेति। (अथ) अनन्तरम् (ऋषयः) उदाहरणानि कथाप्रसङ्गाः तएव वस्तूनि अर्थाः तेषु (उदाहरणवस्तुषु) अग्रं नयतीत्यग्रणीः तम् (अग्रण्यं) प्रगल्भम्। सत्सूद्विषेत्यादिना (२) क्विप्। अग्रग्रामाभ्यां नयतेरिति वक्तव्यमिति णत्वम्। (अङ्गिरसं) नाम ऋषिं (नोदयामासुः) प्रतिवक्तुं प्रेरयामासुः (सः) अङ्गिराः (भूधरं) हिमवन्तं) प्रत्युवाच) ॥ ६५ ॥

उपपन्नमिति। (इदम्) एते वयममी दारा इत्याद्युक्तं (सर्व्वम्) (अतः परम्) अतोऽधिकमपि (त्वय्युपपन्नं) युज्यते तथाहि (ते

(१) पा० ५।४।१८ सू०। (२) पा० ३।२।६१ सू०।

स्थाने त्वां स्थावरात्मानं विष्णुमाहुस्तथाहि ते ।
चराचराणां भूतानां कुक्षिराधारतां गतः ॥६७॥
गामध्यास्यत् कथं नागो मृणालमृदुभिः फणैः ।
आरसातलमूलात्त्वमवालम्बिष्यथा न चेत् ॥६८॥
अच्छिन्नामलसन्तानाः समुद्रोर्मय्यनिवारिताः ।

मनसः शिखराणाञ्च समुन्नतिः सदृशी) शिखराणीव मनो महोन्नतमित्यर्थः । किन्नाम दुष्करमुन्नतचित्तानामिति भावः । प्रस्तुताप्रस्तुतयोर्मनःशिखरयोरौपम्यस्य गम्यत्वात् ( अप्रस्तुताप्रस्तुतयोरेकधर्म्माभिसम्बन्धः दीपकन्तु निगद्यत इति लक्षणात् ) दीपकालङ्कारः ॥ ६६ ॥

स्थान इति । (त्वां स्थावरात्मानं) स्थावररूपिणं (विष्णुमाहुः) स्थावराणां हिमालय इति (१० अ० २५ श्लो० ) गीतावचनात् । (स्थाने) युक्तम् । युक्तार्थे अव्ययमेतत् । युक्ते द्वे साम्प्रतं स्थाने इत्यमरः । ( तथाहि ते ) तव (कुक्षिः चराचराणां) जङ्गमस्थावररूपिणां (भूतानां) पृथिव्यादीनाम् (आधारतां गतः) तवैव विष्णोः कुक्षिरेवंभूत इति भावः ॥ ६७ ॥

गामिति । (नागः) शेषाहिः (मृणालमृदुभिः) विसकोमलैः (फणैः गां) भुवं (कथम् अध्यास्यत्) धारयेत् (त्वम् आरसातलमूलात्) पातालपर्य्यन्तम् । विकल्पादसमासः । (नावालम्बिष्यथाचेत्) पादैर्नावलम्बेथाः यदि । त्वदवलम्बनादेव भुजगराजोऽपि भुवं बिभर्त्तीत्यर्थः । अत्र क्रियातिपत्त्यभावात्(१) लृङ्प्रयोगश्चिन्त्यः ॥ ६८ ॥

---

(१) पा० ३ । ३ । १३९ सू० ।

पुनन्ति लोकान् पुण्यत्वात् कीर्त्तयः सरितश्च ताः॥६९॥
यथैव श्लाघ्यते गङ्गा पादेन परमेष्ठिनः ।
प्रभवेण द्वितीयेन तथैवोच्छिरसा त्वया ॥७०॥
तिर्य्यगूर्ध्वमधस्ताच्च व्यापको महिमा हरेः ।
त्रिविक्रमोद्यतस्यासीत्स तु स्वाभाविकस्तव ॥७१॥

अच्छिन्नेति । अच्छिन्नाः अविच्छिन्नाः अमलाश्च सन्तानाः प्रबन्धाः प्रवाहाश्च यासान्ताः ( अच्छिन्नामलसन्तानाः ) समुद्रोर्म्मिभिः अनिवारिताः ( समुद्रोर्मिभिरनिवारिताः ) पारगमनादन्तःप्रवेशाच्चेति भावः । (ते) तत्र (कीर्त्तयः सरितश्च) गङ्गादयः (पुण्यत्वात्) पवित्रत्वात् (लोकान् पुनन्ति) पावयन्ति । लोकपावनाः खलु पुण्यश्लोका इति भावः । केवलप्रकृतविषयस्तुल्ययोगितालङ्कारः ॥ ६९ ॥

यथेति । ( गङ्गा ) भागीरथी प्रभवत्यस्मादिति प्रभवः तेन (प्रभवेण) कारणेन परमे तिष्ठतीति (परमेष्ठिनः) विष्णोः । परमे कित् इति इनिप्रत्ययः । तत्पुरुषे कृति बहुलमिति अलुक्(१) । परमेवर्हिदिव्यम्भिभ्यःस्थः इति षत्वम् (पादेन) चरणेन (यथैव श्लाघते) प्रशस्यते ( तथैव द्वितीयेन प्रभवेण उच्छिरसा त्वया श्लाघ्यते ) हरिचरणवत् तीर्थस्यापि तीर्थभूतस्त्वमिति भावः ॥ ७० ॥

तिर्य्यगिति । (तिर्य्यगूर्द्ध्वमधस्ताच्च व्यापकः) सर्व्वव्यापीत्यर्थः । (महिमा) महत्त्वं (हरेः) विष्णोः त्रिषु विक्रमेषु उद्यतस्य सतः (त्रिविक्रमोद्यतस्य आसीत्) । त्रिविक्रमोद्यतस्यापि कदाचिदेव न तु सर्व्वदेत्यर्थः । (तव) तु व्यापको महिमा (स्वाभाविकः) नित्यसिद्ध इत्यर्थः ॥ ७१ ॥

---

(१) पा० ६ । ३ । १४ सू० ।

यज्ञभागभुजां मध्ये पदमातस्थुषा त्वया।
उच्चैर्हिरण्मयं शृङ्गं सुमेरोर्वितथीकृतम्॥७२॥
काठिन्यं स्थावरे काये भवता सर्व्वमर्पितम्।
इदन्तु ते भक्तिनम्रं सतामाराधनं वपुः॥ ७३ ॥
तदागमनकार्य्यं नः शृणु कार्य्यं तवैव तत्।
श्रेयसामुपदेशात्तु वयमत्रांशभागिनः॥ ७४ ॥

यज्ञेति। (यज्ञभागभुजाम्) इन्द्रादीनां (मध्ये पदम् आतस्थुषा) निहितवता (त्वया उच्चैः) उन्नतं हिरण्यस्य विकारः (हिरण्मयम्)। दाण्डिनायनहास्तिनायनेत्यादिना निपातनात्साधुः (१)। सुमेरोः शृङ्गं) शिखरं प्राधान्यञ्च ध्वन्यते। शृङ्गं प्राधान्यसान्वोश्चेत्यमरः! (वितथीकृतं) व्यर्थीकृतं तस्य यज्ञभागाभावादिति भावः। अस्य तु तत्सद्भावे प्रमाणं हिमवतो हस्तीति श्रुतिः॥ ७२ ॥

काठिन्यमिति। (भवता सर्व्वं काठिन्यम्) अनम्रत्वमित्यर्थः। (स्थावरे) स्थिरे (काये) शिलामय इत्यर्थः। (अर्पितं) न्यस्तम्। (सताम्) अर्हताम् (आराधनं) पूजासाधनं (ते इदं वपुस्तु) जङ्गममित्यर्थः भक्तिनम्रं काठिन्यलेशोऽप्यत्र नास्ति अन्यथा नम्रत्वासम्भवादित्यर्थः। तथाचासाधारण्यं ध्वन्यते॥ ७३ ॥

तदिति। (तत्) तस्मात् (नः) अस्माकम् आगमनस्य कार्य्यं (आगमनकार्य्यं) प्रयोजनं (शृणु) तत्कार्य्यञ्च तवैव न त्वस्माकमित्यवधारणार्थं एवकारः। (वयन्तु श्रेयसाम् उपदेशादत्र) कार्य्ये (अंशभागिनः)। त्वमेवात्र फलभाक् वयमुपदेष्टार इति भावः॥७४॥

(१) पा० ६।४।१७४ सू०।

अणिमादिगुणोपेतमस्पृष्टपुरुषान्तरम्।
शब्दमीश्वर इत्युच्चैः सार्द्धचन्द्रं बिभर्त्ति यः ॥७५॥
कल्पितान्योन्यसामर्थ्यैः पृथिव्यादिभिरात्मभिः।
येनेदं ध्रियते विश्वं धुर्य्यैर्यानमिवाध्वनि ॥७६॥
योगिनो यं विचिन्वन्ति क्षेत्राभ्यन्तरवर्त्तिनम्।
अनावृत्तिभयं यस्य पदमाहुर्मनीषिणः ॥७७॥

कार्य्यमेवाह अणिमेत्यादिना

अणिमेति। (यः) शम्भुः (अणिमादिगुणोपेतम्) अणिमादिभिः अष्टभिर्गुणैः वाच्यभूतैरुपेतम् अष्टैश्वर्य्यवाचकमित्यर्थः। अतएव अस्पृष्टं पुरुषान्तरं येन तं तथोक्तं (अस्पृष्टपुरुषान्तरं) पुरुषान्तरस्यानभिधायकं तस्यैव एवंगुणत्वादित्यर्थः। (उच्चैः) सर्व्वोन्नतम् (ईश्वर इति शब्दं) निरुपपदेश्वरशब्दमित्यर्थः। (सार्द्धचन्द्रम्) अर्द्धचन्द्रयुक्तं अर्द्धचन्द्रेणेत्यर्थः (बिभर्त्ति) ॥ ७५ ॥

कल्पितेति। (येन) शम्भुना कल्पितं धृतिसंग्रहादिस्वस्वगुणसम्पादितम् अन्योन्यसामर्थ्यं परस्परसहकाररूपं यैः तथोक्तैः (कल्पितान्योन्यसामर्थ्यैः)। स्वस्वरूपसामर्थ्यम् अन्योन्याधेयमेवेति भावः। (पृथिव्यादिभिरात्मभिः) अष्टाभिर्मूर्त्तिभिरित्यर्थः। (इदं) व्यक्तं (विश्वं) धुरं वहन्तीति (धुर्य्यैः)। धुरो यड्ढकाविति यत्प्रत्ययः (१)। (अध्वनि यानं) रथ इव (ध्रियते) ॥ ७६ ॥

योगिन इति। (योगिनः) अध्यात्मवेदिनः (क्षेत्राभ्यन्तरवर्त्तिनं) शरीरान्तस्थरं सर्व्वभूतान्तर्यामिनं परमात्मस्वरूपिणमित्यर्थः। क्षेत्रं पत्नीशरीरयोरित्यमरः। (यं) शम्भुं (विचिन्वन्ति)

---

(१) पा० ४। ४। ७७ सू०।

स ते दुहितरं साक्षात्साक्षी विश्वस्य कर्म्मणाम्।
वृणुते वरदः शम्भुरस्मत्संक्रामितैः पदैः॥७८॥
तमर्थमिव भारत्या सुतया योक्तुमर्हसि।
अशोच्या हि पितुः कन्या सद्भर्त्तृप्रतिपादिता।७९॥
यावन्त्येतानि भूतानि स्थावराणि चराणि च।
मातरं कल्पयन्त्वेनामीशो हि जगतः पिता॥८०॥

म्हगयन्ते। (मनीषिणः) विद्वांसः (यस्य) शम्भोः (पदं) स्थानम् अविद्यमानम् आवृत्तेः पुनः संसारापत्तेः भयं यत्र तत् तथाभूतं (अनावृत्तिभयं आहुः)॥ ७७॥

स इति। (विश्वस्य) जगतः (कर्म्मणां साक्षी) द्रष्टा। साक्षाद्-द्रष्टरि संज्ञायामिति इनि प्रत्ययः (१)। वरान् इष्टान् ददातीति (वरदः)। आतोऽनुपसर्गे कः इति कप्रत्ययः (२)। (स) पूर्व्वोक्तः शम्भुः (अस्मत्संक्रामितैः पदैः) अस्मासु निवेशितैर्वाक्यैः (ते दुहितरं साक्षात् वृणुते) अस्मन्मुखेन स्वयमेव याचत इत्यर्थः॥ ७८॥

तमिति। (तं) शम्भुं (भारत्या) वाचा (अर्थम्) अभिधेयं (इव सुतया) दुहित्रा (योक्तुं) सङ्घटयितुम् (अर्हसि)। अत्र वागर्थयोः उपमानत्वसामर्थ्याच्छिवयोर्नित्ययोगो विवक्षित इति उक्तम् वागर्थाविव सम्पृक्ताविचत्रापि। तथाहि सद्भर्त्ते प्रतिपादिता दत्ता (सद्भर्त्तृप्रतिपादिता कन्या पितुः अशोच्या)॥ ७९॥

गुणान्तरमप्याह

यावन्तीति। (स्थावराणि चराणि च यावन्त्येतानि भूतानि) सन्तीति शेषः। सर्व्वाणि भूतानीत्यर्थः। (एनां) ते दुहितरं

(१) पा० ५। २। ९१ सू०। (२) पा० ३। २। ३ सू०।

प्रणम्य शितिकण्ठाय विबुधास्तदनन्तरम्।
चरणौ रञ्जयन्त्वस्याश्चूड़ामणिमरीचिभिः॥८१॥
उमा वधूर्भवान् दाता याचितार इमे वयम्।
वरः शम्भुरलं ह्येषस्त्वत्कुलोद्भूतये विधिः॥८२॥
अस्तोतुः स्तूयमानस्य वन्द्यस्यानन्यवन्दिनः।
सुतासम्बन्धविधिना भव विश्वगुरोर्गुरुः॥८३॥

(मातरं कल्पयन्तु)। (हि) यस्मात् (ईशः जगतः पिता)। पितृदारेषु मातृभावो न्याय्य इति भावः ८० ॥

प्रणम्येति। (विबुधाः) देवाः (शितिकण्ठाय) शिवाय (प्रणम्य तदनन्तरं) नीलकण्ठप्रणामानन्तरम् (अस्याः चरणौ चूड़ामणिमरीचिभिः रञ्जयन्तु) ईश्वरपरिग्रहादखिलदेवतावन्द्या भवत्वित्यर्थः॥ ८१॥

उमेति। (उमा वधूः भवान् दाता इमे वयं याचितारः) प्रार्थकाः (शम्भुः वरः) वोढ़ा (एष विधिः) एषा सामग्री त्वत्कुलस्य उद्भूतये उत्क्षयाय (त्वत्कुलोद्भूतये अलं) पर्य्याप्तं हि नमःस्वस्तिस्वाहास्वधेत्यादिना चतुर्थी (१)॥ ८२॥

अस्तोतुरिति। स्वयमन्यस्तोता न भवति (अस्तोतुः) किन्तु (स्तूयमानस्य) सर्व्वैस्तुत्यस्य (वन्द्यस्य) जगद्वन्द्यस्य स्वयमन्यं न वन्दत इति (अनन्यवन्दिनः विश्वगुरोः) देवस्य (सुतासम्बन्धविधिना) यौनसम्बन्धाचरणेन (गुरुर्भव)। यो नान्यं स्तौति न वन्दते तस्यापि त्वं स्तुत्यो वन्द्यश्चेत्यहो तव भाग्यवत्ता इत्यर्थः॥ ८३॥

---

(१) पा० २।३।१६ सू०।

एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्त्राणि गणयामास पार्वती ॥८४॥
शैलः सम्पूर्णकामोऽपि मेनामुखमुदैक्षत ।
प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः ॥८५॥
मेने मेनापि तत्सर्वं पत्युः कार्य्यमभीप्सितम् ।
भवन्त्यव्यभिचारिण्यो भर्त्तुरिष्टे पतिव्रताः ॥८६॥
इदमत्रोत्तरं न्याय्यमिति बुद्ध्या विमृष्य सः ।

एवमिति । (देवर्षौ) अङ्गिरसि (एवं वादिनि) सति (पार्व्वती पितुः पार्श्वे अधोमुखी) सती लज्जयेति शेषः । (लीलाकमलपत्त्राणि गणयामास) सङ्ख्यौ । लज्जावशात्कमलदलगणनाव्याजेन हर्षं जुगोपेत्यर्थः । अनेन अवहित्थाख्यः सञ्चारीभाव उक्तः । तदुक्तम् । अवहित्था तु लज्जादेर्हर्षाद्याकारगोपनमिति ॥ ८४ ॥

शैल इति । (शैलः) हिमवान् (सम्पूर्णकामोऽपि) दातुं कृतनिश्चयोऽपीत्यर्थः । (मेनामुखम् उदैक्षत) उचितोत्तरजिज्ञासयेति भावः । तथाहि (प्रायेण कुटुम्बिनः) गृहस्थाः (कन्यार्थेषु) कन्याप्रयोजनेषु गृहिण्येव नेत्रं कार्य्यज्ञानकारणं येषान्ते तथोक्ताः (गृहिणीनेत्राः) कलत्रप्रधानवृत्तय इत्यर्थः ॥ ८५ ॥

मेने इति । (मेनापि) (पत्युः) हिमालयस्य (तत्सर्व्वम् अभीप्सितं कार्य्यं मेने) अङ्गीचकार । तथाहि पतिरेव व्रतं यासां ताः (पतिव्रताः भर्त्तुः इष्टे) अभीप्सिते न विद्यते व्यभिचारो यासां ताः (अव्यभिचारिण्यो भवन्ति) भर्तृचित्ताभिप्रायज्ञा भवन्तीति भावः ॥८६॥

आददे वचसामन्ते मङ्गलालङ्कृतां सुताम् ॥८७॥
एहि विश्वात्मने वत्से ! भिक्षासि परिकल्पिता।
अर्थिनो मुनयः प्राप्तं गृहमेधिफलं मया ॥८८॥
एतावदुक्त्वा तनयामृषीनाह महीधरः।
इयं नमति वः सर्व्वान् त्रिलोचनबधूरिति ॥८९॥
ईप्सितार्थक्रियोदारं तेऽभिनन्द्य गिरेर्वचः।

इदमिति। (सः) हिमवान् (वचसामन्ते) मुनिवाक्यावसाने (अत्र) मुनिवाक्ये (इदम्) उत्तरश्लोके वक्ष्यमाणं दानमेव (न्याय्यं) न्यायादनपेतम् (उत्तरमिति बुद्ध्या) चित्तेन (विमृश्य) विचिन्त्य मङ्गलं यथा तथा अलङ्कृतां मङ्गलालङ्कृतां सुताम् आददे) हस्ताभ्यां जग्राह ॥ ८७ ॥

एहीति। हे (वत्से) ! पुत्रि ! (एहि) आगच्छ त्वं (विश्वात्मने) शिवाय (भिक्षा परिकल्पितासि) निश्चितासि। रत्नादिस्तम्बपर्य्यन्तं सर्व्वं भिक्षा तपस्विन इति वचनादिति भावः। (अर्थिनः) याचितारः (मुनयः)। (मया) गृहमेधिनो गृहस्थस्य फलं (गृहमेधिफलं) (प्राप्तम्)। इह परत्र च तारकत्वात् पात्रे कन्यादानं गार्हस्थस्य फलमित्यर्थः ॥८८॥

एतावदिति। (महीधरः) हिमवान् (तनयाम् एतावत्) पूर्व्वोक्तम् उक्त्वा ऋषीनाह) किमिति (इयं त्रिलोचनबधूः) त्र्यम्बकपत्नी (वः सर्व्वान् नमतीति) त्रिलोचनबधूरिति सिद्धवदभिधानेन अविप्रतिपन्नं दानमिति सूचयति ॥ ८९ ॥

ईप्सितेति। (ते) मुनयः ईप्सितार्थक्रियया इष्टार्थकरणेन उदारं महत्। (ईप्सितार्थक्रियोदारं) उदारो दातृमहतोरित्यमरः। (गिरेः) हिमवतः (वचः) वचनम् (अभिनन्द्य) साध्विति

आशीर्भिरेधयामासुः पुरःपाकाभिरम्बिकाम्॥९०
तां प्रणामादरस्रस्तजाम्बूनदवतंसकाम्।
अङ्कमारोपयामास लज्जमानामरुन्धती॥९१॥
तन्मातरञ्चाश्रुमुखीं दुहितृस्नेहविक्लवाम्।
वरस्यानन्यपूर्व्वस्य विशोकामकरोद्गुणैः॥९२॥
वैवाहिकीं तिथिं पृष्टास्तत्क्षणं हरबन्धुना।
ते त्र्यहादूर्द्ध्वमाख्याय चेरुश्चीरपरिग्रहाः॥९३॥

संस्तुत्य (अम्बिकां) अम्बां पच्यत इति पाकः फलं (पुरःपाकाभिः) पुरस्कृतफलाभिः (अशीर्भिः) आशीर्वादैः (एधयामासुः) संवर्द्धयामासुः॥ ९०॥

तामिति। प्रणामादरेण नमस्कारासक्त्या स्रस्ते जाम्बूनदे सुवर्णविकारेऽवतंसके कनककुण्डले यस्यास्तां (प्रणामादरस्रस्तजाम्बूनदवतंसकां) (लज्जमानां) (ताम्) अम्बिकाम् (अरुन्धती अङ्कम् आरोपयामास)। रुहः पोऽन्यतरस्यामिति पकारः(१)॥९१॥

तदिति। दुहितृस्नेहेन पुत्रिकाप्रेम्णा विक्लवां (दुहितृस्नेहविक्लवां) वियोक्ष्यत इति भीताम् अतएव अश्रूणि मुखे यस्यास्ताम् (अश्रुमुखीं) तस्याः अम्बिकायाः मातरं (तन्मातरं) मेनाञ्च अन्या पूर्व्वं यस्यास्ति सोऽन्यपूर्व्वः। सर्व्वनाम्नो वृत्तिविषये पुंवद्भावइति पूर्व्वपदस्य पुंवद्भावः स न भवतीत्यनन्यपूर्व्वः तस्य (अनन्यपूर्व्वस्य) सापत्न्यदुःखमकुर्व्वत इत्यर्थः। (वरस्य) वोढुः (गुणैः) मृत्युञ्जयत्वादिभिः (विशोकां) निर्दुःखां (अकरोत्)॥ ९२॥

वैवाहिकीमिति। (चीरपरिग्रहाः) वल्कलमात्रवसनाः (ते)

(१) पा० ७। ३। ४३ सू०।

ते हिमालयमामन्त्र्य पुनः प्राप्य च शूलिनम्।
सिद्धिञ्चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः॥९४॥
पशुपतिरपि तान्यहानि कृच्छ्रा-
दगमयदद्रिसुतासमागमोत्कः।

तपस्विनः (तत्क्षणं) तस्मिन्नेव क्षणे (हरबन्धुना) हिमवता (वैवाहिकीं) विवाहयोग्यां (तिथिं पृष्टाः) केत्यनुयुक्ताः सन्तः त्र्याणामह्नां समाहारस्त्र्यहः तद्धितार्थोत्तरपदसमाहारे चेति समासः (१)। राजाहःसखिभ्यष्टजिति टच्प्रत्ययः(२) द्विगुत्वादेकवचनम्। रात्राह्नाहाः पुंसीति(३) पुंलिङ्गता। तस्मात् त्र्यहादूर्द्धम्) उपरि (आख्याय) चतुर्थेऽहनि विवाह इत्युक्त्वा (चेरुः) चलिताः॥ ९३॥

त इति। (ते) मुनयः (हिमालयम् आमन्त्र्य) साधु याम इत्यापृच्छ्य (पुनः शूलिनं) हरं सङ्केतस्थानस्थं (प्राप्य सिद्धं) निष्पन्नं (अर्थं) प्रयोजनं (तस्मै निवेद्य) ज्ञापयित्वा च (तद्विसृष्टाः) तेन शूलिना विसृष्टाः (खं) आकाशं प्रति (उद्ययुः उत्पेतुः। अत्र सङ्क्षिप्तार्थाभिधानात् सङ्क्षेपोनाम गुण उक्त तदुक्तं सङ्क्षिप्तार्थाभिधानं यत् सङ्क्षेपः परिकीर्त्तित इति॥ ९४॥

भगवान् पशुपतिः त्र्यहमात्रविलम्बमपि सोढुं न शशाक तदौत्सुक्यादित्याह

पशुपतिरिति। उत्कं मनो यस्य सः उत्कः। उत्क उन्मना इति निपातः(४)। (अद्रिसुतासमागमोत्कः) पार्व्वतीपरिणयो-

(१) पा० २। १। ५१ सू०। (२) पा० ५। ४। ९१ सू०।
(३) पा० २। ४। २९ सू०। (४) पा० ५। २। ८० सू०।

क्रमपरमवशं न विप्रकुर्यु-
र्विभुमपि यदमी स्पृशन्ति भावाः ॥ ९५ ॥
इति श्रीकालिदासकृतौ कुमारसम्भवे
महाकाव्ये उमाप्रदानो नाम
षष्ठः सर्गः।

त्सुकः (पशुपतिरपि तानि) त्रिणीति शेषः (अहानि कृच्छ्रादग-मयत्) अयापयत्। कविराह (अमी भावाः) औत्सुक्यादयः सञ्चारिणः (अवशम्) इन्द्रियपरतन्त्रम् (अपरं) पृथग्जनं (कं न विप्रकुर्युः) न विकारं नयेयुः (यत्) यस्मात् (विभुं) समर्थं जिते-न्द्रियमिति यावत् (तं) स्मरहरमपि (स्पृशन्ति) विकुर्व्वन्तीत्यर्थः। अत्र विभुविकारसमर्थनादर्थादितरजनविकारः कैमुतिकन्यायादापततीत्यर्थापत्तिरलङ्कारः। तथा च सूत्रं दण्डापूपिकयार्थान्तरपतन-मर्थापत्तिरिति। अर्थान्तरन्यास इति केचित् तदुपेक्षणीयं युक्तिस्तु विस्तरभयान्नोच्यते। पुष्पिताग्रावृत्तम्। अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रेति लक्षणात् ॥ ९५ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां
षष्ठः सर्गः।

---

## सप्तमः सर्गः ।

अथौषधीनामधिपस्य वृद्धौ
तिथौ च जामित्रगुणान्वितायाम् ।
समेतबन्धुर्हिमवान् सुतायाः
विवाहदीक्षाविधिमन्वतिष्ठत् ॥ १ ॥
वैवाहिकैः कौतुकसंविधानै-
र्गृहे गृहे व्यग्रपुरन्ध्रिवर्गम् ।

अथेति । (अथ) चरचानन्तरं (हिमवान् ओषधीनामधिपस्य) चन्द्रस्य (वृद्धौ) शुक्लपक्ष इत्यर्थः । शुभकर्म्मणापूर्य्यमाणपक्षप्राशस्त्यात् । (तिथौ च) जामित्रं लग्नात्सप्तमं स्थानं तस्य गुणः शुद्धिः सा च ग्रहराहित्यं तेन अन्वितायां (जामित्रगुणान्वितायां) सत्याम् । यद्यपि जामित्रशुद्धिर्लग्नधर्म्मः तथापि तद्द्वारा तिथेरपि तथा व्यपदेशे न दोषः । (समेतबन्धुः) युक्तबन्धुः सन् (सुतायाः) दुहितुः विवाहदीक्षा विवाहसंस्कारः सैव विधिः कर्म्म तम् (विवाहदीक्षाविधिं अन्वतिष्ठत्) कृतवान् ॥ १ ॥

वैवाहिकैरिति । (अनुरागात्) प्रीतिवशात् (गृहे गृहे) प्रतिगृहम् । वीप्सायां द्विर्भावः (१) । विवाहः प्रयोजनमेषामिति वैवाहिकानि तैः (वैवाहिकैः । तदस्य प्रयोजनमिति ठक् । (कौतुकसंविधानैः) मङ्गलार्थसम्पादनैः व्यग्रो व्याकुलः पुरन्ध्रिवर्गः

---

(१) पा० ८ । १ । ४ सू० ।

आसीत् पुरं सानुमतोऽनुरागा-
दन्तःपुरञ्चैककुलोपमेयम् ॥ २ ॥
सन्तानकाकीर्णमहापथं त-
च्चीनांशुकैः कल्पितकेतुमालम् ।
भासोज्ज्वलत्काञ्चनतोरणानां
स्थानान्तरं स्वर्ग इवाबभासे ॥ ३ ॥
एकैव सत्यामपि पुत्रपङ्क्तौ
चिरस्य दृष्टेव मृतोत्थितेव ।

कुटुम्बिनीसङ्घो यस्मिन् तत् तथोक्तं (यद्यपुरन्ध्रिवर्गं सानुमतः) अद्रेः (पुरं) वाह्यमोषधिप्रस्थितम् (अन्तः पुरम्) अवरोधनञ्च एककुलेन एकगृहेण एकगोत्रेण वा उपमेयं (ऐककुलोपमेयं) (आसीत्)। सजातीयगणे गोत्रे गृहेऽपि कथितं कुलमिति विश्वः। सर्व्वेषामपि स्वगृह एव इदं शोभनं वर्त्तत इत्यभिमानोऽभूदित्यर्थः। एतेन हिमाद्रेः प्रजारागः उक्तः। अत्र सर्वं सम्पन्नमेवेत्यर्थः ॥२॥

सन्तानेति। सन्तानकैर्मन्दारकुसुमैराकीर्णाः आस्तृताः महापथाः राजकीयपथाः यस्मिन् तत् तथोक्तं (सन्तानकाकीर्णमहापथं) (चीनांशुकैः) पट्टवस्त्रैः कल्पिताः विरचिताः केतुमालाः ध्वजपङ्क्तयो यस्य तत् तथोक्तं (कल्पितकेतुमालं काञ्चनतोरणानां भासा) प्रभया (उज्ज्वलत्) दीप्यमानं (तत्) पुरं (स्थानान्तरं) मेरोरन्यत्र स्थितः (स्वर्ग इव आबभासे)। उत्प्रेक्षालङ्कारः ॥३॥

एकेति। पुत्राश्च दुहितरश्च पुत्राः। भ्रातृपुत्रौ स्वसृदुहितृभ्याम् इत्येकशेषः(१)। पुत्रौ पुत्रश्च दुहिता चेत्यमरः। तेषां

(१) पा० १।२।६८ सू०।

आसन्नपाणिग्रहणेति पित्रो-
रुमा विशेषोच्छ्वसितं बभूव ॥ ४ ॥
अङ्काद्ययावङ्कमुदीरिताशीः
सा मण्डनान्मण्डनमन्वभुङ्क्त ।
सम्बन्धिभिन्नोऽपि गिरेः कुलस्य
स्नेहस्तदेकायतनं जगाम ॥ ५ ॥

पङ्क्तौ सत्त्वे (पुत्रपङ्क्तौ सत्यामपि उमा एकैव चिरस्य दृष्टेव) चिरान्नष्टलब्धेव ( मृतोत्थितेव ) मृत्वा पुनरुत्पन्नेव (आसन्नपाणिग्रहणा) आसन्नविवाहा (इति) भर्तृगृहं गमिष्यतीति हेतोरित्यर्थः । (पित्रोः) मातापित्रोः । पिता मात्रा इत्येकशेषः (१) । विशेषेणोच्छ्वसितं (विशेषोच्छ्वसितं) प्राणभूता (बभूव) पुमपत्यादपि अधिकप्रेमास्पदमभूदित्यर्थः ॥ ४ ॥

अङ्कादिति । (सा) पार्वती (उदीरिताशीः) प्रत्युक्ताशीर्वादा सती (अङ्कादङ्कं) उत्सङ्गं (यथौ मण्डनात् मण्डनान्तरम् अन्यत् मण्डनम् । अन्वभुङ्क्त तदा) सर्वे बन्धवः प्रत्येकमेव तामङ्कमारोप्य मण्डनं प्रायच्छन्नित्यर्थः । तच्च स्नेहनिबन्धनमेवेत्याह (सम्बन्धिभिन्नः) स्वगुणादिभिः भिन्नो विभक्तोऽपि (गिरेः कुलस्य) वंशस्य (स्नेहस्तदेकायतनं) सैवैकमायतनं स्थानं तत् (जगाम) । तदिति छेदेऽप्ययमेवार्थः विधेयप्राधान्यान्नपुंसकत्वमिति । सर्वे बन्धवः स्वापत्येभ्योऽपि तस्यामधिकं स्निह्यन्तीति तात्पर्य्यार्थः ॥ ५ ॥

---

(१) पा० १ । २ । ७० सू० ।

मैत्रे मुहूर्त्ते शशलाञ्छनेन
योगं गतासूत्तरफल्गुनीषु।
तस्याः शरीरे प्रतिकर्म्म चक्रु-
र्बन्धुस्त्रियो याः पतिपुत्त्रवत्यः॥ ६ ॥
सा गौरसिद्धार्थनिवेशवद्भि-
र्दूर्वाप्रवालैः प्रतिभिन्नशोभम्।
निर्नाभि कौशेयमुपात्तवाण-
मभ्यङ्गनेपथ्यमलञ्चकार॥ ७ ॥

मैत्र इति। अथ (मैत्रे) मित्रदैवत्ये (मुहूर्त्ते) उदयमुहूर्त्तात् तृतीयमुहूर्त्ते इत्यर्थः। आर्द्रः सार्पस्तथा मैत्रः शुभो वासव एव चेति बृहस्पतिस्मरणात्। (उत्तरफल्गुनीषु) फल्गुनीनक्षत्रे। फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे इत्येकस्मिन्नपि बहुवचनम् (१)। (शशलाञ्छनेन) चन्द्रेण (योगं गतासु) सतीषु (तस्याः) पार्व्वत्याः (शरीरे बन्धुस्त्रियः प्रतिकर्म्म) प्रसाधनम्। प्रतिकर्म्म प्रसाधनमित्यमरः। (चक्रुः) कीदृश्यः (याः पतिपुत्त्रवत्यः) जीवद्भर्तृकाः जीवदपत्याश्चेत्यर्थः॥ ६ ॥

प्रतिकर्म्मप्रकारमेव प्रपञ्चयति।

सेति। (सा) गौरी (गौरसिद्धार्थनिवेशवद्भिः) श्वेतसर्षपप्रक्षेपवद्भिः दूर्व्वाप्रवालैः) दूर्व्वाङ्कुरैः (प्रतिभिन्नशोभं) विशेषितशोभं (निर्नाभि) अतिक्रान्तनाभि कौशेयं वस्त्रविशेषो यस्मिन् तत् तथोक्तं (कौशेयं) कौशेयं क्रिमिकोशोत्थमित्यमरः। (उपात्तवाणं) गृहीतशरम्। शरः क्षत्रियया ग्राह्य इति (३अ०४४श्लो०) मनु-

(१) पा० १।२।६० सू०

बभौ च सम्पर्कमुपेत्य बाला
नवेन दीक्षाविधिसायकेन।
करेण भानोर्बहुलावसाने
सन्धुक्ष्यमाणेव शशाङ्करेखा ॥ ८ ॥

तां लोध्रकल्केन हृताङ्गतैला-
माश्यानकालेयकृताङ्गरागाम्।
वासो वसानामभिषेकयोग्यं
नार्यश्चतुष्काभिमुखं व्यनैषुः ॥ ९ ॥

स्मरणात्। (अभ्यङ्गनेपथ्यम्) अभ्यङ्गवेषम् (अलञ्चकार)। अलङ्कारमप्यलञ्चकारेत्यर्थः ॥ ७ ॥

बभाविति। किञ्चेति चार्थः। (बाला नवेन) दीक्षाविधौ विवाहकृत्ये यः सायकः तेन (दीक्षाविधिसायकेन सम्पर्कमुपेत्य बहुलावसाने( कृष्णपक्षात्यये शुक्लपक्षादावित्यर्थः। (भानोः करेण) किरणेन ( सन्धुक्ष्यमाणा ) उपचीयमाना। सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् क्षपयन्तीत्यादिवचनात्। (शशाङ्करेखेव बभौ) ॥ ८ ॥

तामिति। ( लोध्रकल्केन ) लोध्रचूर्णेन हृतमङ्गतैलं यस्यास्तां ( हृताङ्गतैलां ) कृतोद्वर्तनामित्यर्थः। आश्यानमीषच्छुष्कं तेन कालेयेन गन्धद्रव्येण कृताङ्गरागां ( आश्यानकालेयकृताङ्गरागां ) कृतस्नेग्धरागामित्यर्थः। अथ जायकं कालेयकञ्च कालानुसार्य्यञ्चेत्यमरः। (अभिषेकयोग्यं वासः) वस्त्रं ( वसानां ) स्नानशाटीमाच्छादयन्तीं (तां) पार्व्वतीं (नार्य्यः) चतुष्कं चतुस्तम्भगृहं तदभिमुखं (चतुष्काभिमुखं व्यनैषुः)। स्नानगृहं निन्युरित्यर्थः ॥ ९ ॥

विन्यस्तवैदूर्यशिलातलेऽस्मि-
न्नाबद्धमुक्ताफलभक्तिचित्रे।
आवर्ज्जिताष्टापदकुम्भतोयैः
सतूर्यमेनां स्नपयाम्बभूवुः ॥ १० ॥

सा मङ्गलस्नानविशुद्धगात्री
गृहीतपत्युद्गमनीयवस्त्रा।
निर्वृत्तपर्ज्जन्यजलाभिषेका
प्रफुल्लकाशा वसुधेव रेजे ॥ ११ ॥

विन्यस्तेति। विन्यस्तं वैदूर्य्यशिलातलं मरकतशिलाप्रदेशो यस्मिन् तस्मिन् (विन्यस्तवैदूर्यशिलातले) आबद्धानां मुक्ताफलानां भक्तिभिः रचनाभिः चित्रे (आबद्धमुक्ताफलभक्तिचित्रे अस्मिन्) चतुष्के (एनां) पार्व्वतीम् आवर्ज्जितानाम् आनमितानाम् अष्टापदकुम्भानां कनककलसानां तोयैः (आवर्ज्जिताष्टापदकुम्भतोयैः सतूर्यं) मङ्गलवाद्ययुक्तं यथा तथा (स्नपयाम्बभूवुः)। अष्टसु लोहेषु पदं प्रतिष्ठा यस्येति अष्टापदम्। अष्टनः संज्ञायामिति दीर्घः (१)। अष्टापदं स्यात् कनकमिति विश्वः ॥ १० ॥

सेति। मङ्गलार्थस्नानेन विशुद्धगात्री निर्म्मलाङ्गी (मङ्गलस्नानविशुद्धगात्री) पत्युर्वरस्य उद्गमनीयवस्त्रं धौतवस्त्रम्। धौतमुद्गमनीयं स्यादिति हलायुधः। तत् स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगमित्यमरः। युगग्रहणन्तु प्रायिकाभिप्रायम्। अतएवात्र क्षीरस्वामी युगं प्रायशः, यल्लभ्यं तदेव इति व्याख्याय गृहीतपत्युद्गमनीयवस्त्रेत्येतदेव उदाहृतवान्। गृहीतं पतिं प्रति

(१) पा० ६।३।१२५ सू०।

तस्मात् प्रदेशाच्च वितानवन्तं
युक्तं मणिस्तम्भचतुष्टयेन ।
पतिव्रताभिः परिगृह्य निन्ये
कॢप्तासनं कौतुकवेदिमध्यम् ॥ १२ ॥
तां प्राङ्मुखीं तत्र निवेश्य तन्वीं
क्षणं व्यलम्बन्त पुरो निषण्णाः ।
भूतार्थशोभाह्रियमाणनेत्राः
प्रसाधने सन्निहितेऽपि नार्य्यः ॥ १३ ॥

उद्गमनीयवस्त्रं यया सा (गृहीतपत्युरुद्गमनीयवस्त्रा) धौतवस्त्रं आच्छादितवतीत्यर्थः। (सा) पार्व्वती निर्वृत्तो निष्पन्नः पर्ज्जन्यस्य जलेनाभिषेको यस्याः सा तथोक्ता (निर्वृत्तपर्जन्यजलाभिषेका)। प्रफुल्लतीति प्रफुल्लं काशं काशपुष्पं यस्याः सा तथोक्ता (प्रफुल्लकाशा वसुधेव रेजे) शुशुभे ॥ ११ ॥

तस्मादिति । किञ्चेति चार्थः (तस्मात् प्रदेशात्) स्नानप्रदेशात् (वितानवन्तम्) उल्लोचयुक्तम् । अस्त्री वितानमुल्लोच इत्यमरः । (मणिस्तम्भचतुष्टयेन युक्तं) कॢप्तं सज्जमानमासनं यस्मिन् तं (कॢप्तासनं कौतुकवेदिमध्यं पतिव्रताभिः परिगृह्य) दोर्भिः आलिङ्ग्य (निन्ये) नीता प्रसाधनार्थमित्यर्थः ॥ १२ ॥

तामिति । (नार्य्यः) प्रसाधिकाः (तां तन्वीं) पार्व्वतीं (तत्र) वेदिमध्ये (प्राङ्मुखीं निवेश्य) उपवेश्य (पुरो निषण्णाः) अग्रे स्थिताः प्रसाध्यते अनेनेति (प्रसाधने) अलङ्कारसाधनवर्गे (सन्निहितेऽपि) भूतार्था सत्यरूपा स्वाभाविकीति यावत् या शोभा रामणीयकं तया ह्रियमाणानि आकृष्यमाणानि नेत्राणि यासां ताः तथोक्ताः

धूपोष्मणा त्याजितमार्द्रभावं
केशान्तमन्तःकुसुमं तदीयम्।
पर्य्याक्षिपत् काचिदुदारबन्धं
दूर्वावता पाण्डुमधूकदाम्ना ॥ १४ ॥
विन्यस्तशुक्लागुरु चक्रुरङ्गं
गोरोचनापत्रविभक्तमस्याः।
सा चक्रवाकाङ्कितसैकताया-
स्त्रिस्रोतसः कान्तिमतीत्य तस्थौ ॥१५॥

(भूतार्थशोभाह्रियमाणनेत्राः क्षणं व्यलम्बन्त)। स्वभावसुन्दर्य्याः किमस्याः प्रसाधनेनेति तूष्णीं तस्थुरित्यर्थः ॥ १३ ॥

धूपेति। (काचित्) प्रसाधिका (धूपोष्मणा) करणेन (आर्द्र-भावं) आर्द्रत्वं (त्याजितम्)। पचादिषु पाठाद्द्विकर्म्मत्वम्। त्यजतेर्ण्यन्तादप्रधाने कर्म्मणि क्तः। (अन्तःकुसुमं) अन्तर्निक्षिप्तकुसुमम् तस्या इमं (तदीयं केशान्तं) केशपाशं (दूर्वावता) मध्ये मध्ये ग्रथितदूर्व्वेण (पाण्डुमधूकदाम्ना) हरिणमधुद्रुमकुसुममाल्येन। मधूके तु गुड़पुष्पमधुद्रुमावित्यमरः। (उदारबन्धं) रम्यबन्धं यथा तथा (पर्य्याक्षिपत्) बबन्ध: ॥ १४ ॥

विन्यस्तेति। (अस्याः) गौर्य्याः (अङ्गं) गात्रं विन्यस्तं विरचितं शुक्लागुरु यस्मिन् तत् (विन्यस्तशुक्लागुरु) गोरोचनायाः पत्रैः पत्ररचनाभिः विभक्तं (गोरचनापत्रविभक्तम्) विशेषितञ्च चक्रुः। (सा) तथाभूता गौरी चक्रवाकैरङ्कितं सैकतं यस्यास्तस्याः (चक्रवाकाङ्कितसैकतायाः त्रिस्रोतसः) गङ्गायाः (कान्तिं) शोभां (अतीत्य) अतिक्रम्य (तस्थौ)। अत्र गोरोचनाचक्रवाकयोः पीतत्वेन साम्यं त्रिस्रोतसो धावल्यन्तु प्रसिद्धत्वात् न स्वपदेनोपात्तम्॥१५॥

लग्नद्विरेफं परिभूय पद्मं
समेघरेखं शशिनश्च बिम्बम् ।
तदाननश्रीरलकैः प्रसिद्धै-
श्चिच्छेद सादृश्यकथाप्रसङ्गम् ॥ १६ ॥

कर्णार्पितो लोध्रकषायरूक्षे
गोरोचनाक्षेपनितान्तगौरे ।
तस्याः कपोले परभागलाभा-
द्बबन्ध चक्षूंषि यवप्ररोहः ॥ १७ ॥

लग्नेति । (प्रसिद्धैः) भूषितैः । प्रसिद्धौ ख्यातभूषिताविल्यमरः । (अलकैः) उपलक्षिता तस्याः गौर्य्याः आननश्रीः (तदाननश्रीः लग्नद्विरेफं पद्मं समेघरेखं) मेघरेखायुक्तं (शशिनो बिम्बञ्च परिभूय तिरस्कृत्य सादृश्यमुपमा तस्य कथा उक्तिः तस्याः प्रसङ्गं प्रसक्तिं (सादृश्यकथाप्रसङ्गं) सादृश्यं वाङ्मात्रप्रसक्तमपि (चिच्छेद) अभिनत् । प्रसक्तयोः पद्मचन्द्रयोः परिभूतत्वादन्यत्र चाप्रसङ्गादित्यर्थः । अत्र पूर्व्वार्द्धवाक्यार्थस्य सादृश्यकथाच्छेदं प्रति हेतुत्वेनोपन्यासात्काव्यलिङ्गमलङ्कारः लक्षणन्तूक्तम् (१स० ४८श्लो०टी०) ॥ १६ ॥

कर्णेति । (तस्याः) गौर्य्याः कर्णे अर्पितः निक्षिप्तः (कर्णार्पितः यवप्ररोहः) यवाङ्कुरः लोध्रस्य वृक्षविशेषस्य कषायेण विलेपनेन रूक्षे विशदे (लोध्रकषायरूक्षे) उद्वर्त्तिते इत्यर्थः । कषायो रसभेदे स्यादङ्गरागे विलेपन इति विश्वः । गोरोचनायाः क्षेपेण विन्यासेन नितान्तगौरे अत्यन्तारुणे । (गोरोचनाक्षेपनितान्तगौरे) गौरः श्वेतेऽरुणे पीत इति विश्वः । (कपोले) गण्डस्थले (परभागलाभात्) वर्णोत्कर्षप्राप्तेः (चक्षूंषि) द्रष्टॄणामिति शेषः

रेखाविभक्तः सुविभक्तगात्र्याः
किञ्चिन्मधूच्छिष्टविमृष्टरागः।
कामप्यभिख्यां स्फुरितैरपुष्य-
दासन्नलावण्यफलोऽधरोष्ठः॥ १८॥
पत्युः शिरश्चन्द्रकलामनेन
स्पृशेति सख्या परिहासपूर्व्वम्।

(बबन्ध) जहार आचकर्षेत्यर्थः। गोरोचनारुणे गण्डस्थले पाण्डुरो यवाङ्कुरः विजातीयवर्णसन्निधानाल्लब्धवर्णोत्कर्षः सन् चक्षुराकर्षकोऽभूदिति भावः॥ १७॥

रेखेति। (सुविभक्तगात्र्याः) सुसंश्लिष्टावयवायाः पार्व्वत्याः रेखया मध्यगतया विभक्तः सुश्लिष्टः (रेखाविभक्तः) किञ्चिदीषत्। मधूच्छिष्टेन सिक्थकेन विमृष्टः विशेषेण निर्मलीकृतो रागो यस्य सः तथोक्तः (किञ्चिन्मधूच्छिष्टविमृष्टरागः)। मधूच्छिष्टन्तु सिक्थकमिति, निर्णिक्तं शोधितं मृष्टमिति चामरः (अन्यत्रोक्तम् अलौहित्यापगमायाधरेषु सिक्थकलेपः क्रियते। आसन्नं सन्निहितं लावण्यफलं सौन्दर्य्यप्रयोजनं सुखचुम्बनादिरूपं यस्य स तथोक्तः (आसन्नलावण्यफलः अधरोष्ठः स्फुरितैः) भाविशुभशंसिभिः स्पन्दैः (कामपि) अनिर्वाच्यां (अभिख्यां) शोभां (अपुष्यत्) पुपोष। अभिख्या नामशोभयोरित्यमरः॥ १८॥

पत्युरिति। (सख्या) कर्त्र्या (चरणौ रञ्जयित्वा) लाक्षारसाक्तौ कृत्वा (कृताशीः) इति करोतिना समानकर्तृत्वम्। (अनेन) चरणेन। रञ्जने द्वयोरपि नियमाच्चरणावित्युक्तापि औचित्यात्ताड़नविधौ एकतरपरामर्शं इत्याह्रः। (पत्युः) ईश्वरस्य (शिरश्चन्द्रकलां) सुरतविशेषे इति शेषः। स्पृश ताडयेति (परिहास-

सा रञ्जयित्वा चरणौ कृताशी-
र्माल्येन तां निर्व्वचनं जघान ॥ १९ ॥
तस्याः सुजातोत्पलपत्रकान्ते
प्रसाधिकाभिर्नयने निरीक्ष्य।
न चक्षुषोः कान्तिविशेषबुद्ध्या
कालाञ्जनं मङ्गलमित्युपात्तम् ॥ २० ॥
सा सम्भवद्भिः कुसुमैर्लतेव
ज्योतिर्भिरुद्यद्भिरिव त्रियामा।

पूर्व्वं कृताशीः) प्रयुक्ताशीर्व्वादा (सा) पार्व्वती (तां) सखीं (माल्येन) मालया। माल्यं मालास्रजावित्यमरः। (निर्वचनं) यथा तथा तूष्णीमित्यर्थः (जघान) ताडयामास। निर्वचनमित्यनेन विहृताख्यः शृङ्गारानुभाव उक्तः। तदुक्तं प्राप्तकालन्तु यद्ब्रूयात् कुर्य्याद्वा विहृतं हि तदिति ॥ १९ ॥

तस्या इति। (प्रसाधिकाभिः) अलङ्कर्त्रीभिः सुजाते सम्यगुत्पन्ने उत्पलपत्रे इव कान्ते रम्ये (सुजातोत्पलपत्रकान्ते तस्याः नयने निरीक्ष्य कालाञ्जनम्) अञ्जनविशेषः (चक्षुषोः कान्तिविशेषबुद्ध्या) शोभातिशयो भविष्यतीति बुद्ध्येत्यर्थः (न उपात्तं) न गृहीतं किन्तु (मङ्गलं) शुभम् (इति) हेतोः (उपात्तं) निसर्गसुभगस्य किमाहार्य्यकाडम्बरेणेति भावः ॥ २० ॥

सेति। (आमुच्यमानाभरणा) निबध्यमानाभरणा (सा) गौरी (सम्भवद्भिः) उत्पद्यमानैः (कुसुमैर्लतेव) अनेन पद्मरागेन्द्रनीलादीन्याभरणानि सूचितानि लताकुसुमानां नानावर्णत्वात्। (उद्यद्भिः) उदयं गच्छद्भिः (ज्योतिर्भिः) उडुभिः (त्रियामा) रात्रिः (इव)

सरिद्विहङ्गैरिव लीयमानै-
रामुच्यमानाभरणा चकाशे ॥ २१ ॥
आत्मानमालोक्य च शोभमान-
मादर्शबिम्बे स्तिमितायताक्षी।
हरोपयाने त्वरिता बभूव
स्त्रीणां प्रियालोकफलो हि वेषः ॥ २२ ॥
अथाङ्गुलिभ्यां हरितालमार्द्रं
माङ्गल्यमादाय मनःशिलाञ्च।

अनेन मौक्तिकानि कथितानि। (लीयमानैः) आश्रयद्भिर्निषीदद्भि-रित्यर्थः। (विहङ्गैः) चक्रवाकैः (सरिदिव) अनेन सुवर्णाभरणानि सूचितानि विहङ्गाश्च तत्सूचनाय चक्रवाकाः अभिमताः। (चकाशे) रेजे। अत्र लताकुसुमादीनां सहजसम्बन्धिनामुपमानत्वेनोपादानात् आहार्यकमपि तस्याःसहजमिवाशोभत इति भावः॥२१॥

आत्मानमिति। किञ्चेति चार्थः। गौरी (शोभमानम् आत्मानम्) निजशरीरम् (आदर्शबिम्बे) दर्पणमण्डले। दर्पणे मुकुरादर्शावित्यमरः। (स्तिमितायताक्षी) आदरान्निश्चलायतलोचना सती) आलोक्य हरोपयाने) हरप्राप्तौ (त्वरिता) व्यग्रा (बभूव)। (स्त्रीणां वेषः) नेपथ्यं प्रियस्य भर्तुः आलोकः दर्शनं फलं यस्य सः तथोक्तः (प्रियालोकफलः) हि। अन्यथा अरण्यचन्द्रिका स्यादिति भावः। अनेन कालाक्षमत्वलक्षणमौत्सुक्यमुक्तमित्यनुसन्धेयम्॥२२॥

अथेति। (अथ) प्रसाधनानन्तरं (माता) मेनका (माङ्गल्यं) मङ्गलार्थम् (आर्द्रं) द्रवं (हरितालं) वर्णद्रव्यविशेषं (मनःशिलां) धातुविशेषञ्च (अङ्गुलिभ्यां) तर्ज्जनीमध्यमाभ्याम् (आदाय) कर्णयो-

कर्णावसक्तामलदन्तपत्रं
माता तदीयं मुखमुन्नमय्य ॥ २३ ॥
उमास्तनोद्भेदमनुप्रवृद्धो
मनोरथो यः प्रथमं बभूव।
तमेव मेना दुहितुः कथञ्चि-
द्विवाहदीक्षातिलकञ्चकार ॥२४॥ युग्मकम्
बबन्ध चास्राकुलदृष्टिरस्याः
स्थानान्तरे कल्पितसन्निवेशम्।

रवसक्ते लग्ने अमले दन्तपत्रे यस्य तत् तथोक्तं (कर्णावसक्तामलदन्त-पत्रं) तस्याः पार्व्वत्याः इदं (तदीयं मुखम् उन्नमय्य)। विवाह-दीक्षातिलकं चकारेतुत्तरश्लोकेनान्वयः ॥ २३ ॥

उमेति। उमायाः स्तनोद्भेदम् (उमास्तनोद्भेदं अनु) स्तनो-दयमारभ्येत्यर्थः (प्रवृद्धः) वृद्धिं गतः प्रागेवोत्पन्न इति भावः (यो मनोरथः) वाञ्छा। वाञ्छा लिप्सा मनोरथ इत्यमरः। (प्रथमं) मनोरथान्तरात् प्राक् अयमेव प्रथमो मनोरथ इत्यर्थः (बभूव)। (मेना दुहितुस्तमेव) मनोरथभूतमेव। तद्विषये तत्तोपचारः। विवाहदीक्षायां विवाहकृत्ये तिलकं (विवाहदीक्षातिलकं कथञ्चित्) कृच्छ्रेण (चकार) आनन्दवाष्पान्धतयेति शेषः। विवाहानन्तर-भावित्वादन्येषाम् अयमेव प्रथमो मनोरथ इति भावः ॥ २४ ॥ युग्मकम्।

बबन्धेति। (अस्याः) पार्व्वत्याः अस्रैरानन्दवाष्पैः आकुल-दृष्टिः (अस्राकुलदृष्टिः) अतएव (स्थानान्तरे) कल्पितः सन्निवेशो निक्षेपो यस्य तत् (कल्पितसन्निवेशं) स्वस्थानादन्यत्र स्थापितमि-

धात्र्यङ्गुलीभिः प्रतिसार्य्यमाण-
मूर्णामयं कौतुकहस्तसूत्रम् ॥ २५ ॥

क्षीरोदवेलेव सफेनपुञ्जा
पर्य्याप्तचन्द्रेव शरत्त्रियामा।
नवं नवक्षौमनिवासिनी सा
भूयो बभौ दर्पणमादधाना ॥ २६ ॥

तामर्च्चिताभ्यः कुलदेवताभ्यः
कुलप्रतिष्ठां प्रणमय्य माता।

त्यर्थः। अतएव धात्र्याः उपमातुः अङ्गुलीभिः (धात्र्यङ्गुलिभिः प्रति-सार्य्यमाणं) स्वस्थानं प्राप्यमाणम् (ऊर्णामयं) मेषादिलोमनिर्मितम्। ऊर्णा मेषादिलोम्नि स्यादित्यमरः। (कौतुकहस्तसूत्रं) मङ्गलहस्तसूत्रम्। कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहल इति शाश्वतः। बबन्ध च मेनेति शेषः। पूर्व्वोक्ततिलकक्रियासमुच्चयार्थ-श्चकारः ॥ २५ ॥

क्षीरोदेति। नवं नूतनं क्षौमं दुकूलं निवस्ते आच्छादयतीति (नवक्षौमनिवासिनी)। वसेराच्छादनार्थाण्णिनिः। तथा नवं (दर्पणमादधाना) बिभ्रती (सा) गौरी सफेनपुञ्जा सडिण्डीर-पङ्क्तिः क्षीरमुदकं यस्य सः क्षीरोदः क्षीरसमुद्रः। उदकस्योदः संज्ञायाम्(१) इत्युदादेशः तस्य वेला तीरभूमिरिव। वेला काले च जलधेस्तीरे नीरविकारयोरिति विश्वः। (पर्य्याप्तचन्द्रा) पूर्णचन्द्रा (शरत्त्रियामा) शरद्रात्रिरिव (भूयः) भूयिष्ठं (बभौ) चकाशे ॥२६॥

तामिति। कारयितव्येषु दक्षा (कारयितव्यदक्षा) कारयित्री

(१) पा० ६। ३। ५७ सू०।

अकारयत् कारयितव्यदक्षा
क्रमेण पादग्रहणं सतीनाम् ॥ २७ ॥
अखण्डितं प्रेम लभस्व पत्यु-
रित्युच्यते ताभिरुमा स्म नम्रा।
तया तु तस्यार्द्धशरीरभाजा
पश्चात्कृताः स्निग्धजनाशिषोऽपि ॥२८॥

कर्म्मोपदेशकुशलेत्यर्थः। ( माता ) मेना प्रतितिष्ठति अस्यामिति प्रतिष्ठा। आतश्चोपसर्गे इति कः(१)। स्त्रियामाप्। कुलस्य प्रतिष्ठां (कुलप्रतिष्ठां) कुलालम्बनभूतां स्थितिकारिणीमित्यर्थः। (तां) गौरीम् ( अर्च्चिताभ्यः ) पूजिताभ्यः ( कुलदेवताभ्यः ) गृहदेवताभ्यः (प्रणमय्य) प्रणामं कारयित्वा। ल्यपि लघुपूर्व्वात् इति णेरयादेशः (२)। (सतीनां) पतिव्रतानां (पादग्रहणं) पादाभिवन्दनं (क्रमेण अकारयत्) कारयामास। हृक्रोरन्यतरस्यामिति (३) अणिकर्त्तुः कर्म्मत्वम् अन्यत्र नमेरकर्म्मकत्वात् गतिबुद्धीत्यादिना(४) ॥ २७ ॥

अखण्डितमिति। (नम्रा) प्रणता (उमा ताभिः) सखीभिः पत्युः( शिवस्य (अखण्डितम्) अक्षतं ( प्रेम लभस्व ) प्राप्नुहि ( इत्युच्यते ) स्म अभिहिता। लट्स्मे इति भूतार्थे लट् (५)। ( तस्य ) हरस्य अर्द्धं शरीरस्य अर्द्धशरीरम्। अर्द्धंनपुंसकमिति समासः (६)। तद्भजतीति ( अर्द्धशरीरभाजा तया ) गौर्य्या ( तु स्निग्धजनाशिषः) बन्धुजनाशीर्व्वादाः (अपि पश्चात्कृताः) अधरीकृताः ततोऽप्यधिकफललाभादिति भावः ॥ २८ ॥

---

(१) पा० ३ । ३ । १०६ सू० ।　(४) पा० १ । ४ । ५२ सू० ।
(२) पा० ६ । ४ । ५६ सू० ।　(५) पा० ३ । २ । ११८सू० ।
(३) पा० १ । ४ । ५३ सू० ।　(६) पा० २ । २ । २ । सू० ।

इच्छाविभूत्योरनुरूपमद्रि-
स्तस्याः कृती कृत्यमशेषयित्वा।
सभ्यः सभायां सुहृदास्थितायां
तस्थौ वृषाङ्कागमनप्रतिक्षः॥ २९॥
तावद्भवस्यापि कुवेरशैले
तत्पूर्व्वपाणिग्रहणानुरूपम्।
प्रसाधनं मातृभिरादृताभि-
र्न्यस्तं पुरस्तात् पुरशासनस्य॥ ३०॥

इच्छाविभूत्योरिति। (कृती) कुशलः सभायां साधुः (सभ्यः)। सभायां य इति यप्रत्ययः(१)। (अद्रिः) हिमवान् (इच्छाविभूत्योः) उत्साहैश्वर्य्ययोः (अनुरूपं) सदृशं यथा तथा (तस्याः) पार्व्वत्याः (कृत्यं) कर्त्तव्यम् (अशेषयित्वा) अशेषं निःशेषं कृत्वा समाप्येत्यर्थः। अशेषशब्दात्तत्करोतीति ण्यन्तात् क्त्वाप्रत्ययः। (सुहृदास्थितायां) बन्धुजनाक्रान्तायां (सभायां) संसदि वृषाङ्कस्य हरस्य आगमनं प्रतीक्षत इति तथोक्तः (वृषाङ्कागमनप्रतीक्षः) सन्। कर्म्मण्यण् इति (२) अण्। (तस्थौ) स्थितः॥ २९॥

तावदिति। (तावत्) यावद्गौरीप्रसाधनं क्रियते तत्काल एवे-त्यर्थः। (कुवेरशैले) कैलासे तदेव पूर्व्वं तत्पूर्व्वं तच्च तत् पाणि-ग्रहणं तस्यानुरूपं (तत्पूर्व्वपाणिग्रहणानुरूपं प्रसाधनं) अलङ्कार-सामग्री (आदृताभिः) सादराभिः। कर्त्तरि क्तः। (मातृभिः) ब्राह्मीप्रभृतिभिः सप्तमातृकाभिः ब्राह्मी च वैष्णवी चैन्द्री रौद्री

(१) पा० ४।४।१०५ सू०। (२) पा० ३।२।१ सू०।

तद्गौरवान्मङ्गलमण्डनश्रीः
सा पस्पृशे केवलमीश्वरेण।
स एव वेषः परिणेतुरिष्टं
भावान्तरं तस्य विभोः प्रपेदे ॥ ३१ ॥

बभूव भस्मैव सिताङ्गरागः
कपालमेवामलशेखरश्रीः।
उपान्तभागेषु च रोचनाङ्को
गजाजिनस्यैव दुकूलभावः ॥ ३२ ॥

वाराहिकी तथा। कौबेरी चैव कौमारी मातरः सप्त कीर्त्तिताः। पुरं शास्तीति पुरशासनः तस्य (पुरशासनस्य)। कर्त्तरि ल्युट्। (भवस्यापि पुरस्तात्) अग्रे (न्यस्तं) निक्षिप्तम् ॥ ३० ॥

तदिति। (ईश्वरेण) शिवेन (सा मङ्गलमण्डनश्रीः) शुभप्रसाधनसम्पत् (तद्गौरवात्) तासु मातृषु आदरात् (केवलं पस्पृशे) स्पृष्टैव न तु दधे इत्यवधारणार्थः केवलशब्दः। केवलश्चावधारणे इति शाश्वतः। किन्तु (तस्य विभोः) देवस्य (स एव वेषः) स्वाभाविको भस्मकपालादिवेष एव (परिणेतुः) लोके उद्वोढुः (इष्टं) अपेक्षितं (भावान्तरं) रूपान्तरं (प्रपेदे) अङ्गरागादिरूपतां प्रापेत्यर्थः ॥ ३१ ॥

भावान्तरापत्तिमेवाह

बभूवेति। (भस्मैव सिताङ्गरागः) शुभ्रगन्धानुलेपनं (बभूव)। कपालमेव अमलं शेखरं शिरोभूषणं तस्य श्रीः शोभा (अमलशेखरश्रीः) (बभूव)। (गजाजिनस्यैव उपान्तभागेषु) अञ्चलप्रदेशेषु रोचनैवाङ्को हंसादिचिह्नं यस्य सः तथोक्तः (रोचनाङ्कः दुकूल-

शृङ्गान्तरद्योति विलोचनं य-
दन्तर्निविष्टामलपिङ्गतारम्।
सान्निध्यपक्षे हरितालमय्या-
स्तदेव जातं तिलकक्रियायाः॥ ३३॥
यथाप्रदेशं भुजगेश्वराणां
करिष्यतामाभरणान्तरत्वम्।
शरीरमात्रं विकृतिं प्रपेदे
तथैव तस्थुः फणरत्नशोभाः॥ ३४॥

भावः) पट्टांशुकत्वञ्च (बभूव)। भस्मादिकमेवाङ्गरागादिभावं प्राप्तमित्यर्थः॥ ३२॥

शृङ्गेति। शृङ्गान्तरे ललाटास्थिमध्ये द्योतत इति तथोक्तं (शृङ्गान्तरद्योति)। शृङ्गो निधौ ललाटास्थ्नीत्यमरः। अन्तर्निविष्टा मध्यगता अमला पिङ्गा तारा कनीनिका यस्य तथोक्तं (अन्तर्निविष्टामलपिङ्गतारम्)। तारकाक्ष्णः कनीनिकेत्यमरः। (यत्) विलोचनं तत् विलोचनमेव (हरितालमय्याः) वर्णद्रव्यविशेषविकारस्य (तिलकक्रियायाः) तिलकरचनायाः सन्निधिरेव सान्निध्यं तदेव पक्षः साध्यम्। पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिष्विति यादवः। तस्मिन् (सान्निध्यपक्षे जातं) प्रविष्टमित्यर्थः अनेन ललाटलोचनमेव तस्य हरितालतिलकमभूदित्युक्तम्॥ ३३॥

यथेति। (यथाप्रदेशं) प्रदेशान् प्रकोष्ठादीननतिक्रम्य (आभरणान्तरत्वं) कङ्कणाद्याभरणविशेषत्वं (करिष्यतां) सम्पादयिष्यतां (भुजगेश्वराणां शरीरमात्रं) शरीरमेव (विकृतिं) रूपान्तरं (प्रपेदे)। (फणरत्नशोभास्तथैव तस्थुः) तासां तथैवोपादेयत्वादिति भावः॥ ३४॥

दिवापि निष्ठ्यूतमरीचिभासा
बाल्यादनाविष्कृतलाञ्छनेन।
चन्द्रेण नित्यं प्रतिभिन्नमौले-
श्चूड़ामणेः किं ग्रहणं हरस्य ॥ ३५ ॥

इत्यद्भुतैकप्रभवः प्रभावात्
प्रसिद्धनेपथ्यविधेर्विधाता।
आत्मानमासन्नगणोपनीते
खड्गे निषक्तप्रतिमं ददर्श ॥ ३६ ॥

स गोपतिं नन्दिभुजावलम्बी
शार्दूलचर्म्मान्तरितोरुपृष्ठम्।

दिवेति (दिवा) दिने (अपि) निष्ठ्यूता उद्गीर्णाः मरीचिभासः किरणकान्तयो यस्य तेन (निष्ठ्यूतमरीचिभासा बाल्योदयात्) अल्पतनुत्वात् (अनाविष्कृतलाञ्छनेन) अदृश्यमानकलङ्केनेत्यर्थः। (चन्द्रेण नित्यं) सर्व्वदा (प्रतिभिन्नमौलेः) सङ्गतमुकुटस्य (हरस्य चूड़ामणेर्ग्रहणं) स्वीकारः (किं) किमर्थम्। चन्द्रचूडामणेरेवास्य किमन्यैश्चूडामणिभिरिति भावः ॥ ३५ ॥

इतीति। (इति) इत्थं (प्रभावात्) सामर्थ्यात् प्रसिद्धस्य नेपथ्यविधेः (प्रसिद्धनेपथ्यविधेः) वेषसंविधानस्य (विधाता) निर्म्माता। अतएवाद्भुतानामाश्चर्य्याणां एकप्रभवः मुख्यनिधिः स देवः (अद्भुतैकप्रभवः) आसन्नगणेन पार्श्वस्थवर्गेण प्रमथगणेनेत्यर्थः उपनीते आनीते (आसन्नगणोपनीते खड्गे निषक्तप्रतिमं) संक्रान्तप्रतिबिम्बम् (आत्मानं ददर्श)। वीरपुरुषाणामेष आचारः ॥३६॥

तद्भक्तिसंक्षिप्तबृहत्प्रमाण-
मारुह्य कैलासमिव प्रतस्थे ॥ ३७ ॥

तं मातरो देवमनुव्रजन्त्यः
स्ववाहनक्षोभचलावतंसाः ।
मुखैः प्रभामण्डलरेणुगौरैः
पद्माकरं चक्रुरिवान्तरीक्षम् ॥ ३८ ॥

तासाञ्च पश्चात् कनकप्रभाणां
काली कपालाभरणा चकाशे ।

स इति । (सः) देवः (नन्दिभुजावलम्बी) नन्दिकेश्वरभुजावलम्बनः सन् शार्दूलचर्म्मणा व्याघ्रचर्म्मणा अन्तरितम् आच्छादितम् उरु विशालं पृष्ठं यस्य तं तथोक्तं (शार्दूलचर्म्मान्तरितोरुपृष्ठं) । शार्दूलद्वीपिनौ व्याघ्रे इत्यमरः। तस्मिन् देवे भक्त्या संक्षिप्तं सङ्कोचितं बृहत्प्रमाणं यस्य तं (तद्भक्तिसंक्षिप्तबृहत्प्रमाणं कैलासमिव गोपतिं) वृषभं आरुह्य (प्रतस्थे) चचाल ॥ ३७ ॥

तमिति । (तं) देवम् अनुव्रजन्त्यो) अनुगच्छन्त्यः स्ववाहनानां क्षोभेण प्रकम्पेण चलावतंसाश्चलकुण्डलाः ( स्ववाहनक्षोभचलावतंसाः मातरः) सप्त मातृकाः प्रभामण्डलान्येव रेणवः परागाः तैः गौरैः अरुणैः (प्रभामण्डलरेणुगौरैः) । गौरोऽरुणे सिते पीत इति यादवः । मुखैः) (अन्तरीक्षम्) आकाशं (पद्माकरमिव चक्रुः) ॥ ३८ ॥

तासामिति । (कनकप्रभाणां) सुवर्णवर्णानां (तासां) मातॄणां (पश्चात् कपालाभरणा) सितकपालालङ्कारेत्यर्थः । (काली) महाकाली देवी च । कृष्णवर्णत्वसूचनाय कालीसंज्ञयाभिधानम् ।

बलाकिनी नीलपयोदराजी
दूरं पुरःक्षिप्तशतह्रदेव ॥ ३९ ॥
ततो गणैः शूलभृतः पुरोगै-
रुदीरितो मङ्गलतूर्य्यघोषः ।
विमानशृङ्गाण्यवगाहमानः
शशंस सेवावसरं सुरेभ्यः ॥ ४० ॥
उपाददे तस्य सहस्ररश्मि-
स्त्वष्ट्रा नवं निर्म्मितमातपत्रम् ।

(बलाकिनी) बलाकावती । ब्रीह्यादित्वादिनिः (१) । (दूरं यथा तथा पुरोऽग्रे क्षिप्ताः प्रसारिताः शतह्रदाः विद्युतो यस्याः सा तथोक्ता (पुरःक्षिप्तशतह्रदेव नीलपयोदराजी) कालमेघपङ्क्तिरिव (चकाशे) ॥ ३९ ॥

तत इति । (ततः) अनन्तरं (शूलभृतः) शिवस्य पुरो गच्छन्तीति (पुरोगैः) अग्रेसरैः । अन्यत्रापि दृश्यत इति वक्तव्यमिति गमेर्डप्रत्ययः । (गणैः) प्रमथैः (उदीरितः) उत्पादितः (मङ्गलतूर्य्यघोषः) मङ्गलवाद्यध्वनिः (विमानशृङ्गाण्यवगाहमानः) (सुरेभ्यः) विमानस्थेभ्यः (सेवावसरं शशंस) । सुराः प्रस्थानतूर्य्यध्वनिमाकर्ण्य अयमेव नः सेवावसर इत्याजग्मुरित्यर्थः ॥ ४० ॥

सुराणां सेवाप्रकारमेवाह

उपेति । (तस्य) हरस्य (सहस्ररश्मिः) सूर्य्यः (त्वष्ट्रा) विश्वकर्म्मणा (निर्म्मितं नवमातपत्रम् उपाददे) धृतवानित्यर्थः । उत्प्रे-

(१) पा० ५ । २ । ११६ सू० ।

स तद्दुकूलादविदूरमौलि-
र्बभौ पतद्गङ्ग इवोत्तमाङ्गे ॥ ४१ ॥
मूर्त्ते च गङ्गायमुने तदानीं
सचामरे देवमसेविषाताम् ।
समुद्रगारूपविपर्य्ययेऽपि
सहंसपाते इव लक्ष्यमाणे ॥ ४२ ॥

चते तद्दुकूलात्तस्यातपत्रस्य प्रान्तलम्बिनः (दुकूलादविदूरमौलिः) तद्कूलस्यासन्नमौलिरित्यर्थः । (सः) हरः (उत्तमाङ्गे) शिरसि । उत्तमाङ्गं शिरः शीर्षमित्यमरः । पतन्ती गङ्गा यस्य सः (पतद्गङ्ग इव बभौ) । दुकूलादित्यत्र दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामिति दूरार्थयोगे विकल्पेन पञ्चमी(१) । नाथेनोक्तम् अन्यारादित्यत्र(२) आराच्छब्दस्यार्थग्रहणार्थत्वात्पञ्चमीति तदनाकरम् । किञ्चास्य शास्त्रोक्तविकल्पापवादत्वात् दूरं ग्रामस्येत्यादिः षष्ठीप्रयोगः दुरापास्तः स्यादित्युपेक्षणीयमेव ॥ ४१ ॥

मूर्त्ते इति । गङ्गा च यमुना च (गङ्गायमुने मूर्त्ते) विग्रहधारिण्यौ (सचामरे) चामरसहिते सत्यौ अतएव समुद्रगा नदी तस्याः रूपं स्वरूपं तस्य विपर्य्ययेऽप्यभावेऽपि ( समुद्रगारूपविपर्य्ययेऽपि) । हंसपातेन हंससञ्चारेण सह वर्त्तते इति (सहंसपाते इव) । तेन सहेति तुल्ययोगे इति बहुव्रीहिः (३) । वोपसर्ज्जनस्येति समासः(४) । (लक्ष्यमाणे) दृश्यमाणे सत्यौ (तदानीं) विवाहसमये (देवमसेविषाताम् अभजताम् । सेवतेर्लुङ् । गङ्गायमुने चामरग्राहिण्यौ देवमुपतस्थतुः इत्यर्थः ॥ ४२ ॥

---

(१) पा० २ । ३ । ३४ सू० । (२) पा० २ । ३ । २९ सू० ।
(३) पा० २ । २ । २८ सू० । (४) पा० ६ । ३ । ८२ सू० ।

तमभ्यगच्छत् प्रथमो विधाता
श्रीवत्सलक्ष्मा पुरुषश्च साक्षात्।
जयेति वाचा महिम नमस्य
संवर्द्धयन्तौ हविषेव वह्निम् ॥ ४३ ॥

एकैव मूर्त्तिर्बिभिदे त्रिधा सा
सामान्यमेषां प्रथमावरत्वम्।
विष्णोर्हरस्तस्य हरिः कदाचित्
वेधास्तयोस्तावपि धातुराद्यौ ॥ ४४ ॥

तमिति। (प्रथमः) आद्यः (विधाता) चतुर्मुखः तथा (श्रीवत्सलक्ष्मा) श्रीवत्साङ्कः (पुरुषः) विष्णुश्च (साक्षात् तं) देवम् (अभ्यगच्छत्) सम्मुखमाययौ किं कुर्व्वन्तौ (जयेति वाचा) जयशब्देन (अस्य) ईश्वरस्य (महिमानं) महत्वं (हविषा वह्निमिव संवर्द्धयन्तौ) वृद्धिं गमयन्तौ ॥ ४३ ॥

न चानुचितमेतदुक्तमित्याह

एकेति। (सा एकैव मूर्त्तिस्त्रिधा) ब्रह्मविष्णुशिवात्मकत्वेन (बिभिदे)। औपाधिकोऽयं भेदो न वास्तविक इत्यर्थः। अतएव (एषां) त्रयाणां प्रथमावरयोर्भावः (प्रथमावरत्वं) ज्येष्ठकनिष्ठभावः (सामान्यं) साधारणम्। इच्छया सर्व्वे ज्येष्ठा भवन्ति कनिष्ठाश्चेत्यर्थः। एतदेव विवृणोति (कदाचिद्विष्णोः हरः आद्यः) (कदाचित्तस्य हरिः आद्यः) (कदाचित्तयोः) हरिहरयोः (वेधा आद्यः) (कदाचित्तौ) हरिहरावपि (धातुः) स्रष्टुः (आद्यौ)। एवमेतेषां पौर्व्वापर्य्यमनियतमिति दर्शितम् ॥ ४४ ॥

तं लोकपालाः पुरुहूतमुख्याः
श्रीलक्षणोत्सर्गविनीतवेषाः।
दृष्टिप्रदाने कृतनन्दिसंज्ञा-
स्तद्दर्शिताः प्राञ्जलयः प्रणेमुः॥ ४५॥

कम्पेन मूर्ध्नः शतपत्रयोनिं
वाचा हरिं वृत्रहणं स्मितेन।
आलोकमात्रेण सुरानशेषान्
सम्भावयामास यथाप्रधानम्॥ ४६॥

तमिति। (पुरुहूतमुख्याः) इन्द्रादयः (लोकपालाः) श्रीलक्षणानामैश्वर्यचिह्नानां छत्रचामरवाहनानाम् उत्सर्गेण त्यागेन विनीतवेषाः अनुनीतवेषाः (श्रीलक्षणोत्सर्गविनीतवेषाः) सन्तः तथा (दृष्टिप्रदाने) निमित्ते दर्शनप्रदानार्थमित्यर्थः कृतनन्दिसंज्ञाः कृता नन्दिनः प्रतीहारस्य संज्ञा सङ्केतो यैस्तादृशाः मम दर्शनं दापयेति नन्दिनम्प्रति कृतहस्तादिसूचना इत्यर्थः (कृतनन्दिसंज्ञाः)। संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचनेत्यमरः। (तद्दर्शिताः) तेन नन्दिना दर्शिताः अयमिन्द्रः प्रणमति अयं चन्द्र इत्याद्युक्तिपूर्ब्बकं निवेदिताः (प्राञ्जलयः) कृताञ्जलयः सन्तः तं भवं (प्रणेमुः) प्रणताः॥ ४५॥

कम्पेनेति। (सः) देवः (शतपत्रयोनिं) चतुर्मुखं (मूर्ध्नः कम्पेन) तथा (हरिं वाचा) सम्भाषणेन वृत्रं हतवन्तं (वृत्रहनम्) इन्द्रम् ब्रह्मभ्रूणवृत्रेषु क्विप् इति क्विप् (१)। (स्मितेन) मन्दहासेन (अशे-

(१) पा० ३।२।८७ सू०।

तस्मै जयाशीः ससृजे पुरस्तात्
सप्तर्षिभिस्तान् स्मितपूर्व्वमाह ।
विवाहयज्ञे विततेऽत्र यूय-
मध्वर्य्यवः पूर्व्ववृता मयेति ॥ ४७ ॥

विश्वावसुप्राग्रहरैः प्रवीणैः
सङ्गीयमानत्रिपुरावदानः ।
अध्वानमध्वान्तविकारलङ्घ्य-
स्ततार ताराधिपखण्डधारी ॥ ४८ ॥

षान् सुरानालोकमात्रेण ) दृष्टिमात्रेण इत्यं (यथाप्रधानं) यथार्हं ( सम्भावयामास ) ॥ ४६ ॥

तस्मा इति । ( तस्मै ) शिवाय ( सप्तर्षिभिः ) । दिक्संख्ये संज्ञायामिति समासः(२) । (पुरस्तात्) अग्रे जयेत्याशीः (जयाशीः ससृजे) प्रयुक्ता । (तान्) सप्तर्षीन् ( स्मितपूर्व्वमाह ) । किमिति । (वितते) विस्तृते अत्र प्रवर्त्तिते विवाह एव यज्ञः तस्मिन् (विवाह-यज्ञे यूयं मया ) पूर्व्वमेव वृताः (पूर्व्ववृताः) प्रार्थिताः (अध्वर्य्यवः) ऋत्विजः इति विशेषवाचिना सामान्यमुक्तम् ॥ ४७ ॥

विश्वावस्विति । विश्वावसुर्नाम कश्चिद्गन्धर्व्वः देवगायकः तत्-प्राग्रहरैः तत्प्रमुखैः ( विश्वावसुप्राग्रहरैः प्रवीणैः ) प्रकृष्टवीणैः निपुणैर्वा । प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिता इत्यमरः । त्रयाणां पुराणां समाहारस्त्रिपुरम् । तद्धितार्थोत्तरपदेत्यादिना समाहारसमासः(१) । पात्रादिभ्यः प्रतिषेधो वक्तव्यः इति स्त्रीलि-ङ्गान्ततानिषेधः । त्रिपुरस्य सम्बन्ध्यवदानं पूर्व्ववृत्तं कर्म्म विजय-

(१) पा० २ । १ । ५० सू० । (२) पा० २ । १ । ५१ सू० ।

खे खेलगामी तमुवाच वाहः
सशब्दचामीकरकिङ्किणीकः।
तटाभिघातादिव लग्नपङ्के
धुन्वन् मुहुः प्रोतघने विषाणे ॥ ४९ ॥

स प्रापदप्राप्तपराभियोगं
नगेन्द्रगुप्तं नगरं मुहूर्त्तात्।
पुरोविलग्नैर्हरदृष्टिपातैः
सुवर्णसूत्रैरिव कृष्यमाणः ॥ ५० ॥

रूपं त्रिपुरावदानं तत्सङ्गीयमानं स्तूयमानं यस्य स तथोक्तः (सङ्गीयमानत्रिपुरावदानः)। अवदानं कर्म्म वृत्तमित्यमरः। ध्वान्तं तमो मोह इति यावत् तद्विकारेण रागादिना लङ्घ्योऽभिभवनीयो न भवतीति (अध्वान्तविकारलङ्घ्यः)। विवाहादिकन्तु तस्य लीलेत्यर्थः। (ताराधिपखण्डधारी) चन्द्रशेखरः शम्भुः (अध्वानं मार्गं (ततार) अत्यगच्छत् ॥ ४८ ॥

खे इति। (खे) आकाशे खेलं सुन्दरं गच्छतीति (खेलगामी) सशब्दाः शब्दायमानाः चामीकरकिङ्किण्यः काञ्चनक्षुद्रघण्टिकाः यस्य सः तथोक्तः (सशब्दचामीकरकिङ्किणीकः)। किङ्किणी क्षुद्रघण्टिकेत्यमरः। नद्यृतश्च इति कप्। वाह्यते अनेन इति (वाहः) वृषभः करणे घञ् (प्रोतघने) स्यूतमेघे अतएव (तटाभिघातात्) रोधोभेदात् (लग्नपङ्के) श्लिष्टकर्दमे (इव) स्थिते (विषाणे) शृङ्गे (मुहुर्धुन्वन् तं) हरम् (उवाह) वहति स्म ॥ ४९ ॥

स इति। (सः) वाहः न प्राप्तः पराभियोगः शत्रुसमाक्रान्तिर्यस्य तत् तथोक्तं (अप्राप्तपराभियोगं) नगेन्द्रेण हिमवता

तस्योपकण्ठे घननीलकण्ठः
कुतूहलादुन्मुखपौरदृष्टः ।
स्वबाणचिह्नादवतीर्य मार्गा-
दासन्नभूपृष्ठमियाय देवः ॥ ५१ ॥
तमृद्धिमद्बन्धुजनाधिरूढै-
र्वृन्दैर्गजानां गिरिचक्रवर्त्ती ।
प्रत्युज्जगामागमनप्रतीतः
प्रफुल्लवृक्षैः कटकैरिव स्वैः ॥ ५२ ॥

गुप्तं रक्षितं (नगेन्द्रगुप्तं) (नगरम्) ओषधिप्रस्थं पुरोऽग्रे विलग्नैः संक्रान्तैः (पुरोविलग्नैः हरदृष्टिपातैः सुवर्णसूत्रैः क्रष्यमाण इव मुहूर्त्तात् प्रापत्) अन्यथा कथं दूरस्याशुप्राप्तिः स्यादिति भावः । गुरुः प्रसृताः हरदृष्टयः पिङ्गलवर्णत्वात् सौवर्णानि वृषाकर्षणदामानीव अलक्ष्यन्त इत्यर्थः ॥ ५० ॥

तस्येति । (तस्य) पुरस्य (उपकण्ठे) अन्तिके घनो मेघ इव नीलः कण्ठो यस्य सः (घननीलकण्ठः देवः कुतूहलात्) दर्शनौत्सुक्यादुन्मुखैः पौरैः दृष्टः (उन्मुखपौरदृष्टः) सन् (स्वबाणचिह्नात्) त्रिपुरविजयसमये स्वबाणाङ्कात् (मार्गात्) कुतश्चिदाकाशप्रदेशात् (अवतीर्य) अवरुह्य (आसन्नभूपृष्ठं) निकटभूतलम् (इयाय) प्राप ॥ ५१ ॥

तमिति । आगमनेन शिवागमनेन प्रतीतो हृष्टः (आगमनप्रतीतः गिरिचक्रवर्त्ती) पर्व्वताधिराजः हिमवान् ऋद्धिमता वस्त्रालङ्कारादिसम्पन्नेन बन्धुजनेन अधिरूढैः (ऋद्धिमद्बन्धुजनाधिरूढैः) अनेन बन्धूनां समसाम्यं सूचितम् । (गजानां

वर्गावुभौ देवमहीधराणां
द्वारे पुरस्योद्घटितापिधाने।
समीयतुर्दूरविसर्पिघोषौ
भिन्नैकसेतू पयसामिवौघौ ॥ ५३ ॥
ह्रीमानभूद्भूमिधरो हरेण
त्रैलोक्यवन्द्येन कृतप्रणामः।
पूर्व्वं महिम्ना स हि तस्य दूर-
मावर्ज्जितं नात्मशिरो विवेद ॥ ५४ ॥

वृन्दैः) प्रफुल्लाः विकसितकुसुमाः वृक्षा येषु तैः (प्रफुल्लवृक्षैः खैः) स्वकीयैः (कटकैः) नितम्बैरिव (तं) हरं (प्रत्युज्जगाम) अभिययौ। कटकोऽस्त्री नितम्बोऽद्रेरित्यमरः ॥ ५२ ॥

वर्गाविति। दूरविसर्पी दूरगामी घोषो ययोस्तौ (दूरविसर्पिघोषौ) देवाश्च महीधराश्च तेषां (देवमहीधराणाम् उभौ वर्गौ उद्घटितापिधाने) अपनीतकवाटे (पुरस्य द्वारे) भिन्नः दीर्णः एकसेतुर्याभ्यां तौ (भिन्नैकसेतू पयसामोघौ) प्रवाहौ (इव समीयतुः) सङ्गतौ ॥ ५३ ॥

ह्रीमानिति। (भूमिधरः) हिमवान् त्रयो लोकास्त्रैलोक्यं चातुर्व्वर्ण्यादित्वात् ष्यङ्प्रत्ययः। तस्य वन्द्येन (त्रैलोक्यवन्द्येन) नमस्कार्य्येण (हरेण कृतप्रणामः) सन्। ऋत्विक्पितृव्यश्वशुर-मातुलानां यवीयसाम्। प्रवयाः प्रथमं कुर्य्यात् प्रत्युत्थायाभि-वादनमिति स्मरणात्। (ह्रीमानभूत्) महादेवं प्रति स्वयमल्पत्वात् सङ्कोचं प्रापेत्यर्थः। ननु विदितेश्वरमहिम्नः स्वयं प्रागेव प्रणतस्य जामातुराचारमात्रस्वीकारे कः सङ्कोच इति शङ्कां निरस्यति

स प्रीतियोगाद्विकसन्मुखश्री-
र्जामातुरग्रेसरतामुपेत्य।
प्रावेशयन्मन्दिरमृद्धमेन-
मागुल्फकीर्णापणमार्गपुष्पम्॥ ५५॥
तस्मिन्मुहूर्त्ते पुरसुन्दरीणा-
मीशानसन्दर्शनलालसानाम्।

पूर्व्वमिति (हि) यस्मात् (सः) हिमवान् (पूर्व्वं) प्रागेव (तस्य) ईश्वरस्य (महिम्ना) सामर्थ्येन (दूरं) अत्यन्तम् (आवर्ज्जितं) नमितं (आत्मशिरः न विदेद)। सत्यं स्वयं प्रणतत्वानुसन्धाने न सङ्कोचः तदनुसन्धानन्त्वौत्सुक्यान्नास्तीति भावः॥ ५४॥

स इति। (प्रीतियोगात्) सन्तोषसम्बन्धात् (विकसन्मुखश्रीः) विकसन्ती मुखश्रीर्यस्य स तथोक्तः (सः) हिमवान् जायां मिमीते जानातीति (जामातुः) वरस्य। पृषोदरादित्वात्साधुः(१) जामाता दुहितुः पतिरित्यमरः। (अग्रेसरतां) पुरोगामितां (उपेत्य एनं) देवम् आगुल्फं पादग्रन्थिपर्य्यन्तं कीर्णानि पर्य्यस्तानि आपणमार्गेषु पण्यवीथिकासु पुष्पाणि यस्मिन् तत् (आगुल्फकीर्णापणमार्गपुष्पम्) तद्ग्रन्थी घुटिके गुल्फावित्यमरः। (ऋद्धं) समृद्धं (मन्दिरं) नगरम्। मन्दिरं नगरेऽगारे मन्दिरो मकरालय इति विश्वः। (प्रावेशयत्)॥ ५५॥

तस्मिन्निति। (तस्मिन् मुहूर्त्ते) हरपुरप्रवेशसमये ईशानस्य सन्दर्शने लालसानां लोलुपानाम्। (ईशानसन्दर्शनलालसानां) लोलुपो लोलुभो लोलो लालसो लम्पटश्च स इति यादवः (पुरसुन्दरीणां प्रासादमालासु इत्यं) वक्ष्यमाणप्रकारेण (त्यक्तान्य-

(१) पा० ६। ३। १०९ सू०।

प्रासादमालासु बभूवुरित्थं
त्यक्तान्यकार्य्याणि विचेष्टितानि ॥ ५६ ॥
आलोकमार्गं सहसा व्रजन्त्या
कयाचिदुद्वेष्टनवान्तमाल्यः।
बद्धुं न सम्भावित एव तावत्
करेण रुद्धोऽपि च केशपाशः ॥ ५७ ॥
प्रसाधिकालम्बितमग्रपाद-
माक्षिप्य काचित् द्रवरागमेव।

कार्य्याणि ) विसृष्टकार्य्यान्तराणि ( विचेष्टितानि ) व्यापाराः। नपुंसके भावे क्तः इति क्तः (१)। (बभूवुः) आसन् ॥ ५६ ॥

तान्येवाह पञ्चभिः श्लोकैः

आलोकेति। ( आलोकमार्गं ) दर्शनपथं गवाक्षमित्यर्थः। ( सहसा व्रजन्त्या ) गच्छन्त्या ( कयाचित् ) उद्वेष्टनः द्रुतगतिवशा-दुन्मुक्तबन्धनः अतएव वान्तमाल्यः उद्गीर्णमाल्यश्च यः सः (उद्वे-ष्टनवान्तमाल्यः करेण रुद्धः) गृहीतः (अपि च केशपाशः) केशक-लापः। पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे इत्यमरः। ( तावत् ) आलोकनमार्गप्राप्तिपर्य्यन्तं ( बद्धुं ) बन्धनायेत्यर्थः। (न सम्भावितः ) न स्मृत एव ॥ ५७ ॥

प्रसाधिकेति। (काचित्) स्त्री प्रसाधिकया अलङ्कर्त्र्या आल-म्बितं रञ्जनार्थं धृतं ( द्रवरागमेव ) आर्द्रालक्तकमेव ( प्रसाधिका-लम्बितं) अग्रश्चासौ पादश्च अग्रपाद इति समानाधिकरणसमासः। हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्यामिति वामनः।

(१) पा० ३।३।११४ सू०।

उत्सृष्टलीलागतिरागवाक्षा-
दलक्तकाङ्कां पदवीं ततान ॥ ५८ ॥
विलोचनं दक्षिणमञ्जनेन
सम्भाव्य तद्वञ्चितवामनेत्रा ।
तथैव वातायनसन्निकर्षं
ययौ शलाकामपरा वहन्ती ॥ ५९ ॥
जालान्तरप्रेषितदृष्टिरन्या
प्रस्थानभिन्नां न बबन्ध नीवीम् ।
नाभिप्रविष्टाभरणप्रभेण
हस्तेन तस्थाववलम्ब्य वासः ॥ ६० ॥

( अग्रपादं तमाक्षिप्य ) आकृष्य ( उत्सृष्टलीलागतिः ) त्यक्तमन्द-गमना सती (आ गवाक्षात्) गवाक्षपर्यन्तं पदद्वयमेतत् । (पदवी-मलक्तकाङ्कां) लाक्षारसचिह्नां (ततान) चकार ॥ ५८ ॥

विलोचनमिति । (अपरा) स्त्री (दक्षिणं विलोचनम् अञ्जनेन सम्भाव्य ) अलङ्कृत्य तद्वञ्चितं तेनाञ्जनेन वर्जितं वामनेत्रं यस्याः सा तथोक्ता ( तद्वञ्चितवामनेत्रा ) सती ( तथैव ) तेनैव रूपेण (शलाकाम्) अञ्जनकूर्चिकां (वहन्ती) बिभ्रती ( वातायनसन्निकर्षं ) गवाक्षसमीपं ( ययौ ) । दक्षिणग्रहणं सम्भ्रमात् व्युत्क्रमद्योतनार्थं सव्यं हि पूर्वं मनुष्या अञ्जत इति श्रुतेः ॥ ५९ ॥

जालान्तरेति । ( अन्या ) स्त्री ( जलान्तरप्रेषितदृष्टिः ) गवाक्षमध्यप्रसारितदृष्टिः सती प्रस्थानेन गमनेन भिन्नां त्रुटितां (प्रस्थानभिन्नां नीवीं) वस्त्रग्रन्थिम् । नीवी परिपणे ग्रन्थौ स्त्रीणां

अर्द्धाचिता सत्वरमुत्थिताया-
पदे पदे दुर्निमिते गलन्ती ।
कस्याश्चिदासीद्रशना तदानी-
मङ्गुष्ठमूलार्पितसूत्रशेषा ॥ ६१ ॥
तासां मुखैरासवगन्धगर्भै-
र्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।
विलोलनेत्रभ्रमरैर्गवाक्षाः
सहस्रपत्राभरणा इवासन् ॥ ६२ ॥

जघनवाससीति विश्वः । (न बबन्ध) नाबध्नात् । किन्तु नाभिं प्रविष्टा आभरणानां किङ्किणीनां प्रभा यस्य तेन (नाभिप्रविष्टाभरणप्रभेण) । प्रभैव नाभेरावरणमभूदिति भावः । हस्तेन वासोऽवलम्ब्य) धृत्वा (तस्थौ ॥ ६० ॥

अर्द्धेति । (सत्वरं) सवेगं (उत्थितायाः कस्याश्चित्) अर्द्धमाचिता मणिभिर्गुम्फिता (अर्द्धाचिता दुर्निमिते) संभ्रमात् दुःखेन निक्षिप्ते डु मिञ् प्रक्षेपण इति धातोः कर्म्मणि क्तः । (पदे पदे) प्रतिपदं वीप्सायां द्विर्भावः । (गलन्ती) गलद्रत्ना सती (रशना) मेखला (तदानीं) तस्मिन्नवसरे अङ्गुष्ठमूले अर्पितं लगितं सूत्रमेव शेषो यस्याः सा (अङ्गुष्ठमूलार्पितसूत्रशेषा) आसीत् ॥ ६१ ॥

तासामिति । तदानीं (सान्द्रकुतूहलानां तासां) स्त्रीणाम् आसवगन्धो गर्भे येषां तैः (आसवगन्धगर्भैः) विलोलानि नेत्राण्येव भ्रमराः येषु तैः (विलोलनेत्रभ्रमरैः मुखैर्व्याप्तान्तराः) छन्नावकाशाः (गवाक्षाः सहस्रपत्राभरणा इवासन्) कमलालङ्कृता इव स्थिता इत्यर्थः ॥ ६२ ॥

तावत् पताकाकुलमिन्दुमौलि-
रुत्तोरणं राजपथं प्रपेदे ।
प्रासादशृङ्गाणि दिवापि कुर्व्वन्
ज्योत्स्नाभिषेकद्विगुणद्युतीनि ॥ ६३ ॥

तमेकदृश्यं नयनैः पिवन्त्यो
नार्य्यो न जग्मुर्विषयान्तराणि ।
तथाहि शेषेन्द्रियवृत्तिरासां
सर्व्वात्मना चक्षुरिव प्रविष्टा ॥ ६४ ॥

तावदिति । (तावत्) तस्मिन्नवसरे (इन्दुमौलिः) ईश्वरः (दिवापि प्रासादशृङ्गाणि) ज्योत्स्नाभिरभिषेकेण स्नपनेन द्विगुणद्युतीनि (ज्योत्स्नाभिषेकद्विगुणद्युतीनि) द्विरावृत्तकान्तीनि गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुष्विति वैजयन्ती । (कुर्व्वन्) पताकाभिराकुलं (पताकाकुलं व्याकीर्णम् (उत्तोरणम्) उच्छ्रिततोरणं (राजपथं प्रपेदे) ॥ ६३ ॥

तमिति । एकएव दृश्यो दर्शनीयः तम् (एकदृश्यं तं) ईश्वरं (नयनैः पिवन्त्यः) अतितृष्णया पश्यन्त्य इत्यर्थः । ताः शङ्करं दृष्टिभिरापिवन्त्यः इति वा पाठः । (नार्य्यौ विषयान्तराणि) ततोऽन्यान्विषयान् शब्दादीनित्यर्थः । (न जग्मुः) न विदुरित्यर्थः । (तथाहि आसां) नारीणां (शेषेन्द्रियवृत्तिः) श्रोत्रादिप्रवृत्तिः (सर्व्वात्मना) स्वरूपकार्त्स्न्येन (चक्षुः प्रविष्टेव) श्रोत्रादीनीन्द्रियाणि स्वातन्त्र्येण ग्रहणाशक्तेश्चक्षुरेव प्रविश्य कौतुकात् स्वयमप्येनमुपलभन्ते किम् । अन्यथा स्वस्वविषयाधिगमः किं न स्यादिति भावः ॥ ६४ ॥

स्थाने तपो दुश्चरमेतदर्थ-
मपर्णया पेलवयापि तप्तम्।
या दास्यमप्यस्य लभेत नारी
सा स्यात् कृतार्था किमुताङ्कशय्याम्॥६५॥

परस्परेण स्पृहणीयशोभं
न चेदिदं द्वन्द्वमयोजयिष्यत्।
अस्मिन् द्वये रूपविधानयत्नः
पत्युः प्रजानां विफलोऽभविष्यत्॥ ६६ ॥

अथ पौराङ्गनावचनान्याह

स्थान इति। (पेलवया) कोमलयापि (अपर्णया) पार्व्वत्या एतस्मै शिवाय इदम् (एतदर्थम्) अर्थेन सह नित्यसमासः सर्व्व-लिङ्गता चेति विशेष्यनिघ्नत्वम्। (दुश्चरं तपस्तप्तं स्थाने) युक्तम्। कुतः (या नारी अस्य) ईश्वरस्य (दास्यं) दासीत्वं (अपि लभेत सा कृतार्था स्यात्)। या अङ्क एव शय्या तां (अङ्कशय्यां लभेत सा किमुत) कृतार्थेति किमु वक्तव्यमित्यर्थः॥ ६५॥

परस्परेणेति। (स्पृहणीयशोभं) सर्व्वैराशास्यमानसौन्दर्य्यम् (इदं द्वन्द्वं) मिथुनम्। द्वन्द्वरहस्येत्यादिना निपातः (१)। (परस्परेण नायोजयिष्यत्) न योजयेद्यदि (प्रजानां पत्युः) विधातुः (अस्मिन् द्वये) द्वन्द्वे रूपविधाने सौन्दर्य्यनिर्म्माणे यत्नः (रूपविधानयत्नः) प्रयासो (विफलोऽभविष्यत्) भवेत्। एतदनुरूपस्त्री-पुंसान्तराभावादिति भावः। लिङ्निमित्ते लृङ् क्रियातिपत्ताविति लृङ् (२)॥ ६६॥

(१) पा० ८। १। १५ सू०। (२) पा० ३। ३। १३९ सू०।

न नूनमारूढरुषा शरीर-
मनेन दग्धं कुसुमायुधस्य ।
व्रीड़ादमुं देवमुदीक्ष्य मन्ये
सन्न्यस्तदेहः स्वयमेव कामः ॥ ६७ ॥

अनेन सम्बन्धमुपेत्य दिष्ट्या
मनोरथप्रार्थितमीश्वरेण ।
मूर्द्धानमालि ! क्षितिधारणोच्च-
मुच्चैस्तरं वक्ष्यति शैलराजः ॥ ६८ ॥

नेति । (आरूढरुषा) प्ररूढकोपेन (अनेन) हरेण) कुसुमायुधस्य ) कामस्य ( शरीरं न दग्धं नूनं ) किन्तु ( कामः अमुं देवमुदीक्ष्य ) दृष्ट्वा ( व्रीडात् ) सौन्दर्य्येण जितोऽस्मीति लज्जया ( स्वयमेव सन्न्यस्तदेहः ) त्यक्तदेह इति ( मन्ये ) इत्युत्प्रेक्षा । नास्य आकृतेः कोपः सम्भवतीति भावः ॥ ६७ ॥

काचित्काश्चिदाह

अनेनेति । हे ( आलि ) ! सखि ! आलिः सखी वयस्या चेत्यमरः । ( शैलराजः ) हिमवान् ( दिष्ट्या ) इत्यानन्देऽव्ययम् । मनोरथैः प्रार्थितमवरुद्धम् ( मनोरथप्रार्थितं ) अभिलाषविषयीकृतमित्यर्थः । प्रार्थना याच्ञावरोधयोरित्यभिधानात् । (अनेन) ईश्वरेण ( सम्बन्धमुपेत्य ) अवाप्य क्षितिधारणेनोच्चमुन्नतं ( क्षितिधारणोच्चं मूर्द्धानमुच्चैस्तरम् ) उन्नततरम् । उच्चैरित्यव्ययात्तरप्प्रत्ययः । मूर्द्ध्नौ ह्यत्वान्नामुप्रत्ययान्तोः निपातः । किमे-

इत्योषधिप्रस्थविलासिनीनां
शृण्वन् कथाः श्रोत्रसुखास्त्रिनेत्रः।
केयूरचूर्णीकृतलाजमुष्टिं
हिमालयस्यालयमाससाद ॥ ६९ ॥

तत्रावतीर्य्याच्युतदत्तहस्तः
शरद्घनाद्दीधितिमानिवोक्ष्णः।
क्रान्तानि पूर्व्वं कमलासनेन
कक्ष्यान्तराण्यद्रिपतेर्विवेश ॥ ७० ॥

त्तिङव्ययघादाम्वद्व्यप्रकर्षे इत्यादिना (१) अद्रव्यप्रकर्षे तस्य विधानादिति। (वक्ष्यति) धारयति। वहतेर्लृट्॥ ६८॥

इतीति। (त्रिनेत्रः) त्र्यम्बकः त्रिनेत्रत्रिनयनशब्दयोः क्षुम्नादिषु चेति णत्वाभावः (२)। (इति) इत्थम् (ओषधिप्रस्थविलासिनीनां) सम्बन्धिनीः (श्रोत्रसुखाः) श्रवणमधुराः (कथाः) आलापान् (शृण्वन्) केयूरैरङ्गदैश्चूर्णीकृताः लाजानां मुष्टयो यस्मिन् तं तथोक्तं (केयूरचूर्णीकृतलाजमुष्टिम्)। तत्रावकीर्णा आचारलाजाः अन्तराल एवाङ्गदैः चूर्णपेषं पिष्यन्त इति पुरन्ध्रिजनसम्बन्धातिशयोक्तिः। (हिमालयस्य) हिमवतः (आलयं) भवनं (आससाद)॥ ६९॥

तत्रेति। (तत्र) हिमवदालये अच्युतेन विष्णुना दत्तहस्तः वत्तीर्णहस्तावलम्बः (अच्युतदत्तहस्तः) सन् (शरद्घनात्) शरन्मेघात् शरदिशेषणान्मेघस्य शुभ्रत्वं गम्यते। (दीधितिमान्) सूर्यः (इव उक्ष्णः) वृषात् (अवतीर्य्य कमलासनेन पूर्व्वं) अग्रे (क्रान्तानि)

(१) पा० ५। ४। ११ सू०। (२) पा० ८। ४। ३९ सू०।

तमन्वगिन्द्रप्रमुखाश्च देवाः
सप्तर्षिपूर्व्वाः परमर्षयश्च।
गणाश्च गिर्य्यालयमन्वगच्छन्
प्रशस्तमारम्भमिवोत्तमार्थाः ॥ ७१ ॥
तत्रेश्वरो विष्टरभाग्यथावत्
सरत्नमर्घं मधुमच्च गव्यम्।

प्रविष्टानि (अद्रिपतेः कक्ष्यान्तराणि) गेहप्रकोष्ठान्तराणि (विवेश)। कक्ष्या कक्षे वरत्रायां काञ्च्यां गेहप्रकोष्ठक इति यादवः ॥ ७० ॥

तमिति। (तं) ईश्वरम् (अन्वक्) अनुपदम् अव्ययमेतत्। अन्वगन्वक्षमनुगेऽनुपदं क्लीवमव्ययमित्यमरः। (इन्द्रप्रमुखा देवाश्च) सप्त ऋषयः पूर्व्वे येषान्ते (सप्तर्षिपूर्व्वाः)। न बहुव्रीहाविति (१) सर्व्वनामसंज्ञाप्रतिषेधः। (परमर्षयः सनकादिमहर्षयश्च। सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैरिति तत्पुरुषः (२)। (गणा) प्रमथाश्च (उत्तमार्थाः) महाप्रयोजनाः (प्रशस्तं) प्रकृष्टम् अमोघमित्यर्थः। आरभ्यत इत्यारम्भः उपायः (आरम्भमिव गिर्य्यालयं) हिमवन्मन्दिरम् (अन्वगच्छन्) प्राविशन्नित्यर्थः ॥ ७१ ॥

तत्रेति। (तत्र) हिमवदालये (ईश्वरो विष्टरभाक्) आसनगतः उपविष्ट इत्यर्थः। (यथावत्) यथार्हं विधिवदित्यर्थः। (सरत्नं) रत्नसहितम् (अर्घ्यम्) अर्घ्यार्थजलं मधु क्षौद्रमस्मिन्नस्तीति (मधुमत्) गवि भवं (गव्यं) दधि च मधुपर्कमित्यर्थः। दधिमधुनी सर्पिर्मध्वलाभ इति आश्वलायनगृह्यसूत्रात्। (नवे दुकूले) चेति

(१) पा० १।१।२९ सू०। (२) पा० २।१।६१ सू०।

नवे दुकूले च नगोपनीतं
प्रत्यग्रहीत् सर्व्वममन्त्रवर्ज्जम् ॥ ७२ ॥
दुकूलवासाः स बधूसमीपं
निन्ये विनीतैरवरोधदक्षैः ।
वेलासमीपं स्फुटफेनराजि-
र्नवैरुदन्वानिव चन्द्रपादैः ॥ ७३ ॥
तया प्रवृद्धाननचन्द्रकान्त्या
प्रफुल्लचक्षुःकुमुदः कुमार्य्या ।

( सर्व्वं नगोपनीतं ) हिमवदानीतम् अर्घ्यादिकं मन्त्रान् वर्ज्जयित्वा मन्त्रवर्ज्जं ततो नञ्समासः) अमन्त्रवर्ज्जं मन्त्रान् न वर्ज्जयित्वेत्यर्थः। द्वितीयायाञ्चेति णमुल्प्रत्ययः(१) इत्याह न्यासकारः अनुदात्तं पद-मेकवर्ज्जमित्यत्र । ( प्रत्यग्रहीत् ) स्वीकृतवान् ॥ ७२ ॥

दुकूलेति । अथ (दुकूलवासाः) दुकूलं वसान इत्यर्थः । (सः) हरः (विनीतैः) अनुद्धतैः अवरोधेषु ये दक्षाः तैः (अवरोधदक्षैः बधूसमीपं निन्ये ) नीतः । कथमिव स्फुटा फेनानां राजिर्यस्य सः (स्फुटफेनराजिः) उदकमस्यास्तीति (उदन्वान्) समुद्रः । उद-न्वानुदधौ चेति निपातनात्साधुः ( २ ) ( नवैः ) अचिरोदितैः (चन्द्रपादैः) चन्द्रकिरणैः (वेलासमीपमिव) ॥ ७३ ॥

तयेति । आननं चन्द्र इवेत्युपमितसमासः । प्रवृद्धा आनन-चन्द्रस्य कान्तिर्यस्यास्तया तथोक्तया ( प्रवृद्धचन्द्राननकान्त्या तया कुमार्य्या शरदा लोक इव संहृष्यमानः सङ्कुच्छमानः ( शिवः )

---

(१) पा० ८ । २ । ८७ सू० । (२) पा० ८ । २ । १३ सू० ।

प्रसन्नचेतःसलिलः शिवोऽभूत्
संसृज्यमानः शरदेव लोकः ॥ ७४ ॥
तयोः समापत्तिषु कातराणि
किञ्चिद्व्यवस्थापितसंहृतानि ।
ह्रीयन्त्रणां तत्क्षणमन्वभव-
न्नन्योन्यलोलानि विलोचनानि ॥ ७५ ॥
तस्याः करं शैलगुरूपनीतं
जग्राह ताम्राङ्गुलिमष्टमूर्त्तिः ।

चक्षूंसि कुमुदानीव तानि प्रफुल्लानि यस्य सः तथोक्तः ( प्रफुल्ल-चक्षुःकुमुदः) चेतः सलिलमिव तत् प्रसन्नं यस्य सः तथोक्तः ( प्रसन्न-चेतःसलिलोऽभूत् ) । शरल्लोकयोरपि यथोचितं विशेषणानि योज्यानि ॥ ७४ ॥

तयोरिति । ( तयोः ) बधूवरयोः ( समापत्तिषु ) यदृच्छया सङ्गतिषु ( कातराणि ) चकितानि । अधीरे कातर इत्यमरः । द्रष्टुमसमर्थानीति भावः । (किञ्चित्) ईषत् व्यवस्थापितानि स्थिरी-कृतानि पश्चात् संहृतानि निवर्त्तितानि चेति ( व्यवस्थापितसंहृ-तानि) । पूर्व्वकालेत्यादिना(१) तत्पुरुषः । अन्योन्यस्मिन् लोलानि ( अन्योन्यलोलानि ) सतृष्णानि लोलस्तलसतृष्णयोरित्यमरः । ( विलोचनानि ) दृष्टयः (तत्क्षणं) तस्मिन् क्षणे (ह्रीयन्त्रणां) ह्रिया निमित्तेन सङ्कोचम् (अन्वभूवन्) ॥ ७५ ॥

तस्या इति । ( अष्टमूर्त्तिः ) शिवः तस्मादीश्वराच्छङ्कत इति

(१) पा० २ । १ । ४९ सू० ।

उमातनौ गूढतनोः स्मरस्य
तच्छङ्किनः पूर्व्वमिव प्ररोहम् ॥ ७६ ॥
रोमोद्गमः प्रादुरभूदुमायाः
स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत् ।
वृत्तिस्तयोः पाणिसमागमेन
समं विभक्तेव मनोभवस्य ॥ ७७ ॥

(तच्छङ्किनः) तद्भीतस्येत्यर्थः अतएव (उमातनौ) उमाशरीरे (गूढ़-तनोः) गुप्तशरीरस्य (स्मरस्य पूर्व्वं प्ररोहमिव) प्रथमाङ्कुरमिव स्थितं (शैलगुरूपनीतं) शैलगुरुणा हिमवता उपनीतं प्रापितम् । अथवा शैलगुरुणा हिमवत्पुरोधसा उपनीतं (ताम्राङ्गुलिं) रक्ताङ्गुलिं (तस्याः) पार्व्वत्याः (करं जग्राह) ॥ ७६ ॥

रोमेति । (उमायाः रोमोद्गमः) रोमाञ्चः (प्रादुरभूत्) । पुमान् गौः पुङ्गवो वृषभः । गोरतद्धितलुकीति टच् (१) । सः केतुश्चिह्नं यस्य सः (पुङ्गवकेतुः) शिवः (स्विन्नाङ्गुलिरासीत्) । अत्रोत्प्रेक्ष्यते (पाणिसमागमेन) पाण्योः संस्पर्शेन कर्त्रा (तयोः) वधूवरयोः (मनोभवस्य वृत्तिः) अवस्थितिः (समं विभक्तेव) समीकृतेवेत्यर्थः । प्राक्सिद्धस्याप्यनुरागसाम्यस्य सम्प्रति तत्कार्य्यदर्शनात् पाणिसंस्पर्शकृतत्वमुत्प्रेक्ष्यते । ननु कन्या तु प्रथमसङ्गमे स्विन्नकरचरणा भवति पुमांस्तु रोमाञ्चितो भवतीति वात्स्यायनेन विपरीतमुक्तमिति चेत् नैष दोषः एभिरनयोर्भावं परीक्षेतेति वाक्यशेषे एभिरिति बहुवचनेन स्वेदरोमाञ्चग्रहणस्य सकलसात्त्विकोपलक्षणत्वावगमेन अनियमावधारणात् । अतएव रघु-

(१) पा० ५ । ४ । ९२ सू० ।

प्रयुक्तपाणिग्रहणं यदन्य-
द्वधूवरं पुष्यति कान्तिमग्र्याम्।
सान्निध्ययोगादनयोस्तदानीं
किं कथ्यते श्रीरुभयस्य तस्य ॥ ७८ ॥

प्रदक्षिणप्रक्रमणात् कृशानो-
रुदर्चिषस्तन्मिथुनं चकाशे।
मेरोरुपान्तेष्विव वर्त्तमान-
मन्योन्यसंसक्तमहस्त्रियामम् ॥ ७९ ॥

वंशे अन्यथाभिधानात् लोकविरोध इत्यपास्तम्। तदेतत् रघुवंशसञ्जीवन्यां सुव्यक्तमवोचम् सात्त्विकास्तु स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू। अश्रु वैस्वर्य्यमित्यष्टौ सात्त्विकाः परिकीर्त्तिता इति ॥ ७७ ॥

प्रयुक्तेति। (यत्) यस्मात्कारणात् प्रयुक्तं पाणिग्रहणं यस्य तत् तथोक्तं (प्रयुक्तपाणिग्रहणं)। (अन्यत्) लौकिकं वधूश्च वरश्च (वधूवरं) समाहारे द्वन्द्वे कवद्भावः। (तदानीं) पाणिग्रहणकाले (अनयोः) उमाशिवयोः (सान्निध्ययोगात्) सन्निधिभावात् (अग्र्यां) उत्तमां (कान्तिं) शोभां (पुष्यति) पुष्णाति (तस्योभयस्य) उमामहेश्वररूपस्य मिथुनस्य (श्रीः किं कथ्यते) यत्प्रसादादन्यस्य शोभालाभः तस्य शोभा किमु वक्तव्येत्यर्थः। विवाहसमये गौरीशिवौ वधूवरावनुप्रविशेतामित्यागमः ॥ ७८ ॥

प्रदक्षिणेति। (तन्मिथुनम् उदर्चिषः) उन्नतज्वालस्य (कृशानोः) वह्नेः (प्रदक्षिणप्रक्रमणात्) प्रदक्षिणीकरणात् (चकाशे)। किमिव (मेरोरुपान्तेषु) परिसरेषु (वर्त्तमानं) आवर्त्तमानं मेरुं प्रद-

तौ दम्पती त्रिः परिणीय वह्नि-
मन्योन्यसंस्पर्शनिमीलिताक्षौ ।
स कारयामास बधूं पुरोधा-
स्तस्मिन् समिद्धार्च्चिषि लाजमोक्षम् ॥८०॥
सा लाजधूमाञ्जलिमिष्टगन्धं
गुरूपदेशाद्वदनं निनाय ।
कपोलसंसर्पिशिखः स तस्या
मुहूर्त्तकर्णोत्पलतां प्रपेदे ॥ ८१ ॥

क्षिणीकुर्व्वदित्यर्थः । अन्योन्येन संसक्तं सङ्गतं (अन्योन्यसंसक्तं) मिथुनस्याप्येतत् विशेषणम् । अहश्च त्रियामा च (अहस्त्रियामं) रात्रिन्दिवं (इव) । समाहारे द्वन्द्वैकवद्भावः ॥ ७९ ॥

ताविति । (सः) पुरस्तादेव हितं विधत्ते इति (पुरोधाः) पुरोहितः अन्योन्यस्य संस्पर्शेन स्पर्शसुखेन निमीलिताक्षौ (अन्योन्यसंस्पर्शनिमीलिताक्षौ तौ) जाया च पतिश्च (दम्पती) कर्म्मभूतौ । जायाशब्दस्य दम्भावो निपातितः । (वह्निं त्रिः) त्रिवारम् । द्वित्रिचतुर्भ्यः सुजिति सुच् (१) । (परिणीय) परितो नीत्वा प्रदक्षिणीकार्य्येत्यर्थः । नयतेर्द्विकर्म्मकात्वात् (समिद्धार्च्चिषि) दीप्तज्वाले (तस्मिन्) वह्नौ (बधूं लाजमोक्षं) लाजविसर्गं (कारयामास) हृक्रोरन्यतरस्यामिति (२) विकल्पादणिकर्त्तुः कर्म्मत्वम् ॥८० ॥

सेति । (सा) बधूः गुरोः पुरोधसः उपदेशात् (गुरूपदेशात्) इष्टो घ्राणतर्पण इत्यर्थः गन्धो यस्य तं (इष्टगन्धं लाजधूमा-

(१) पा० ५ । ४ । १८ सू० । (२) पा० १। ४ । ५३ । सू० ।

तदीषदार्द्रारुणगण्डलेख-
मुच्छ्वासिकालाञ्जनरागमक्ष्णोः ।
वधूमुखं क्लान्तयवावतंस-
माचारधूमग्रहणाद्बभूव ॥ ८२ ॥

वधूं द्विजः प्राह तवैष वत्से !
वह्निर्विवाहं प्रति कर्म्मसाक्षी ।
शिवेन भर्त्रा सह धर्म्मचर्य्या
कार्य्या त्वया मुक्तविचारयेति ॥ ८३ ॥

ञ्जलिं वदनं निनाय । कपोलसंसर्पिणी शिखा यस्य सः तथोक्तः (कपोलसंसर्पिशिखः सः) धूमः (तस्याः) गौर्य्याः (मुहूर्त्तं कर्णोत्पलतां प्रपेदे) । धूमस्य विसृमरत्वात् मुहूर्त्तग्रहणम् ॥ ८१ ॥

तदिति । (तद्वधूमुखम् आचारधूमग्रहणात्) आचारप्राप्तधूमत्वात् ईषदार्द्रे खिन्ने अरुणे च गण्डलेखे गण्डस्थले यस्य तत् तथोक्तं (ईषदार्द्रारुणगण्डलेखं अक्ष्णोः) उच्छ्वासी उद्गच्छन् कालाञ्जनस्य रागो रञ्जनं यस्य तत् तथोक्तं (उच्छ्वासिकालाञ्जनरागं) क्लान्तो यवावतंसो यवाङ्कुरकर्णपूरो यस्य तत् (क्लान्तयवावतंसं बभूव) । लाजाञ्जलिं विसृज्य धूमाग्रं जिघ्रेदिति प्रयोगवृत्तिकारः ॥ ८२ ॥

वधूमिति । अथ (वधूं द्विजः) पुरोधाः (प्राह) । किमिति हे (वत्से ! एषः वह्निः तव विवाहं प्रति) विवाहकर्म्मणीत्यर्थः । (कर्म्मसाक्षी) कर्म्मद्रष्टा (भर्त्रा शिवेन सह मुक्तविचारया) निर्विचारया (त्वया धर्म्मचर्य्या) धर्म्माचरणं (कार्य्या) कर्त्तव्येति । अयञ्च प्राजापत्यविवाहो द्रष्टव्यः । यथाह आश्वलायनः सहधर्म्मञ्चरेदिति प्राजापत्य इति ॥ ८३ ॥

आलोचनान्तं श्रवणे वितत्य
पीतं गुरोस्तद्वचनं भवान्या।
निदाघकालोल्वणतापयेव
माहेन्द्रमम्भः प्रथमं पृथिव्या॥ ८४॥
ध्रुवेण भर्त्रा ध्रुवदर्शनाय
प्रयुज्यमाना प्रियदर्शनेन।
सा दृष्ट इत्याननमुन्नमय्य
ह्रीसन्नकण्ठी कथमप्युवाच॥ ८५॥

आलोचनान्तमिति। भवस्य पत्न्या (भवान्या)। इन्द्रवरुण-भवशर्व्वरुद्रेत्यादिना ङीप् आनुगागमश्च (१)। (आलोचनान्तं) नेत्रान्तपर्य्यन्तम् आङ्मर्य्यादाभिविध्यो इत्यव्ययीभावः(२)। (श्रवणे) श्रोत्रे (वितत्य) विस्तार्य्य (तत् पूर्व्वोक्तं (गुरोः) याज्ञिकस्य (वचनं) सह धर्म्मं चरेति वाक्यं निदाघकाले ग्रीष्मकाले उल्वणतापया (निदाघकालोल्वणतापयेव) उत्कटसन्तापया (पृथिव्या प्रथमं) आद्यं (माहेन्द्रं) पार्ज्जन्यं (अम्भ इव पीतम्) अत्यादरेण शुश्राव-त्यर्थः॥ ८४॥

ध्रुवेणेति। प्रियं दर्शनं यस्य कर्म्मभूतस्य तेन (प्रियदर्शनेन ध्रुवेण) शाश्वतेन (भर्त्रा) ध्रुवस्य नक्षत्रविशेषस्य दर्शनाय (ध्रुव-दर्शनाय)। ध्रुवो भभेदे क्लीवन्तु निश्चिते शाश्वते त्रिष्विन्यमरः। (प्रयुज्यमाना) दृश्यतामिति प्रेर्य्यमाणा (ह्रीसन्नकण्ठी) ह्रिया हीन-स्वरा (सा) वधूः (कथमपि आननमुन्नमय्य दृष्ट इत्युवाच)॥८५॥

(१) पा० ४।१।४९ सू०। (२) पा० २।१।१३ सू०।

इत्थं विधिज्ञेन पुरोहितेन
प्रयुक्तपाणिग्रहणोपचारौ ।
प्रणेमतुस्तौ पितरौ प्रजानां
पद्मासनस्थाय पितामहाय ॥ ८६ ॥
वधूर्विधात्रा प्रतिनन्द्यते स्म
कल्याणि वीरप्रसवा भवेति ।
वाचस्पतिः सन्नपि सोऽष्टमूर्त्तौ
त्वाशास्यचिन्तास्तिमितो बभूव ॥ ८७ ॥

इत्थमिति । (इत्थं) अनेन प्रकारेण । इदमतस्थमुरिति (१) थमुप्रत्ययः । (विधिज्ञेन) विवाहप्रयोगज्ञेन शास्त्रज्ञेनेत्यर्थः । (पुरोहितेन) हैमवतेन (प्रयुक्तपाणिग्रहणोपचारौ) कृतविवाहकर्म्माणौ (प्रजानां पितरौ तौ) उमामहेश्वरौ (पद्मासनस्थाय) पद्मासनोपविष्टाय पितॄणां पित्रे (पितामहाय) ब्रह्मणे । पितामहो विरिञ्चौ स्यात्तातस्य जनकेऽपि चेति विश्वः । पितृव्यमातुलमातामहपितामहा इति निपातनात्साधुः (२) । (प्रणेमतुः) नमस्चक्रतुः । पितामहः पित्रोरपि पूज्य इति भावः ॥ ८६ ॥

वधूरिति । (वधूः) कन्या (विधात्रा) ब्रह्मणा हे (कल्याणि) ! शोभने ! वीरः प्रसवोऽपत्यं यस्याः सा (वीरप्रसवा) वीरसूः (भवेति प्रतिनन्द्यते स्म) आशिषमुक्तेत्यर्थः । (सः) विधाता (वाच-

(१) पा० ५ । ३ । २४ सू० ।
(२) पा० ४ । २ । ३६ सू० ।

क्लृप्तोपचारां चतुरस्रवेदीं
तावेत्य पश्चात् कनकासनस्थौ ।
जायापती लौकिकमेषणीय-
माद्रीक्षतारोपणमन्वभूताम् ॥ ८८ ॥
पत्रान्तलग्नैर्जलबिन्दुजालै-
राकृष्टमुक्ताफलजालशोभम् ।
तयोरुपर्य्यायतनालदण्ड-
माधत्त लक्ष्मीः कमलातपत्रम् ॥ ८९ ॥

स्पतिः) वागीश्वरः (अपि सन् । कस्कादिषु पाठात्साधुः(१) । (अष्ट-मूर्त्तौ ) शिवे तु आशास्यम् आकाङ्क्ष्य तत्र चिन्ता विचारः तस्यां स्तिमितो मन्दः (आश्वस्यचिन्तास्तिमितो बभूव) । (तस्य निरीह-स्याशास्याभावादाशिषि स्तिमितत्वमित्यर्थः ॥ ८७ ॥

क्लृप्तेति । ( तौ जायापती ) बधूवरौ (पश्चात्) नमस्कारानन्तरं क्लृप्ता रचिता उपचाराः पुष्परचनादयो यस्यां तां (क्लृप्तोपचारां चतुरस्रवेदीम् एत्य) प्राप्य (कनकासनस्थौ) सन्तौ (लौकिकं) लोके विदितम् आचारप्राप्तमित्यर्थः अतएव ( एषणीयम् ) आशास्यम् । तथापि लौकिकाचारं मनसापि न लङ्घयेदिति शास्त्रादवश्यकर्त्तव्य-मित्यर्थः । इषेरिच्छार्थादनीयः प्रत्ययः । ( आर्द्राक्षतारोपणम् अन्वभूताम् ) ॥ ८८ ॥

पत्रान्तेति । (लक्ष्मीः ) श्रीदेवी पत्रान्तेषु दलप्रान्तेषु लग्नैः ( पत्रान्तलग्नैर्जलबिन्दुजालैः ) आकृष्टा आहृता मुक्ताफलजालेन प्रान्तलम्बिना मुक्ताकलापेन या शोभा सा येन तत् तथोक्तं

(१) पा० ८ । ३ । ४८ सू० ।

द्विधा प्रयुक्तेन च वाङ्मयेन
सरस्वती तन्मिथुनं नुनाव।
संस्कारपूतेन वरं वरेण्यं
वधूं सुखग्राह्यनिबन्धनेन ॥ ९० ॥
तौ सन्धिषु व्यञ्जितवृत्तिभेदं
रसान्तरेषु प्रतिबद्धरागम्।

(आकृष्टमुक्ताफलजालशोभं) आयतं दीर्घं नालमेव दण्डो यस्य तत् (आयतनालदण्डं कमलमेवातपत्रं) तत् (तयोः उपरि आधत्त) दधौ ॥ ८९ ॥

द्विधेति। अथ (सरस्वती) वाग्देवी (द्विधा) संस्कृतप्राकृतरूपेण द्वैविध्येन (प्रयुक्तेन) उच्चारितेन (वाङ्मयेन) शब्दजालेन (तन्मिथुनं नुनाव)(तुष्टाव। नु स्तुताविति धातोर्लिट्। केन कमित्याह संस्कारेति संस्कारेण शास्त्रव्युत्पत्त्या पूतेन (संस्कारपूतेन) प्रकृतिप्रत्ययविभागशुद्धेन संस्कृतेनेत्यर्थः। वरेण्यं वरणीयं श्लाघ्यमित्यर्थः। वृणोतेरौणादिक एण्यप्रत्ययः। (वरं) वोढारं शिवम् सुखेन ग्राह्यं सुखग्राह्यं सुबोधं निबन्धनं रचना यस्य तेन (सुखग्राह्यनिबन्धनेन) वाङ्मयेन प्राकृतभाषयेत्यर्थः। (वधूं) नुनावेत्यनेन सम्बन्धः ॥ ९० ॥

ताविति। (तौ) दम्पती (सन्धिषु) मुखादिनिर्वहणान्तेषु पञ्चसन्धिषु। तदुक्तं दशरूपके। मुखं प्रतिमुखं गर्भः सावमर्षोपसंहृतिरिति। (व्यञ्जितवृत्तिभेदं) स्फुटीकृतकौशिक्यादिवृत्तिविशेषं रसानुगुण्येनेति शेषः। तदुक्तं भूपालेन कौशिकी स्यात्तु शृङ्गारे रसे वीरे तु सात्वती। रौद्रवीभत्सयोर्वृत्तिर्नियतारभटी पुनः।

अपश्यतामप्सरसां मुहूर्त्तं
प्रयोगमाद्यं ललिताङ्गहारम् ॥ ९१ ॥
देवास्तदन्ते हरमूढभार्य्यं
किरीटबद्धाञ्जलयो निपत्य।

शृङ्गारादिषु सर्व्वेषु रसेष्विष्टा तु भारती। तथा। कौशिक्यारभटी चैव सात्वती भारती तथा। चतस्रो वृत्तयो ज्ञेयास्तासु नाट्यं प्रतिष्ठितमिति। (रसान्तरेषु) शृङ्गारादिरसभेदेषु शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रस इत्यमरः। शृङ्गारहास्यकरुणरौद्रवीरभयानकाः। वीभत्साद्भुतशान्ताख्या रसाः पूर्व्वैरुदाहृता इति। (प्रतिबद्धरागं) प्रतिनियमेन प्रवर्त्तितवसन्तललितादिरागो यस्मिन् तं यस्मिन् रसे यो रागो विहितस्तदनुसारेण प्रयुक्तरागमित्यर्थः। यथाह काहलः। रौद्रेऽद्भुते तथा वीरे पुंरागेण प्रगीयते। शृङ्गारहास्यकरुणाः स्त्रीरागेण प्रकीर्त्तिताः। भयानके च वीभत्से शान्ते गेयो नपुंसक इति। (ललिताङ्गहारं) मधुराङ्गविक्षेपम्। अङ्गहारोऽङ्गविक्षेप इत्यमरः। आदौ भवं (आद्यं) रूपकान्तरप्रकृतिभूतमित्यर्थः। तदुक्तम्। आहुः प्रकरणादीनां नाटकं प्रकृतिं बुधा इति। (अप्सरसां) उर्व्वश्यादीनां प्रयुज्यत इति प्रयोगो रूपकं नाटकमित्यर्थः आद्यमिति विशेषणात्। तं (प्रयोगं मुहूर्त्तमपश्यतां दृष्टवन्तौ। पाघ्राध्मास्थेत्यादिना दृशेः पश्यादेशः (१) ॥ ९१ ॥

देवा इति। (देवाः) इन्द्रादयः (तदन्ते) तस्य प्रयोगदर्शनस्यान्ते अवसाने (ऊढभार्य्यं) परिणीतदारं (हरं) किरीटेषु बद्धाः

---

(१) पा० ७। ३। ७८ सू०।

शापावसाने प्रतिपन्नमूर्त्ते-
र्ययाचिरे पञ्चशरस्य सेवाम्॥ ९२॥
तस्यानुमेने भगवान् विमन्यु-
र्व्यापारमात्मन्यपि सायकानाम्।
कालप्रयुक्ता खलु कार्य्यविद्भि-
र्विज्ञापना भर्त्तृषु सिद्धिमेति॥ ९३॥
अथ विबुधगणांस्तानिन्दुमौलिर्विसृज्य
क्षितिधरपतिकन्यामाददानः करेण।

अञ्जलयो येषान्ते तथोक्ताः (किरीटबद्धाञ्जलयः) सन्तः (निपत्य) प्रणम्य (शापावसाने प्रतिपन्नमूर्त्तेः) लब्धशरीरस्य परिणेष्यति पार्व्वतीं यदेत्यादिना शापस्य पार्व्वतीपरिणयान्तत्वादित्यर्थः। (पञ्चशरस्य) कामस्य कर्त्तुः (सेवां ययाचिरे) पुनः समासादितशरीरस्य तस्य सेवा स्वीक्रियतामिति प्रार्थयामासुरित्यर्थः। दुह्याच्पचित्यादिना द्विकर्म्मकत्वम्॥ ९२॥

तस्येति। (विमन्युः) विगतक्रोधः (भगवान्) ईश्वरः (आत्मन्यपि तस्य) कामस्य (सायकानां व्यापारमनुमेने)। तथाहि (कार्य्यविद्भिः) कार्य्यज्ञैः अथवा कालविद्भिः अवसरज्ञैः काले योग्यावसरे प्रयुक्ता अनुष्ठिता (कालप्रयुक्ता भर्त्तृषु) स्वामिषु विषये (विज्ञापना सिद्धिमेति खलु) सफला भवतीत्यर्थः। अयमेवास्य स्मरसेवास्वीकारः यदात्मन्यपि तत्सायकव्यापारमङ्गीकृतवानिति॥ ९३॥

अथेति। (अथेन्दुमौलिः) ईश्वरः (तान् विबुधगणान् विसृज्य क्षितिधरपतिकन्यां) पार्व्वतीं (करेण आददानः कनककलशयुक्तं)

कनककलशयुक्तं भक्तिशोभासनाथं
क्षितिविरचितशय्यं कौतुकागारमागात् ॥९४॥
नवपरिणयलज्जाभूषणां तत्र गौरीं
वदनमपहरन्तीं तत्कृताक्षेपमीशः ।

मङ्गलार्थमन्तर्निहितहेममयपूर्णकुम्भं भक्तयः पुष्पादिरचनाः तासां शोभया सनाथं सहितं (भक्तिशोभासनाथं)। (क्षितिविरचितशय्यं) क्षितिविरचिता स्थण्डिलकल्पिता शय्या तल्पं यस्मिन् तत्तथोक्तम्। (कौतुकागारमागात्) शय्यागृहं जगाम। अत्राश्वलायनः। अत ऊर्द्ध्वमक्षारलवणाशिनावधःशायिनौ ब्रह्मचारिणौ स्यातामिति। अत ऊर्द्ध्वं विवाहादूर्द्धम् आ त्रिरात्रादिति शेषः त्रिरात्रं द्वादशरात्रं वेति वचनात्। तथा कामशास्त्रेऽपि। अथ परिणयरात्रौ प्रक्रमेणैव किञ्चित्तिसृषु च रजनीषु लब्धभावा दुनोति। त्रिदिनमिह न भिन्द्याद्ब्रह्मचर्य्यं न चास्या हृदयमननुरुध्य स्वेच्छया नर्म्म कुर्य्यात् ॥ ९४ ॥

नवेति। (तत्र) कौतुकागारे (ईशः) ईश्वरः नवपरिणयेन नवोद्वाहेन या लज्जा सा भूषणं यस्यास्ताम् (नवपरिणयलज्जाभूषणां) अतएव तेनेश्वरेण कृताक्षेपं (तत्कृताक्षेपं) कृताकर्षणम् उन्नमितमिति यावत् (वदनमपहरन्तीं) साचीकुर्व्वतीम् अयं लज्जानुभावः। अनुभावान्तरमाह। (शयनसखीभ्योऽपि) शयने सहशायिनीभ्योऽपि नर्म्मसहचरीभ्योऽपीत्यर्थः। (कथञ्चित्) कृच्छ्रेण (दत्तवाचं) दत्तोत्तरां (गौरीं) प्रथमाः भृङ्गिकिरीटिप्रभृतयः

अपि शयनसखीभ्यो दत्तवाचं कथञ्चित्
प्रमथमुखविकारैर्हासयामास गूढम् ॥ ९५ ॥

इति श्रीकालिदासकृतौ कुमारसम्भवे
महाकाव्ये उमापरिणयो नाम
सप्तमः सर्गः ।

हास्यरसाधिदेवताः पशुपतेः पारिषदाः । यथाह भरतः । शृङ्गारो विष्णुदैवत्यो हास्यः प्रमथदैवत इति । प्रमथाः स्युः पारिषदा इत्यमरः । तेषां मुखविकारैः (प्रमथमुखविकारैः) मुखविकृतचेष्टितैः (गूढम्) अप्रकाशं (हासयामास) हासाद्युपायैर्लज्जामपाकर्तुं प्रवृत्त इत्यर्थः । यथाह गोनर्दः । हासेन मधुना नर्मवचसा लज्जितां प्रियाम् । विलुप्तलज्जां कुर्वीत निपुणैश्च सखीजनैरिति ॥ ९५ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां
सप्तमः सर्गः ।

---

# कुमारसम्भवम् ।

———

अष्टमसर्गावधिसप्तदशसर्गपर्य्यन्तम् ।

## महाकवि-श्रीकालिदास-प्रणीतम् ।

बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितव्याख्यया समलङ्कृतम् ।



चतुर्थसंस्करणम् ।


कलिकातानगर्य्यां

सरस्वतीयन्त्रे

मुद्रितम् ।

ई १८८७ ।

# विज्ञापनम् ।

—०—

अष्टमसर्गावधिसप्तदशसर्गपर्य्यन्तस्य अस्योत्तरभागस्य एतद्देशे प्रायशोऽनुपलम्भात्, तद्व्याख्यातृभिश्च प्रामाणिकैः कैश्चिदप्यव्याख्यानात् सप्तमसर्गान्तमेव कुमारसम्भवं काव्यमिति बहुभिरुच्यते। किन्तु १८८४ संवत्सरे मार्शलसाहेबेन दाक्षिणात्यदेशादेकं पुस्तकमाहृतं तत्पुस्तकञ्च काशीविद्यासुधानिधिसभासदैरितोनीत्वा स्वदेशीयपुस्तकेन सह संवाद्य काशीविद्यासुधानिधि पत्रे एतत् मुद्रितमासीत्। एतस्य रघुवंशकृत्कालिदासप्रणीतत्वाप्रणीतत्वाख्यां सन्देहे यद्यपि विट्ठलशास्त्रिणैव निरणायि। तथापि ततोऽतिरिक्तहेतुप्रदर्शनेनैतस्य रघुवंशकृत्कालिदासप्रणीतत्वं निर्णीयते। तथाहि यदि तेन कविचूड़ामणिना अन्यान्यखण्डकाव्यवत् सप्तमसर्गान्तमेवेदं प्रणीतं स्यात् नाधिकं तदा एतस्य कुमारसम्भवनामभागिता न स्यात् प्रत्युत शिवविवाहाभिधेयभागिता स्यात् तावता ग्रन्थेन शिवविवाहपर्य्यन्तस्यैव वर्णनात्। किञ्च सप्तमसर्गान्ते "कौतुकागारमागात्" इत्यभिदधानेन कविना तदुत्तरं तत्स्थाने वर्णनीयमस्तीत्युपक्षिप्तं तच्च तावत्पर्य्यन्तस्यैव ग्रन्थत्वेऽसङ्गतं स्यात्। तथा द्वितीयसर्गे तारकवधोपायज्ञानार्थमेव देवानां ब्रह्मसन्निधाने गमनेन तारकवध एव ग्रन्थस्य प्रधानफलतया वर्णनीय इत्यपि तत्सर्गालोकनेन प्रतिभाति। तस्यावर्णनीयत्वे शिवविवाहोपयोगिन्येव कथा देवैः प्रस्ताविता स्यात्। किञ्च तस्य महाकाव्यता सर्वैः व्याख्यातृभिरङ्गीकृता मल्लिनाथेन च "आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्" इति वस्तुनिर्देशरूपस्य महाकाव्यलक्षणस्याभिधानात् महाकाव्यस्य "सर्गैर्द्वादशभिर्युक्तमष्टादशभिरप्युते" तिद्वादशसर्गान्न्यूनत्वलक्षणप्रतिपादनाच्च तस्य सप्तमसर्गान्तत्वे मल्लिना-

यादिभिरुक्ता महाकाव्यताऽस्य कथङ्कारं स्यात्। एतत्काव्यस्य प्रतिसर्गान्ते च "इति कुमारसम्भवे महाकाव्ये इत्यादि लिखनं" प्रायशः सर्वत्र पुस्तकेषु दृश्यते। अतस्तस्य महाकाव्यतारक्षार्थमपि अष्टमसर्गाद्यवशेषभागित्वं प्रतीयते। एतेन भोजदेवीयकालिदासेन अन्येन वा केनचित् कृतमुत्तरखण्डमित्याचक्षाणा अपि परास्ताः। "काव्यं यशसेऽर्थकृते" इत्यादि शास्त्रैः स्वयशआद्यन्यतमाकाङ्क्षयैव कविभिः काव्यस्य प्रणयनात् "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते" इत्याद्यभियुक्तोक्तेश्च स्वप्रयोजनाभावे परकीययशःप्रख्यापनाय स्वकृतिं परकृतितया ख्यापयन्तः तत्काव्यरचने कथङ्कारं प्रवर्त्तेरन् कथं वा प्रेक्षावतामुपहास्यतां रचयितारो न गच्छेयुः। न च इतरस्य कवेर्नाम्ना ग्रन्थनिर्माणे किञ्चित् प्रयोजनं सिद्ध्येत् येन तदपेक्षमाणस्तथा प्रणयेत्। किन्तु इतरारब्धस्य ग्रन्थस्यासमाप्तौ कवेर्लोकान्तरगमने तत्सम्बन्धिनैव स्वनामख्यापनपुरःसरं सम्पूर्णता नीयते यथा कादम्बरीशेषभागस्य वाणकवेरुपरमे तत्पुत्रेण परिपूरणम्। न च भोजदेवकालिदासेन इतरेण वा तत्सम्बन्धिना भवितव्यमित्यत्र किञ्चित् प्रमाणमुपलभामहे नापि तथाकरणेऽपि तस्य स्वनामोल्लेखः क्वापि दृश्यते। न च मल्लिनाथादिभिरव्याख्यानादेषोक्तभागस्याप्रामाण्यम् बहूनामपि ग्रन्थानां तैरव्याख्यानादप्रामाण्यापत्तेः। तस्याव्याख्याने कारणञ्च विद्वलशास्त्रिणा यदुट्टङ्कितं तदपि भवितुमर्हति हरपार्वत्योः सम्भोगवर्णनस्य मातापित्रोरिवानास्वाद्यतया तथा वर्णनस्याष्टमे सत्त्वेन तत्रोपेक्षासम्भवात् तत उत्तरग्रन्थस्य तद्भागस्याव्याख्यानसम्भवाच्च। अतएव च कुमारसम्भवसमाख्यापि तत्र सूचिता भवोभूतिर्महिमेति नार्थान्तरं सम्यक् भवः महिमातिशयः कुमारस्य महामहिमा यत्रेति व्युत्पत्त्या तत्कृततारकवधरूपमहामहिमवर्णनादस्य कुमारसम्भवनामता प्रसिद्धा सप्तमसर्गान्तस्यैवैतत्काव्यत्वे तु शिवविवाहनामभागिता स्यादित्युक्तं प्राक् शिशुपालवधादिवत् तारकवधादिसंज्ञाभागित्वं नास्य शङ्कयितुं शक्यं सम्भवपदस्य तन्त्रोच्चारितन्यायेन उत्पत्तिमहिमातिशयरूपस्यार्थद्वयस्य उप-

न्यासार्थत्वेन कुमारस्योत्पत्तिमहिमातिशयरूपतारकवधरूपयोर्द्वयो-रर्थयोर्वर्णनीयतया शिशुपालवधादौ च तदुभयाभावान्न तद्वत्संज्ञा-प्रसक्तिरिति सुधीभिर्भाव्यम् ।

उणादिवृत्तौ उज्ज्वलदत्तेन भेरिशब्दस्य सुत्रान्तरे "रवः प्रगल्भाहतभेरिसम्भवः इति कुमारसम्भवः" इति वदता तत्पद्यस्य कुमार-सम्भवसम्बन्धित्वं प्रतिपादितं तस्य च एतत्खण्डीयचतुर्दशसर्गस्थ-द्वात्रिंशत्संख्यकश्लोकतया अस्य ग्रन्थस्य ततः प्राचीनत्वं प्रतीयते, प्रतीयते चास्य कालिदासकृतत्वं सिद्धान्तकौमुद्यां "शार्वरस्य तमसो निषिद्धये इति कालिदास इति लिखनात् । तस्य श्लोकस्य च एतदीयाष्टमसर्गस्याष्टचत्वारिंशत् संख्यकश्लोकत्वादतः सुव्यक्तमस्य कुमारसम्भवाभिधानत्वं कालिदासप्रणीतत्वञ्च ॥"

अस्मिंश्च खण्डे अष्टमे हरपार्वत्योः सम्भोगवर्णनं, सन्ध्यावर्णनञ्च, नवमे तयोः सम्भोगस्यानेककालिकतया कुमारोत्पत्तौ विलम्बाधिक्य-माशङ्क्य तारकवधाय त्वरमाणेन शक्रेण प्रेषितस्य वह्नेः शिवयोः सङ्गमस्थाने कपोतरूपेण प्रवेशवर्णनम्, तथा कपटरूपदर्शनेन क्रुद्धस्य शिवस्य वह्निना स्तुत्या कोपोपशमनवर्णनम्, स्तुत्या सन्तोषितं शिवं प्रति शक्रादेशकथनम्, शिवेन च कुमारोत्पत्तये वह्नौ स्ववीर्याधानवर्णनम्, वह्निं प्रति पार्वत्या अभिशापः, दशमे पुनस्तयोः सम्भोगवर्णनं, नानाविधकौतुकवर्णनञ्च । एकादशे शिववीर्यधारणा-क्षमेण वह्निना शक्रोपदेशेन गङ्गाम्भसि तत्तेजःसंक्रमणम् । तयापि तद्भरं वोढुमसहमानया कृत्तिकासु तस्य संक्रमणवर्णनम् ताभिरपि तस्य वीर्यस्य धारणासामर्थ्येन शरवणे त्यागे तत्रैव कुमारोत्पत्ति-वर्णनम् । द्वादशे शिवयोस्तद्दर्शनेन स्वात्मवीर्यजतया प्रत्यभिज्ञातस्य पुत्रत्वेन ग्रहणम्, कुमारस्य कैशोरलीलावर्णनम् । शक्रेण शिवसन्नि-धाने स्वाभिभवस्य वर्णनम्, तेन चानुकम्पिना शिवेन षड्दिनदे-शीयस्यापि पुत्रस्य सैनापत्यार्थे दानाङ्गीकरणम् । चतुर्दशे कुमारस्य सैनापत्याभिषेकवर्णनम् । पञ्चदशे युद्धार्थं सुरासुरसेनानिर्याण-वर्णनम् । षोडशे देवासुरसेनयोर्द्वन्द्वयुद्धवर्णनम् । सप्तदशे तार-

केण सह कुमारस्य युद्धवर्णनम्, तेन च तारकासुरस्य वधः, इन्द्रादीनां पुनः स्वस्वस्थानलाभ इत्येते पदार्था अत्र वर्णिताः।

नेपालदेशात् मया कुमारसम्भवस्य त्रीणि आदर्शपुस्तकानि अधिगतानि तेषां पाठान्तराणि सम्यक् विविच्य अष्टमसर्गावधि सप्तदशसर्गपर्य्यन्तं छात्राणां सुखबोधाय स्वरचितया व्याख्यया समलङ्कृत्य प्रकाशितम्।

श्रीजीवानन्दविद्यासागर-भट्टाचार्य्यस्य

---

# कुमारसम्भवम् ।

## उत्तरखण्डम् ।




## अष्टमः सर्गः ।

पाणिपीडनविधेरनन्तरं शैलराजदुहितुर्हरम्प्रति ।
भावसाध्वसपरिग्रहादभूत् कामदोहदमनोहरं वपुः ॥ १ ॥
व्याहृता प्रतिवचो न सन्दधे गन्तुमैच्छदवलम्बितांशुका ।

पाणीति । पाणिपीड़नविधेः विवाहविधानात् अनन्तरं परं शैलराजस्य हिमवतः दुहितुः पार्वत्या इत्यर्थः हरं प्रति भावः कामाभिलाषः कामजनितमनोविकारविशेषो वा साध्वसं भयं तयोः परिग्रहात् ग्रहणात् मुग्धत्वेन उभयोरपि आश्रयणादित्यर्थः भावः स्वभावेऽभिप्राये चेष्टासत्तात्मजन्मास्विति विश्वः । निर्विकारात्मके चित्ते भावः प्रथमविक्रियेति दर्पणः । भीतिर्भीः साध्वसं भयमित्यमरः । मुग्धालक्षणमुक्तं दर्पणे । प्रथमावतीर्णयौवनमदनविकारा रतौ वामा । कथिता मृदुश्च माने समधिकलज्जावती मुग्धेति । वपुः शरीरं कामदोहदेन मदनाभिलाषेण अथ दोहदमिच्छाकाङ्क्षेत्यमरः । मनोहरं मनःप्रीतिकरं बभूव । कामदोहदसुखं मनोहरमिति पाठे मनोहरं कामदोहदेन सुखमित्यर्थः । सर्गेऽस्मिन् रथोद्धतावृत्तं रान्नराविह रथोद्धता लगाविति तल्लक्षणात् । स्वभावोक्तिरलङ्कारः तदुक्तं दर्पणे । स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनमिति ॥ १ ॥

व्याहृतेति । सा पार्वती व्याहृता उक्ता हरेणेति शेषः व्याहार उक्तिर्लपितमित्यमरः । प्रतिवचः प्रत्युत्तरवचनं न सन्दधे न दत्तवती ।

सेवते स्म शयनं पराङ्मुखी सा तथापि रतये पिनाकिनः ॥२॥
कैतवेन शयिते कुतूहलात् पार्वती प्रति मुखं निपातितम् ।
चक्षुरुन्मिषति सस्मितम्प्रिये विद्युदाहत मिव न्यमीलयत् ॥३॥
नाभिदेशनिहितः सकम्पया शङ्करस्य रुरुधे तया करः ।
तद् दूकूलमथ चाभवत् स्वयं दूरमुच्छसितनीविबन्धनम् ॥४॥

अवलम्बितं धृतम् अंशुकं वसनं यस्याः तथाभूता सती गन्तुम् ऐच्छत् इच्छति स्म तथा पराङ्मुखी परिवर्त्तितवदना सती शयनं शय्यां सेवते स्म शय्यायामशेतेत्यर्थः। तथापि तादृशप्रतिकूलवर्त्तनेऽपीत्यर्थः पिनाकिनः हरस्य रतये प्रीतये बभूवेति शेषः। अत्रापि स्वभावोक्तिस्तथा अनेकक्रियासु एककर्त्तृत्वात् दीपकं तदुक्तम् अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते। अथ कारकमेकं स्यादनेकासु क्रियासु चेदिति दर्पणः ॥ २ ॥

कैतवेनेति। पार्वती कैतवेन कपटेन शयिते व्याजसुप्ते इत्यर्थः प्रिये हरे कुतूहलात् औत्सुक्यात् मुखं प्रियस्येति शेषः प्रति निपातितं निक्षिप्तं चक्षुः सस्मितं समन्दहासं यथातथा उन्मिषति नयनविकाशं कुर्वतोत्यर्थः तस्मिन्निति शेषः विद्युता आहतमिव प्रतिहतमिव न्यमीलयत् सङ्कोचमनयत् उत्प्रेक्षालङ्कारः भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परेण यदिति दर्पणः ॥ ३ ॥

नाभीति। तया पार्वत्या शङ्करस्य नाभिदेशे निहितः अर्पितः नीविमोचनार्थमिति भावः करः पाणिः, सकम्पया कम्पमानया सत्या रुरुधे प्रतिरुद्धः। अथ च तथापीत्यर्थः तस्याः पार्वत्या दुकूलं वसनं स्वयं दूरम् अत्यर्थम् उच्छ्वसितम् उद्घटितं नीविबन्धनं वसनग्रन्थिबन्धनं यस्य तथाभूतम् अभवत् सात्त्विकभावोदयादिति भावः। अत्र वसनरोधेऽपि तत् स्खलनात् विरोधालङ्कारः परिहारश्च सात्त्विकत्वात् उक्तञ्च विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वच इति ॥ ४ ॥

एवमालि निगृहीतसाध्वसं शङ्करो रहसि सेव्यतामिति ।
सा सखीभिरुपदिष्टमाकुला नास्मरत्प्रमुखवर्तिनि प्रिये ॥५॥

अप्यवस्तुनि कथाप्रवृत्तये प्रश्नतत्परमनङ्गशासनम् ।
वीक्षितेन परिवीक्ष्य पार्वती मूर्द्धकम्पमयमुत्तरं ददौ ॥ ६ ॥

शूलिनः करतलद्वयेन सा सन्निरुध्य नयने हृतांशुका ।
तस्य पश्यति ललाटलोचने मोघयत्नविधुरा रहस्यभूत् ॥७॥

एवमिति। सा पार्वती हे आलि ! सखि ! आली सखी वयस्येत्यमरः। निगृहीतं साध्वसं भयं यत्र तद् निर्भयं यथा तथेत्यर्थः रहसि विजने शङ्करः सेव्यतां परिचर्य्यताम् इति सखीभिः विजयादिभिः उपदिष्टं शिक्षितं प्रिये शङ्करे प्रमुखवर्त्तिनि सम्मुखीने सतीत्यर्थः आकुला सम्भ्रान्ता सती न अस्मरत् मुग्धभावमेवालम्बतेति फलितार्थः ॥ ५ ॥

अपीति। पार्वती अनङ्गशासनं मदनारिं शङ्करं कथायां सम्भाषणे प्रवृत्तये प्रवर्त्तनाय अवस्तुनि तुच्छवस्तुनि अपि प्रश्नतत्परं प्रिये किमेतदिति पृच्छन्तमपीत्यर्थः वीक्षितेन नेत्रेण परिवीक्ष्य सकृत् निरीक्ष्येत्यर्थः मूर्द्धकम्पमयं शिरश्चालनरूपमित्यर्थः उत्तरं न तु प्रतिवचनमिति भावः ददौ ॥ ६ ॥

शूलिन इति। रहसि विजने हृतांशुका अपनीतवसना रतार्थमिति भावः सा पार्वती करतलद्वयेन पाणियुगलेन शूलिनः हरस्य नयने सन्निरुध्य समाच्छाद्य तस्य हरस्य ललाटलोचने भालचक्षुषि तृतीयनेत्रे इत्यर्थः पश्यति सति मोघः निष्फलः यत्नः लज्जासंवरणे इति भावः। यस्मात्तथाभूता अतएव विधुरा व्याकुला अभूत्। अत्र तृतीयपादवाक्यस्य हेतुत्वेन कीर्त्तनात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। तदुक्तं दर्पणेन, हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति ॥ ७ ॥

चुम्बनेष्वधरदानवर्जितं खिन्नहस्तसदयोपगूहनम्।
क्लिष्टमन्मथमपि प्रियं प्रभो र्दुर्लभप्रतिकृतं वधूरतम् ॥८॥
यन्मुखग्रहणमक्षताधरं दानमव्रणपदन्नखस्य यत्।
यद्रतञ्च सदयं प्रियस्य तत् पार्वती विषहते स्म नेतरत् ॥९॥
रात्रिवृत्तमनुयोक्तुमुद्यतं सा प्रभातसमये सखीजनम्।
नाकरोदपकुतूहलं ह्रिया शंसितुन्तु हृदयेन तत्वरे ॥ १० ॥

चुम्बनेष्विति। चुम्बनेषु अधरदानेन अधरार्पणेन अथवा अधरखण्डनेन दो अवच्छेदे इत्यस्मादनट्प्रत्ययः वर्जितं रहितमपि खिन्नौ स्तनयोर्निर्दयमर्दनाभावेन दुःखितौ हस्तौ यत्र तादृशं सदयम् अगाढ़ं यथा तथा उपगूहनम् आलिङ्गनं यत्र तथोक्तञ्च, सन्नहस्तसदयोपगूहने इति पाठे अदयं निर्दयं गाढ़मित्यर्थः उपगूहने आलिङ्गने सन्नहस्तं शिथिलितपाणि अपीत्यर्थः अतएव क्लिष्टः खिन्नः अपरितोषादिति भावः मन्मथः कामो यस्मिन् तथाभूतं तथा दुर्लभं दुष्करं प्रतिकृतं प्रतीकारो यस्य बलात्कारणे रसाभासभियेति भावः तथाविधमपि वधूरतं प्रियासुरतं प्रभोः शङ्करस्य प्रियं प्रीतिजनकम् अभूदिति शेषः ॥ ८ ॥

यदिति। पार्वती प्रियस्य हरस्य हरस्येति पाठान्तरम् अक्षतः अदष्टः अधरो यत्र तादृशं यत् मुखग्रहणं मुखचुम्बनं नास्ति व्रणपदं क्षतचिह्नं यत्र तथाभूतं यत् नखस्य दानं नखक्षतमित्यर्थः तथा सदयं यत् रतं सुरतं तत् विषहते स्म, सेहे इतरत् दष्टाधरचुम्बनादिकमित्यर्थः न विषहते स्मेति शेषः ॥ ९ ॥

रात्रीति। सा पार्वती रात्रिवृत्तं रजनीवृत्तान्तं प्रियसङ्गविषयमिति भावः अनुयोक्तुं प्रष्टुमुद्यतं सखीजनं ह्रिया लज्जया अपगतं विनष्टं कुतूहलं कौतुकं रात्रिवृत्तश्रवणौत्सुक्यमित्यर्थः यस्य तथाभूतं न अकरोत् रात्रिवृत्तं नाकथयदिति भावः हृदयेन तु मनसा तु शंसितुं कथयितुं तत्वरे त्वरान्विता औत्सुक्यवती बभूवेत्यर्थः। अथवा हृदयेन कर्त्तृणा तत्वरे त्वरितं भावे लिट् ॥ १० ॥

दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः।
प्रेक्ष्य बिम्बमुपबिम्बमात्मनः कानि कानि न चकार लज्जया ११

नीलकण्ठपरिभुक्तयौवनां तां विलोक्य जननी समाश्वसत्।
भर्तृवल्लभतया हि मानसीं मातुरस्यति शुचं बधूजनः ॥१२॥

वासराणि कतिचित् कथञ्चन स्थाणुना रतमकारि चानया।
ज्ञातमन्मथरसा शनैः शनैः सा मुमोच रतिदुःखशीलताम् १३

दर्पण इति। किञ्चेति चार्थः। दर्पणे मुकुरे परिभोगदर्शिनी सम्भोगचिह्नप्रेक्षिणी सा पार्वती पृष्ठतः पृष्ठदेशे निषेदुषः स्थितस्य प्रणयिनः प्रियस्य हरस्य बिम्बं छायाम् आत्मनः स्वस्य अनुबिम्बं छायासमीपे प्रेक्ष्य दृष्ट्वा लज्जया कानि कानि चेष्टाविशेषानित्यर्थः न चकार अपितु सर्वाण्येव सलज्जचेष्टितानि चकारेत्यर्थः। उपबिम्बमिति पाठेऽपि स एवार्थः। कानि कान्यपि चकार लज्जयेति पाठेऽपि स एवार्थः ॥ ११ ॥

नीलेति। जननी माता मेना तां पार्वतीं नीलकण्ठेन हरेण परिभुक्तं यौवनं यस्यास्तथाभूतां विलोक्य समाश्वसत् सन्तोषमियायेति यावत् समाश्वसीदित्यपि पाठः। हि यतः वधूजनः कामिनीजनः भर्तुः स्वामिनः वल्लभतया प्रियतया मातुः मानसीं शुचं शोकं दुःखमित्यर्थः अस्यति क्षिपति निराकरोतीत्यर्थः। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः तदुक्तं दर्पणे। सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते। साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः इति ॥ १२ ॥

वासराणीति। स्थाणुना हरेण कतिचित् अल्पानीति यावत् वासराणि दिवसान् अनया पार्वत्या सहेत्यर्थः रतं सुरतं कथञ्चन केनापि प्रकारेण मार्दवभावेनेति भावः अकारि कृतम्। अथवा अनया कर्त्र्या स्थाणुना सह कथञ्चन रतम् अकारि। अथ सा शनैः शनैः क्रमशः ज्ञातमन्मथरसा विदितकामास्वादा सती रतिदुःख-

सस्वजे प्रियमुरोनिपीडनं प्रार्थितं मुखमनेन नाहरत् ।
मेखलाप्रणयलोलतां गतं हस्तमस्य शिथिलं रुरोध सा ॥१४॥
भावसूचित मदृष्टविप्रियं दार्ढ्यभाक्क्षणवियोगकातरम् ।
कैश्चिदेव दिवसै स्तथा तयोः प्रेम गूढ मितरेतराश्रयम् ॥१५॥
तं यथात्मसदृशं वरं वधूरन्वरज्यत वर स्तथैव ताम् ।
सागरादनपगा हि जाह्नवी सोऽपि तन्मुखरसैकवृत्तिभाक् १६

शीलतां सुरतक्लेशस्वभावतां मुमोच तत्याज क्रमेण स्वयमेव सुरतसुख-सेच्छादिति भावः। स्थाणुना पदमकार्यत प्रियेति पाठे स्थाणुना हरेण प्रिया पार्वती पदं सम्भोगस्थानमित्यर्थः अकार्यत कृते-त्यर्थः ॥ १३ ॥

सस्वजे इति। सा पार्वती उरसः वक्षसः निपीड़नं यस्मिन् तद् यथा तथा प्रियं हरं सस्वजे आलिलिङ्ग। उरो निपीड़ितेति पाठे उरसि वक्षसि निपीड़िता आलिङ्गिता हरेणेति शेषः अनेन हरेण प्रार्थितं चुम्बनाद्यर्थमिति भावः मुखं नाहरत् न परावर्त्तयत्। तथा मेखला काञ्ची तस्यां यः प्रणयः प्रियता तेन लोलतां चपलतां गतं जिघृक्षुमिति यावत् अस्य हरस्य हस्तं शिथिलं न तु दृढ़मिति भावः रुरोध। काञ्चीदामग्रहणोत्सुकं प्रियहस्तं पूर्ववत् न रुरोधेति यावत् ॥ १४ ॥

भावेति। भावेन चेष्टाविशेषेण सूचितं ज्ञापितं भावः सत्ता स्वभावाभिप्रायचेष्टात्मजन्मास्विति मेदिनी। न दृष्टं विप्रियं परस्परा-प्रीतिकरं किमपीत्यर्थः यस्मिन् तादृशं दार्ढ्यभाक् सुदृढ़म् अचलमित्यर्थः क्षणवियोगे कातरं क्लेशजनकं तयोः पार्वतीपरमेश्वरयोः इतरेतरा-श्रयम् अन्योन्यविषयं प्रेम कैश्चिदेव दिवसैः तथा तेन प्रकारेण गूढ़म् अन्तर्निविष्टमित्यर्थः रूढ़मिति पाठे जातमित्यर्थः। तथेत्यत्र तदेति पाठे तदा तस्मिन् काले इत्यर्थः ॥ १५ ॥

तमिति। वधूः पार्वती आत्मसदृशं स्वानुरूपं तं वरं यथा येन प्रकारेण अन्वरज्यत अन्वरञ्जयत् वरः हरः तथैव तेनैव प्रकारेण तां

शिष्यतां निधुवनोपदेशिनः शङ्करस्य रहसि प्रपन्नया।
शिक्षितं युवतिनैपुणं तया यत्तदेव गुरुदक्षिणीकृतम् ॥१७॥
दष्टमुक्तमधरोष्ठमम्बिका वेदनाविधुतहस्तपल्लवा।
शीतलेन निरवापयत् क्षणं मौलिचन्द्रशकलेन शूलिनः, ॥१८
चुम्बनादलकचूर्णदूषितं शङ्करोऽपि नयनं ललाटजम्।
उच्छ्वसत्कमलगन्धये ददौ पार्वतीवदनगन्धवाहिने ॥१९॥

वधूम् अनुरज्यतेति शेषः। हि तथाहि जाह्नवी गङ्गा सागरात् न अपगच्छतीति अनपगा अनिवर्त्तमानेत्यर्थः। सोऽपि सागरोऽपि तस्या जाह्नव्या मुखरसे मुखचुम्बनास्वादे एका केवला या वृत्तिः वर्त्तनं तां भजते इति तथोक्तः। अत्र दृष्टान्तालङ्कारः तदुक्तं दर्पणे। दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति। तन्मुखैकनिर्वृतिरिति पाठे तस्या मुखे मुखास्वादे एका केवला निर्वृतिः सन्तोषः यस्य तथोक्त इत्यर्थः ॥ १६ ॥

शिष्यतामिति। रहसि विजने निधुवनोपदेशिनः सुरतोपदेष्टुः शङ्करस्य शिष्यताम् उपदेश्यतां प्रपन्नया तया पार्वत्या यत् युवतिनैपुणं युवतीनां रतिकौशलमित्यर्थः शिक्षितं तदेव गुरुदक्षिणीकृतं गुरवे शङ्कराय दक्षिणात्वेन दत्तं तत्तत्सुरतकौशलेन गुरुः शङ्करः तोषित इति भावः ॥ १७ ॥

दष्टेति। अम्बिका पार्वती दष्टमुक्तम् आदौ दष्टं पश्चात् मुक्तं त्यक्तम् अधरोष्ठं वेदनया व्यथया दंशनजनितयेति भावः विधुतः कम्पितः हस्तपल्लवः यया तादृशी सती शीतलेन शूलिनः हरस्य मौलि चन्द्रशकलेन शिरस्थचन्द्रखण्डेन क्षणं क्षणेनैवेत्यर्थः निरवापयत् शीतलीचकार ॥ १८ ॥

चुम्बनादिति। शङ्करोऽपि चुम्बनात् पार्वत्या मुखस्येति शेषः अलकचूर्णेन केशप्रसाधनचूर्णविशेषेण दूषितं पीड़ितं ललाटजं नयनं तृतीयनेत्रमित्यर्थः उच्छ्वसन् उद्गच्छन् कमलस्येव गन्धो यस्य तादृशाय

एवमिन्द्रियसुखस्य वर्त्मनः सेवनादनुगृहीतमन्मथः ।
शैलराजभवने सहोमया मासमात्रमवसद्वृषध्वजः ॥ २० ॥
सोऽनुमान्य हिमवन्तमात्मभूरात्मजाविरहदुःखखेदितम् ।
तत्र तत्र विजहार सम्पतन्नप्रमेयगतिना ककुद्मता ॥ २१ ॥
मेरुमेत्य मरुदाशुगोक्षकः पार्वतीस्तनपुरस्कृतः कृती ।
हेमपल्लवविभङ्गसंस्तरा नन्वभूत् सुरतमर्दनक्षमान् ॥२२॥

पार्वत्या वदनगन्धवाहिने सुखमारुताय ददौ पार्वतीसुखमारुतेन चूर्ण-दूषितं नयनं नीरुजं चकारेति यावत् ॥ १९ ॥

एवमिति । वृषध्वजः हरः एवम् इत्थम् इन्द्रियसुखस्य वर्त्मनः पथः कामव्यापारस्य सेवनात् वर्त्मन इत्यत्र आत्मन इति पाठे आत्मनः स्वस्येत्यर्थः । अनुगृहीतः अनुकम्पितः मन्मथः कामो येन तथाभूतः सन् स्ववपुषा तस्य योजनादिति परिशेष्यति पार्वतीं यदेति पूर्वसुक्त-मनुसन्धेयम् । शैलराजस्य हिमाद्रेः भवने गृहे उमया सह मास-मात्रं त्रिंशद्दिनानीत्यर्थः अवसत् ॥ २० ॥

स इति । स आत्मभूः हरः आत्मजाया दुहितुः पार्वत्या विरहेण खेदितम् आकुलितं हिमवन्तम् अनुमान्य ततः अनुज्ञां लब्ध्वेत्यर्थः अप्रमेया अपरिच्छेद्या गतिर्यस्य तादृशेन ककुद्मता वृषेण तत्र तत्र अभिमतदेशेष्वित्यर्थः सम्पतन् सञ्चरमाणः विजहार उमया सहेति अध्याहार्य्यम् ॥ २१ ॥

मेरुमिति । मरुदिव आशु शीघ्रं गच्छतीति तथोक्तः उक्षा वृषः यस्य तथोक्तः कृती सर्वकार्य्यकुशलः हरः मेरुं सुमेरुं गिरिमेत्य प्राप्य पार्वत्याः स्तनाभ्यां पुरस्कृतः सत्कृतः मर्दनेन सन्तोषित इत्यर्थः अथवा पुरस्कृतः सत्कृतान् आश्रयत्वेन गृहणेनेति भावः कर्त्तर्य्ये क्विप् प्रत्ययनिष्पन्नपुरस्कृच्छब्दस्य द्वितीया बहुवचनं बोध्यम् । सुरतेषु यत् मर्दनं दलनं तत्क्षमान् तत्सहान् हेमपल्लवविभङ्गसंस्तरान् सौवर्ण-पल्लवच्छेदरूपशय्या इत्यर्थः अन्वभूत् सिषेवे सौवर्णपल्लवशय्याय शयित्वा विजहारेति निष्कर्षः ॥ २२ ॥

पद्मनाभचरणाङ्किताश्मसु प्राप्तवत्स्वमृतविप्रुषो नवाः।
मन्दरस्य कटकेषु चावसत् पार्वतीवदनपद्मषट्पदः ॥२३॥
रावणध्वनितभीतया तया कण्ठसक्तदृढ़बाहुबन्धनः।
एकपिङ्गलगिरौ जगद्गुरुर्निर्विवेश विशदाः शशिप्रभाः ॥२४॥
तस्य जातु मलयस्थलीरतेर्धूतचन्दनवनः प्रियाक्लमम्।
आचचाम स लवङ्गकेसर श्चाटुकार इव दक्षिणानिलः ॥२५॥

पद्मनाभेति। पद्मं नाभौ यस्य तस्य नारायणस्य चरणेन अङ्कितास्चिह्निता अश्मानः प्रस्तराः येषु तथोक्तेषु नवा अमृतविप्रुषः सुधाविन्दून् प्राप्तवत्सु समुद्रमन्थनकाले इति शेषः। मन्दरस्य कटकेषु नितम्बेषु च कटकोऽस्त्री नितम्बोऽद्रेरित्यमरः। पार्वत्या वदनमेव पद्मं तत्र षट्पदः भ्रमरः सन् अवसत् भ्रमर इव पार्वतीवदनकमलं पिबन् तस्थावित्यर्थः॥ २३ ॥

रावणेति। जगतां गुरुः हरः एकपिङ्गलस्य कुवेरस्य यक्षैक-पिङ्गैलविलश्रीदपुण्यजनेश्वरा इत्यमरः। गिरौ पर्वते कैलासे रावणस्य तदानीं दिग्विजयप्रवृत्तस्य पुलस्त्यनन्दनस्य ध्वनितेन सिंहनादेन भीतया शङ्कितया कैलाशोद्धरणसमये इति भावः तया पार्वत्या कण्ठे सक्तं दृढ़ं बाह्वोर्बन्धनं यस्य तथाभूतः सन् विशदाः स्वच्छा निर्मला इत्यर्थः शशिप्रभाः कौमुदीरित्यर्थः निर्विवेश बुभुजे। कौमुदीषु प्रियया सह विजहारेति भावः॥ २४ ॥

तस्येति। जातु कदाचित् धूतानि कम्पितानि चन्दनवनानि येन तथोक्तः चन्दनलत इति पाठे धूताः चन्दनलताश्चन्दनतरवो येन तथेति विग्रहः एतेन मान्द्यं शैत्यं सौगन्ध्यञ्च व्यञ्जितम्। लवङ्गानां केशरैः किञ्जल्कैः किञ्जल्कः केशरोऽस्त्रियामित्यमरः सह वर्त्तमानः एतेनापि सौगन्ध्यमुक्तम्। दक्षिणानिलः चाटुकार इव तोषामोदकारीव मलयस्थल्यां मलयपर्वततटे रतिः सुरतं यस्य तथाभूतस्य तस्य

हेमतामरसताडितप्रिया तत्कराम्बुविनिमीलितेक्षणा ।
सा व्यगाहत तरङ्गिणीमुमा मीनपङ्क्तिपुनरुक्तमेखला ॥२६॥
तां पुलोमतनयालकोचितैः पारिजातकुसुमैः प्रसाधयन् ।
नन्दने चिरमयुग्मलोचनः सस्पृहं सुरवधूभिरीक्षितः ॥२७॥
इत्यभौममनुभूय शङ्करः पार्थिवञ्च दयितासखः सुखम् ।
लोहितायति कदाचिदातपे गन्धमादनवनं व्यगाहत ॥२८॥

हरस्य प्रियायाः पार्वत्याः क्लमं सुरतजनितं श्रममित्यर्थः आचचाम शोषयामास ॥ २५ ॥

हेमेति । सा उमा हेमतामरसेन काञ्चनकमलेन ताड़ितः प्रहृतः प्रियो यया तथोक्ता, तस्य प्रियस्य कराम्बुभिः करम्रक्षोतजलैरित्यर्थः विनिमीलिते विशेषेण सङ्कोचिते ईक्षणे नेत्रे यस्याः तथाविधा तथा मीनानां मत्स्यविशेषाणां पङ्क्तिः आलिः पुनरुक्ता द्वितीयेत्यर्थः मेखला रसना यस्याः तथाभूता मीनराजिमध्यवर्त्तिनीत्यर्थः सती तरङ्गिणीं नदीं तरङ्गिणी शैवलिनीत्यमरः । व्यगाहत विजगाहे जलक्रीड़ा मकरोदित्यर्थः ॥ २६ ॥

तामिति । अयुग्मलोचनः त्रिलोचनः नन्दने देवोद्याने पुलोमतनयायाः शच्याः पुलोमजा शचीन्द्राणीत्यमरः अलकाश्चूर्णकुन्तलाः अलकाश्चूर्णकुन्तला इत्यमरः तेषु उचितैः अभ्यस्तैः अभ्यस्तेऽप्युचितं न्याय्ये इत्यमरः पारिजातस्य देवतरुविशेषस्य कुसुमैः तां पार्वतीं प्रसाधयन् अलङ्कुर्वन् सुरवधूभिः देवाङ्गनाभिः चिरं सुदीर्घकालं सस्पृहं सतृष्णम् ईक्षितः दृष्टः । दीर्घकालं नन्दनवने तया सह विजहारेति तात्पर्य्यम् ॥ २७ ॥

इतीति । शङ्करः शिवः दयितासखः प्रियासहचरः सन् इतीत्थम् अभौमं दिव्यं पार्थिवञ्च सुखम् अनुभूय भुक्त्वा कदाचित् आतपे सूर्य्यतेजसि लोहितायति आरक्ततामापद्यमाने इत्यर्थः दिवावसान-

तत्र काञ्चनशिलातलाश्रयो नेत्रगम्यमवलोक्य भास्करम्।
दक्षिणेतरभुजव्यपाश्रयां व्याजहार सहधर्मचारिणीम् ॥२९॥
पद्मकान्तिमरुणत्रिभागयोः सङ्क्रमय्य तव नेत्रयोरिव।
सङ्क्षये जगदिव प्रजेश्वरः संहरत्यहरसावहर्पतिः ॥ ३० ॥
शीकरव्यतिकरं मरीचिभि र्दूरयत्यवनते विवस्वति।
इन्द्रचापपरिवेषशून्यतां निर्झरास्तवपितुर्व्रजन्त्यमी ॥ ३१ ॥

समये इति यावत् गन्धमादनस्य पर्वतभेदस्य वनं व्यगाहत प्रविवेश क्रीड़ार्थमिति शेषः ॥ २८ ॥

तत्रेति। तत्र गन्धमादनवने काञ्चनशिलातलं सौवर्णपाषाणखण्डम् आश्रयो यस्य तथोक्तः सुवर्णशिलातलासीन इत्यर्थः भास्करं सूर्यं नेत्रगम्यं दृष्टिगोचरस्थमित्यर्थः अवलोक्य दक्षिणेतरभुजः वामहस्तः व्यपाश्रयः यस्यास्तथाभूतां वामाङ्कवर्त्तिनीमिति भावः सहधर्मचारिणीं प्रियां व्याजहार उवाच ॥ २९ ॥

पद्मेति। हे प्रिये! असौ अहर्पतिः सूर्यः अरुणौ रक्तौ त्रिभागौ तृतीयांशौ संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वमिष्यते यथा शतांशः सहस्रांश इत्यादि। ययोस्तयोः तव नेत्रयोरिव पद्मकान्तिं कमलशोभां संक्रमय्य संस्थाप्य संक्षये कल्पान्ते प्रजेश्वरः प्रजापतिः जगदिव अहः दिवसं संहरति अत्र गम्योत्प्रेक्षा ॥ ३० ॥

शीकरेति। अवनते अस्ताभिमुखे इति यावत् विवस्वति भास्करे मरीचिभिः स्वकिरणैः शीकराणाम् अम्बुकणानाम् शीकरोऽम्बुकणाः स्मृता इत्यमरः। व्यतिकरं सम्पर्कं दूरयति दूरीकुर्वति त्यजतीत्यर्थः सति अमी तव पितुः हिमाचलस्य निर्झराः इन्द्रचापेन शक्रधनुषा यः परिवेषः परिधिः वेष्टनमिति यावत् तेन शून्यतां राहित्यं व्रजन्ति गच्छन्ति प्राप्नुवन्तीत्यर्थः निर्झरपतिताः सूर्यकिरणाः शक्रचापवदवभासन्ते इति मतमाश्रित्योक्तमिदम् ॥ २१ ॥

दृष्टतामरसकेसरस्रजोः क्रन्दतोर्विपरिवृत्तकण्ठयोः ।
निघ्नयोः सरसि चक्रवाकयोरल्पमन्तरमनल्पतां गतम् ॥३२॥
स्थानमाह्निकमपास्य दन्तिनः सल्लकीविटपभङ्गवासितम् ।
आविभातचरणाय गृह्णते वारि वारिरुहबद्धषट्पदम् ॥३३॥
पश्य पश्चिमदिगन्तलम्बिना निर्मितं मितकथे ! विवस्वता ।
लम्बया प्रतिमया सरोऽम्भसां तापनीयमिव सेतुबन्धनम् ॥३४

दृष्टेति । दृष्टा भक्षितेत्यर्थः तामरसस्य रक्तोत्पलस्य रक्तोत्पलं तामरसमित्यमरः केसराणां किञ्जल्कानां स्रक् माला पङ्क्तिरित्यर्थः याभ्यां तयोक्तयोः विपरिवृत्तौ पराङ्मुखता मितौ कण्ठौ ययोः तथाविधयोः क्रन्दतोः रुदतोः निघ्नयोः परस्पराधीनयोः अधीनो निघ्न आयत्त इत्यमरः अन्योन्यमनुरक्तयोरिति यावत् चक्रवाकयोः सरसि अल्पम् स्वल्पकालिकमिति भावः अन्तरं विरहः विरहकालस्य रात्रिमात्रत्वादल्पत्वमिति बोध्यम् अनल्पतां दीर्घतामित्यर्थः गतं प्राप्तम् अनुरागिणोरल्पस्यापि विरहस्य दीर्घवत्प्रतीयमानत्वादिति भावः ॥ ३२ ॥

स्थानमिति । दन्तिनः गजाः सल्लकीनां गजप्रियवृक्षविशेषाणां विटपाः शाखाः तेषां भङ्गैः खण्डैः वासितम् सुरभितम् आह्निकं दैनिकं स्थानम् अपास्य त्यक्त्वा आविभातं प्रभातपर्य्यन्तं यत् चरणं देहयात्रार्थमाहार इति यावत् तस्मै वारिरुहेषु कमलेषु बद्धाः बन्धनं प्राप्ताः तेषां सङ्कुचितत्वादिति भावः षट्पदाः भ्रमरा यत्र तादृशं वारि जलं सकमलजलमिति यावत् गृह्णते आददते ॥ ३३ ॥

पश्येति हे मितकथे मितभाषिणि ! पश्चिमदिगन्तलम्बिना अस्तं गच्छतेति भावः विवस्वता सूर्य्येण लम्बया दीर्घयेत्यर्थः दीर्घयेति क्वचित् पाठः । प्रतिमया प्रतिबिम्बेन निर्मितं सरोऽम्भसां सरोवरजलानां तापनीयं सौवर्णं तपनीयं शातकुम्भमित्यमरः सेतुबन्धनमिव पश्य अवलोकय । उत्प्रेक्षालङ्कारः । तदुक्तं दर्पणे । भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मनेति तल्लक्षणात् ॥ ३४ ॥

उत्तरन्ति विनिकीर्य्य पल्वलं गाढ़पङ्कमतिवाहितातपाः ।
दंष्ट्रिणो वनवराहयूथपा दष्टभङ्गुरबिसाङ्कुरा इव ॥३५॥
एष वृक्षशिखरे कृतास्पदो जातरूपरसगौरमण्डलः ।
हीयमानमहरत्ययातपं पीवरोरु ! पिबतीव वर्हिणः ॥३६॥
पूर्वभागतिमिरप्रवृत्तिभिर्व्यक्तपङ्कमिव जातमेकतः ।
खं हृतातपजलं विवस्वता भाति किञ्चिदिव शेषवत् सरः ॥३७॥
आविशद्भिरुटजाङ्गणं मृगैर्मूलसेकसरसैश्च वृक्षकैः ।

उत्तरन्तीति । दंष्ट्रिणः दीर्घदन्तवन्तः वनवराहयूथपाः वन्य-शूकराधिपतयः गाढ़पङ्कं पल्वलम् अल्पसरः वेशन्तः पल्वलञ्चाल्पसर इत्यमरः विनिकीर्य्य स्वाधिवासेन दलित्वेत्यर्थः अतिवाहितः अति-क्रान्त आतपः यैः तथाभूताः सूर्य्यातपक्लेशं परिहरन्त इत्यर्थः दष्टः मुखनिहित इति यावत् भङ्गुरः भङ्गशीलः बिसाङ्कुर मृणालप्ररोहः यैः तथाभूता इव उत्तरन्ति उत्तिष्ठन्ति सरस इति शेषः । अत्रोत्-प्रेक्षालङ्कारः ॥ ३५ ॥

एष इति । हे पीवरोरु ! स्थूलोरुदेशे ! वृक्षशिखरे वृक्षोपरि कृतास्पदः कृतनिलयः जातरूपं सुवर्णं चामीकरं जातरूपमित्यमरः तस्य यो रसः जलं तद्वत् गौरं पीतं मण्डलं वर्हं यस्य तादृशः सौर-किरणयोगादिति भावः वर्हिणः मयूरः मयूरो वर्हिणो वर्हीत्यमरः । हीयमानं हीनतामापद्यमानम् अहरत्ययातपं दिनावसानसूर्य्यकिरणं पिबतीव । अत्र पिबतीव इति क्रियागतोत्प्रेक्षा ॥ ३६ ॥

पूर्वेति । पूर्वभागे पूर्वस्यां दिशि तिमिराणां तमसां प्रवृत्तिभिः प्रसरैः विवस्वता सूर्य्येण हृतम् आतपो जलमिव यस्य तथाभूतं खम् आकाशम् एकतः एकस्यां दिशि व्यक्ताः स्फुटाः पङ्का यस्य तादृशं जातमिव अन्यतः अपरस्यां दिशि किञ्चित् ईषत् शेषवत् जलशेषवदित्यर्थः सर इव सरोवरमिव भाति राजते उपमालङ्कारः ॥ ३७ ॥

आश्रमाः प्रविशदग्रधेनवो बिभ्रति श्रियमुदीरिताग्नयः ॥३८
बद्धकोशमपि तिष्ठति क्षणं सावशेषविवरं कुशेशयम् ।
षट्पदाय वसतिं ग्रहीष्यते प्रीतिपूर्वमिव दातुमन्तरम् ॥३९॥
दूरमग्रपरिमेयरश्मिना वारुणी दिगरुणेन भानुना ।
भाति केसरवतेव मण्डिता बन्धुजीवतिलकेन कन्यका ॥४०॥

आविशद्भिरिति । आश्रमाः तापसनिवासाः उटजस्य पर्णशालायाः पर्णशालोटजोऽस्त्रियामित्यमरः । अङ्गणं चत्वरम् अङ्गणं चत्वराजिरे इत्यमरः । आविशद्भिः प्रविशद्भिः मृगैः तथा मूलेषु यः सेकः तेन सरसाः स्निग्धा इत्यर्थः तैः वृक्षकैः क्षुद्रतरुभिश्च उपलक्षिताः उपलक्षणे तृतीया । प्रविशन्त्यः अग्र्याः श्रेष्ठा धेनवः सवत्सा गावो येषु तथाभूताः तथा उदीरिता उद्दीपिता अग्नयः दक्षिणागार्हपत्याहवनीयाख्याः येषु तथोक्ताः सन्तः होमार्थमिति भावः श्रियं शोभां बिभ्रति दधति ॥ ३८ ॥

बद्धेति । बद्धः कोशो मुकुलीभावः येन तथाविधमपि अवशेषे कियदंशे इति भावः यत् विवरं छिद्रं तेन सह वर्त्तमानं कुशेशयं पद्मं शतपत्रं कुशेशयमित्यमरः । वसतिं वासस्थानं ग्रहीष्यते षट्पदाय भ्रमराय प्रीतिपूर्वं सप्रणयम् अन्तरम् अवकाशम् अन्तरमवकाशावधिपरिधानान्तर्द्धिभेद तादर्थ्येष्वित्यमरः । दातुमिव क्षणं तिष्ठति असम्पूर्णमुकुलीभावेनेति शेषः । उत्प्रेक्षालङ्कारः ॥ ३९ ॥

दूरेति । वारुणी वरुणाधिष्ठिता पश्चिमेत्यर्थः दिक् दूरम् अत्यर्थं मग्नाः विनष्टा इत्यर्थः परिमेयाः परिमातुं शक्याश्च रश्मयः किरणाः यस्य तादृशेन अरुणेन रक्तेन भानुना सूर्य्येण केशरवता किञ्जल्कवता किञ्जल्कः केशरोऽस्त्रियामित्यमरः बन्धुजीवतिलकेन बन्धुजीवपुष्परूपललाटभूषणेन मण्डिता अलङ्कृता कन्यकेव भाति राजते ॥ ४० ॥

सामभिः सहचराः सहस्रशो स्यन्दनाश्वहृदयङ्गमस्वनैः ।
भानुमग्निपरिकीर्णतेजसं संस्तुवन्ति किरणोष्मपायिनः ॥४१॥
सोऽयमानतशिरोधरैर्हयैः कर्णचामरविघट्टितेक्षणैः ।
अस्तमेति युगभुग्नकेसरैः सन्निधाय दिवसं महोदधौ ॥४२॥
खं प्रसुप्तमिव संस्थिते रवौ तेजसो महत ईदृशी गतिः ।
तत्प्रकाशयति यावदुद्गतं मीलनाय खलु तावतश्च्युतम् ॥४३॥

सामभिरिति । सहस्रशः सहस्रं सहस्रं किरणानाम् उष्माणं पिबन्तीति तथाभूताः सह चरन्तीति तथोक्ता अङ्गुष्ठपरिमिताः बालखिल्या ऋषय इत्यर्थः तेषां सूर्यसहचरत्वस्य शास्त्रसिद्धत्वादिति भावः स्यन्दने रथे सौरे इति भावः ये अश्वाः तेषां हृदयङ्गमः मनोरमः स्वनो ध्वनिर्येषां तैः सामभिः सामवेदैः अग्नौ परिकीर्णम् अर्पितं तेजो येन तथोक्तम् अग्नावोषधीषु च तेजो निधाय रविरस्तं यातीति श्रुतेः । भानुं सूर्यं संस्तुवन्ति । वन्दनैश्च हृदयङ्गमस्वनैरिति पाठे हृदयङ्गमस्वनैः मनोहरध्वनिभिर्वन्दनैः स्तुतिवचोभिश्च सामातिरिक्तैरिति शेषः । संस्तुवन्तीत्यर्थः ॥ ४१ ॥

स इति । सोऽयं सूर्यः दिवसं महोदधौ सन्निधाय संस्थाप्य प्रतीयमानोत्प्रेक्षा । सूर्यकिरणावच्छिन्न नभोभागस्यैव दिवसत्वेन तस्य महोदधौ स्थितेरसम्भवादिति बोध्यम् आनताः शिरोधराः येषां तथोक्तैः कर्णयोर्ये चामराः तैः पतितैरिति भावः विघट्टिते सङ्कुचिते ईक्षणे नेत्रे यैः तथाभूतैः तथा युगेन स्कन्धधार्यरथकाष्ठेन भुग्नाः दलिताः केसराः स्कन्धरोमाणि येषां तादृशैः अश्वैः करणभूतैरित्यर्थः अस्तम् अस्ताचलम् एति गच्छति । अस्तस्तु चरमः क्ष्माभृदित्यमरः ॥ ४२ ॥

खमिति । रवौ संस्थिते अस्तं गते सति खम् आकाशं प्रसुप्तमिव भवतीति शेषः महतः तेजसः गतिः अवस्था ईदृशी वक्ष्यमाण-

सन्ध्ययाप्यनुगतं रवेर्वपुर्वन्द्यमस्तशिखरे समर्पितम् ।
येन पूर्वमुदये पुरस्कृता नानुयास्यति कथं तमापदि ॥४४॥

रक्तपीतकपिशाः पयोमुचां
कोटयः कुटिलकेशि ! भान्त्यमूः ।
द्रक्ष्यसि त्वमिति सन्ध्ययानया
वर्तिकाभिरिव साधुमण्डिताः ॥४५॥

क्षपा, तत् महातेजः उद्गतम् उदितं सत् यावत् यत् परिमितं स्थानमित्यर्थः प्रकाशयति दीपयति, च्युतं भ्रष्टम् अस्तमितमित्यर्थः खलु निश्चितं तावतः तत्परिमितस्य स्थानस्येत्यर्थः मीलनाय अप्रकाशायेत्यर्थः भवति ॥ ४३ ॥

सन्ध्ययेति । सन्ध्ययापि अस्तशिखरे अस्ताचलशिरसि समर्पितं सन्निहितं वन्द्यं रवेः सूर्यस्य वपुः मण्डलमित्यर्थः अनुगतम् अनुसृतम् । युक्तञ्चैतदित्याह येनेति येन पूर्वं प्राक् प्रातरित्यर्थः उदये अभ्युत्थानसमये पुरस्कृता अग्रे कृता सम्मानिता च, आपदि अस्तगमनसमये पुरस्कारिण इतिभावः तं पुरस्कारिणमापन्नमिति भावः कथं न अनुयास्यति ? अनुगमिष्यति ? अपितु अनुयास्यत्येव तादृशं जनमनुगन्तुमुचितं सतीनामिव एव धर्म इति भावः। अत्र समेन कार्य्येण लिङ्गेन च रविसन्ध्ययोर्नायकनायिकाव्यवहारसमारोपात् समासोक्तिरलङ्कारः समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः । व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुन इति ॥ ४४ ॥

रक्तेति। हे कुटिलकेशि ! सभङ्गिकुन्तले ! अमूः पुरतो दृश्यमाना इति भावः रक्ताश्च पीताश्च कपिशाः पिङ्गलाश्च पयोमुचां मेघानां कोटयः अग्रभागाः, त्वं द्रक्ष्यसीति हेतोः अनया सन्ध्यया वर्त्तिकाभिः चित्रशलाकाभिः साधु सम्यक् यथा तथा मण्डिता इव रञ्जिता इव भान्ति शोभन्ते । अत्र क्रियोत्प्रेक्षा तदुक्तं भवेत् सम्भा-

सिंहकेसरसटासु भूभृतां पल्लवप्रसविषु द्रुमेषु च।
पश्य धातुशिखरेषु भानुना संविभक्तमिव सान्ध्यमातपम् ॥४६॥
अद्रिराजतनये! तपस्विनः पावनाम्बुविहिताञ्जलिक्रियाः।
ब्रह्म गूढमभिसन्ध्यमादृताः शुद्धये विधिविदो गृणन्त्यमी ॥४७॥

तन्मुहूर्तमनुमन्तुमर्हसि
प्रस्तुताय नियमाय मामपि।
त्वां विनोदनिपुणः सखीजनो
वल्गुवादिनि! विनोदयिष्यति ॥ ४८ ॥

वनोत्प्रेक्षा प्रकृतस्य परात्मना। वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता। जातिर्गुणः क्रिया द्रव्यं यदुत्प्रेक्ष्यं द्वयोरपीति ॥४५॥

सिंहेति। हे प्रिये! इति सम्बोधनपदमूह्यम्। भानुना सूर्य्येण भूभृतां पर्वतानां सिंहकेसरसटासु सिंहानां केसरा इव किञ्जल्का इव याः सटा जटास्तासु, पल्लवप्रसविषु सञ्जातपल्लवेषु द्रुमेषु तरुषु धातूनां गैरिकादीनां शिखरेषु उपरिभागेषु च सान्ध्यं सन्ध्याकालभवम् आतपं स्वतेज इत्यर्थः संविभक्तमिव सम्यक् विभज्य दत्तमिव पश्य अवलोकय। यथा कश्चित् निधनसमये स्वजनेषु स्वधनं निधाय म्रियते तथा रविरपि स्वधनभूतं स्वातपं सिंहसटादिषु निक्षिप्य अस्तं यातीति ध्वन्यते। अत्राप्युत्प्रेक्षालङ्कारः ॥ ४६ ॥

अद्रीति। हे अद्रिराजतनये पार्वति! अमी विधिविदः सायंकालकर्त्तव्याभिज्ञा इत्यर्थः तपस्विनः तापसाः आदृताः आदरवन्तः यत्नवन्त इत्यर्थः पावनं पवित्रजनकं यत् अम्बु जलं गाङ्गमिति भावः तेन विहिता कृता अञ्जलिक्रिया तर्पणादिव्यापारः यैः तथाभूताः सन्तः अभिसन्ध्यं सन्ध्यामभिव्याप्येत्यर्थः शुद्धये पूतये गूढं रहस्यं ब्रह्म ओँ इत्येकाक्षरं मन्त्रं गायत्रीं वा गृणन्ति जपन्ति ॥ ४७ ॥

तदिति। हे वल्गुवादिनि मधुरभाषिणि! तत् तस्मात् सान्ध्य-

निर्विभुज्य दशनच्छदं ततो वाचि भर्तुरवधीरणापरा।
शैलराजतनया समीपगामाललाप विजयामहेतुकम् ॥४९॥
ईश्वरोऽपि दिवसात्ययोचितं मन्त्रपूर्वमनुतस्थिवान्विधिम्।
पार्वतीमवचनामसूयया प्रत्युपेत्य पुनराह सस्मितम् ॥५०॥
मुञ्च कोपमनिमित्तकोपने! सन्ध्यया प्रणमितोऽस्मि नान्यया।
किं न वेत्सि सहधर्मचारिणं चक्रवाकसमवृत्तिमात्मनः ॥५१॥

विधेरवश्यकर्त्तव्यत्वादिति भावः मुहूर्त्तं द्वौ दण्डावित्यर्थः प्रस्तुताय प्रकृताय नियमाय सन्ध्यावन्दनविधानायेत्यर्थः मामपि अनुमन्तुम् अनुज्ञातुम् अर्हसि, नात्र त्वया एकाकिन्या स्थातव्यमित्याह त्वामिति विनोदे चित्तरञ्जने निपुणः चतुरः सखीजनः त्वाम् विनोदयिष्यन्ति रञ्जयिष्यन्ति ॥ ४८ ॥

निर्विभुज्येति। ततः अनन्तरं शैलराजतनया पार्वती भर्त्तुः स्वामिनः वाचि वचने अवधीरणापरा अवमाननार्थिनी भर्त्तृवचनमशृण्वतीति भावः दशनच्छदं ओष्टं निर्विभुज्य कुटिलयित्वा समीपगां सन्निहितां विजयां सहचरीम् अहेतुकं निष्कारणं स हेतुकमिति पाठे सकारणम् आललाप इथावाक्येन आलापितवतीत्यर्थः। अनुज्ञावचनं न दत्तवतीति भावः ॥ ४९ ॥

ईश्वर इति। ईश्वरोऽपि सर्वाराध्योऽपीति भावः यः सर्वैः सन्ध्यायामाराध्यते सोऽपीति अपिशब्दार्थः दिवसात्ययोचितं सान्ध्यमित्यर्थः मन्त्रपूर्वं समन्त्रमित्यर्थः विधिम् अनुष्ठानम् अनुतस्थिवान् कृतवान् सन् असूयया ईर्ष्यया अवचनां मौनभावेन स्थितां पार्वतीं प्रत्युपेत्य अभ्येत्य पुनः सस्मितं समन्दहासम् आह उवाचेत्यर्थः ॥ ५० ॥

मुञ्चेति। हे अनिमित्तकोपने अकारणकोपिनि! कोपं मुञ्च त्यज, सन्ध्यया प्रणमितः प्रणतीकृतः अस्मि, अन्यया नार्य्येति शेषः च, नाहमन्यनारीसक्त इति भावः चक्रवाकेण समा वृत्तिः व्यवहारः

निर्मितेषु पितृषु स्वयंभुवा या तनुः सुतनु ! पूर्वमुज्झिता ।
सेयमस्तमुदयं च सेवते तेन मानिनि ! ममात्र गौरवम् ॥५२॥
तामिमां तिमिरवृद्धिपीड़ितां शैलराजतनये ! ऽधुना स्थिताम्
एकतस्तटतमालमालिनीं पश्य धातुरसनिम्नगामिव ॥५३॥
सान्ध्यमस्तमितशेषमातपं रक्तलेखमपरा बिभर्ति दिक् ।
सम्परायवसुधासशोणितं मण्डलाग्रमिव तिर्य्यगुज्झितम् ॥५४॥

कान्तासाहचर्य्यरूपेति भावः यस्य तथाभूतम् आत्मनः स्वस्य सहधर्मचारिणं सहचरं मां किं कथं न वेत्सि न जानासि ? ॥ ५१ ॥

निर्मितेष्विति । हे मानिनि ! हे सुतनु शुभाङ्गि ! पूर्वं स्वयम्भुवा ब्रह्मणा निर्मितेषु सृष्टेषु पितृषु अग्निष्वात्तादिषु या तनुः सूक्ष्मरूपा सन्ध्या तस्या मुहूर्त्तमात्रावयवत्वादिति भावः उज्झिता त्यक्ता अर्पितेति यावत् सा इयं देवी सन्ध्या अस्तम् उदयञ्च सेवते आश्रयति, तेन हेतुना अत्र सन्ध्यायाम् अवश्यपूज्यायामिति भावः मम गौरवम् आदरः ॥ ५२ ॥

तामिति । हे शैलराजतनये पार्वति ! तामिमां सन्ध्याम् अधुना एकतः पूर्वस्यां दिशीत्यर्थः तिमिराणां तमसां वृद्धा आविर्भावेण पीड़िताम् आहतामिति भावः अतएव तटेषु गिरिनितम्बेषु तमालानां तदाख्यतरूणां माला राजिः तद्वतीं धातूनां गैरिकाणां रसो द्रवः तस्य निम्नगां नदीमिव पश्य अवलोकय । उत्प्रेक्षालङ्कारः ॥५३॥

सान्ध्यमिति । अपरा दिक् पश्चिमेत्यर्थः अस्तमितः विनष्टः शेषो यस्य तथाभूतं सान्ध्यं सन्ध्याकालीनं रक्ता लेखा आकृतिरित्यर्थः यस्य तथाविधम् आतपं सौरमयूखं सम्परायः संग्रामः तस्य वसुधा भूमिः रणक्षेत्रमित्यर्थः तस्याः सशोणितं सरक्तं तिर्य्यक् ऊर्द्धभावेनेत्यर्थः उज्झितम् उत्पतितम् मण्डलाग्रमिव अवयवाग्रमिव बिभर्त्ति धारयति । उत्प्रेक्षालङ्कारः ॥ ५४ ॥

यामिनीदिवससन्धिसम्भवे तेजसि व्यवहिते सुमेरुणा ।
एतदन्धतमसं निरङ्कुशं दिक्षु दीर्घनयने ! विजृम्भते ॥ ५५ ॥
नोर्ध्वमीक्षणगतिर्न चाप्यधो नाभितो न पुरतो न पृष्ठतः ।
लोक एष तिमिरौघवेष्टितो गर्भवास इव वर्तते निशि ॥५६॥
शुद्धमाविलमवस्थितं चलं वक्रमार्जवगुणान्वितं च यत् ।
सर्वमेव तमसा समीकृतं धिङ्महत्त्वमसतां हृतान्तरम् ॥५७॥

यामिनीति । हे दीर्घनयने आयतनेत्रे ! यामिनी च दिवसश्च तयोः सन्धिः सन्ध्याकालः तत्सम्भवे सान्ध्ये इत्यर्थः तेजसि सूर्य्यमयूखे सुमेरुणा व्यवहिते आवृते सति एतत् निरङ्कुशं निर्बाधमित्यर्थः अन्धतमसं गाढ़ं तमः दिक्षुः विजृम्भते प्रसरति । सन्ध्यातीतेति भावः ॥ ५५ ॥

नोर्द्ध्वमिति । ईक्षणानां नेत्राणां गतिः प्रसर इत्यर्थः न ऊर्द्ध्वं न च अधः निम्ने न अभितः, उभयोः पार्श्वयोरित्यर्थः न पुरतः अग्रतः, नापि पृष्ठतः पश्चात्, चलतीति क्रियाध्याहार्य्या । अतः एष लोकः जगत् लोकस्तु भुवने जने इत्यमरः तिमिरौघेन अन्धकारनिचयेन वेष्टितः आवृतः सन् निशि रजन्यां गर्भवासे इव उदरमध्ये इवेत्यर्थः वर्त्तते तिष्ठति । यथा गर्भस्थाः किमपि न पश्यन्ति तद्वत् तिमिरावृतत्वात् लोका अपीति भावः । उत्प्रेक्षालङ्कारः ॥ ५६ ॥

शुद्धमिति । शुद्धं निर्मलम् आविलं मलिनम् अवस्थितं स्थावरं चलं जङ्गमं वक्रं कुटिलम् आर्जवगुणान्वितं सरलञ्च यत् वस्तु इति शेषः तत् सर्वमेव तमसा अन्धकारेण समीकृतं तुल्यतां नीतं तस्मात् असतां दुर्जनानां हृतं नाशितम् अन्तरं प्रभेदः येन तादृशं सदसद्विवेकरहितमिति भावः महत्त्वम् औदार्य्यं धिक् धिक् निर्भर्त्सननिन्दयोरित्यमरः यत्र गुणागुणविवेको नास्ति तादृशं खलचरित्रं निन्दार्हमित्यर्थः । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः तदुक्तं

नूनमुन्नमति यज्वनां पतिः शार्वरस्य तमसो निषिद्धये ।
पुण्डरीकमुखि! पूर्वदिङ्मुखं कैतकैरिव रजोभिराहृतम् ॥५८॥
मन्दरान्तरितमूर्तिना निशा लक्ष्यते शशभृता सतारका ।
त्वं मया प्रियसखीसमागता श्रोष्यतेव वचनानि पृष्ठतः ॥५९॥
रुद्धनिर्गमनमादिनक्षयात्पूर्वदृष्टतनु चन्द्रिकास्मितम् ।
एतदुद्गिरति चन्द्रमण्डलं दिग्रहस्यमिव रात्रिनोदितम् ॥६०॥

सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्यञ्च कारणेनेदं कार्येण च समर्थ्यते । साधर्म्येनेतरेणार्थान्तरन्यासोऽष्टधा तत इति ॥ ५७ ॥

नूनमिति । हे पुण्डरीकमुखि ! पद्मनेत्रे ! यज्वनां द्विजानां पतिः चन्द्रः द्विजराजः शशधरः इत्यमरः । नूनं निश्चितं शार्वरस्य नैशस्य तमसः अन्धकारस्य निषिद्धये निराकरणाय उन्नमति उदेति, यतः पूर्वदिशः प्राच्या मुखं कैतकैः केतकसम्बन्धिभिः रजोभिः परागैः आहृतम् आपूरितं व्याप्तमिव दृश्यते इति शेषः । उत्प्रेक्षालङ्कारः ॥ ५८ ॥

मन्दरेति । हे प्रिये ! सतारका तारासहिता निशा मन्दरेण तदाख्येन पर्वतेन अन्तरिता मूर्त्तिर्यस्य तादृशेन मन्दरमन्तर्धाय स्थितेनेत्यर्थः शशभृता चन्द्रेण प्रियसखीभिः समागता सङ्गता त्वं पृष्ठतः वचनान्येतानि श्रोष्यतेव मया लक्ष्यते दृश्यते । उपमालङ्कारः ॥ ५९ ॥

रुद्धेति । आदिनक्षयात् दिनावसानपर्य्यन्तमित्यर्थः रुद्धनिर्गमं निवृत्तोदयम् उदयरहितमित्यर्थः पूर्वस्यां दिशि दृष्टा तनुः अवयवः यस्य तादृशम् एतत् चन्द्रमण्डलं चन्द्रिका एव स्मितं मन्दहासो यस्मिन् तद् यथा तथा रात्रिनोदितं निशाप्रकटितमित्यर्थः दिशः प्राच्या इत्यर्थः रहस्यं गोप्यं वस्तु उद्गिरतीव प्रकाशयतीव । यथा काचित् कुपिता सपत्न्याः रहस्यं केनचित् प्रकाशयति तद्वत् निशारूपा नायिका

पश्य पक्वफलिनीफलत्विषा विम्बलाञ्छितवियत्सरोम्भसा ।
विप्रकृष्टविवरं हिमांशुना चक्रवाकमिथुनं विडम्बयते ॥६१॥
शक्यमोषधिपतेर्नवोदयाः कर्णपूररचनाकृते तव ।
अप्रगल्भयवसूचिकोमलाश्छेत्तुमग्रनखसम्पुटैः कराः ॥६२॥

सपत्नीरूपायाः प्राच्या रङ्गं चन्द्रमण्डलेन प्रकाशयतीति भावः । उत्प्रेक्षालङ्कारः । स च रात्रिप्राच्योः सपत्नीव्यवहारसमारोपात् समासोक्त्या सङ्कीर्यते ॥ ६० ॥

पश्येति । पक्वं परिणतं यत् फलिन्याः तदाख्यतरोरित्यर्थः फलिन्यग्निशिखायाञ्च फलिन्यामिति मेदिनी । फलं तद्वत् त्विट् कान्तिर्यस्य तादृशेन शुभ्रांशुनेत्यर्थः तथा विम्बेन प्रतिविम्बेन लाञ्छितं रञ्जितं वियत् अन्तरीक्षं सरसां तड़ागानाम् उपलक्षणमेतत् जलाशयानामितिभावः अम्भः सलिलं येन तथाभूतेन हिमांशुना चन्द्रेण विप्रकृष्टं दूरं गतं विवरम् अन्तरं प्रभेदस्थानमिति यावत् यस्य तथोक्तं हिमांशुविम्बमेतत् न फलिनीफलमित्थं विवेकरहितमिति भावः चक्रवाकमिथुनं चक्रद्वन्द्वं विडम्बयते प्रतार्यते । पश्य अवलोकय । सरसि प्रतिविम्बितं चन्द्रविम्बं दृष्ट्वा फलिनीफलभ्रमेण चक्रवाकयुगलेन तदुपभोगार्थं गच्छता विफलमनोरथेन प्रत्यावृत्यते इति भावः । अत्र भ्रान्तिमानलङ्कारः । उपमया अनुप्राण्यते । तदुक्तं साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितेति । साम्यं वाच्यमवैधर्म्यं वाक्यैक्ये उपमाद्वयोरिति च ॥ ६१ ॥

शक्यमिति । हे प्रिये ! ओषधिपतेश्चन्द्रस्य ओषधीशो निशापतिरित्यमरः नवः उदयो येषां तथोक्ताः प्रत्यग्रोदिता इत्यर्थः अप्रगल्भा अपरिणता यवानाम् ओषधिविशेषाणां सूचयः अङ्कुरा इव कोमलाः मृदवः कराः किरणाः कर्णपूरस्य कर्णभूषणस्य रचनाकृते रचनार्थमित्यर्थः तव अग्रा ये नखसम्पुटाः नखावयवा इत्यर्थः तैः नखाग्रैरिति भावः छेत्तुं खण्डयितुं शक्यं चन्द्रकराणामतीव सान्द्रतया नखाग्रकर्त्तनस्य सम्भाव्यमानत्वात् प्रतीयमानोत्प्रेक्षा । शक्यमित्यत्र

अङ्गुलीभिरिव केशसञ्चयं सन्निगृह्य तिमिरं मरीचिभिः।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥६३॥

पश्य पार्वति! नवेन्दुरश्मिभिर्भिन्नसान्द्रतिमिरं नभस्तलम्।
लक्ष्यते द्विरदभोगदूषितं सम्प्रसादमिव मानसं सरः ॥ ६४ ॥

रक्तभावमपहाय चन्द्रमा
जात एष परिशुद्धमण्डलः।
विक्रिया न खलु कालदोषजा
निर्मलप्रकृतिषु स्थिरोदया ॥ ६५ ॥

भावे ल्यप्। अयं चन्द्रकरोऽतिसान्द्रः येन त्वया इमं खण्डयित्वा कर्णपूरीकर्त्तुं शक्यते इति भावः ॥ ६२ ॥

अङ्गुलीभिरिति। हे प्रिये! शशी चन्द्रः मरीचिभिः करैः अङ्गुलीभिः तिमिरं केशसञ्चयमिव कुन्तलनिचयमिव संनिगृह्य अपसार्य कुड्मलीकृते मुकुलीकृते सरोजे एव अन्यत्र सरोजे इव लोचने यस्य तथाभूतं रजनीमुखं निशामुखं चुम्बतीव। अत्रोत्प्रेक्षया उपमया च शशिरजन्योर्नायकनायिका व्यवहारसमारोपरूपसमासोक्तिरलङ्कारः ॥६३॥

पश्येति। हे पार्वति! नवेन्दुरश्मिभिर्नवोदितचन्द्रमयूखैः भिन्नम् अपनीतं सान्द्रं गाढं तिमिरं यस्मात् तथाभूतं नभस्तलम् अन्तरीक्षं द्विरदानां हस्तिनां भोगेन दलनेन दूषितं प्राक् आविलितं पश्चात् सम्प्रसादं प्रसन्नं स्वच्छमित्यर्थः मानसं सर इव लक्ष्यते दृश्यते। उपमालङ्कारः ॥ ६४ ॥

रक्तभावमिति। हे प्रिये! एष चन्द्रमाः रक्तभावं लौहित्यम् अपहाय विमुच्य परिशुद्धं विशदं शुभ्रमित्यर्थः मण्डलं यस्य तथाभूतः जातः। उक्तमर्थमर्थान्तरेण द्रढ़यति विक्रियेति कालदोषेण जाता विक्रिया विकृतिः प्रकृतेरन्यथाभाव इत्यर्थः निर्मला विशुद्धा प्रकृतिः

उन्नतेषु शशिनः प्रभा स्थिता निम्नसंश्रयपरं निशातमः ।
नूनमात्मसदृशी प्रकल्पिता वेधसा हि गुणदोषयोर्गतिः ॥६६॥
चन्द्रपादजनितप्रवृत्तिभिश्चन्द्रकान्तजलविन्दुभिर्गिरिः ।
मेखलातरुषु निद्रितानमून्बोधयत्यसमये शिखण्डिनः ॥६७॥
कल्पवृक्षशिखरेषु सम्प्रति प्रस्फुरद्भिरिव पश्य सुन्दरि ! ।
हारयष्टिरचनामिवांशुभिः कर्तुमागतकुतूहलः शशी ॥६८॥

स्वभावो येषां तथाभूतेषु जनेषु सत्स्वित्यर्थः न खलु नैव स्थिरोदया चिरस्थायिनीत्यर्थः । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६५ ॥

उन्नतेष्विति । शशिनश्चन्द्रस्य प्रभा उन्नतेषु उत्तुङ्गेषु स्थलेषु स्थिता, निशातमः नैशं तिमिरं निम्नमेव संश्रयः परं प्रधानं यस्य तथोक्तं निम्नगामीत्यर्थः । हि तथाहि गुणदोषयोर्गतिः व्यवस्थितिरित्यर्थः वेधसा विधिना आत्मनः गुणस्य दोषस्य चेत्यर्थः सदृशी उपयुक्ता प्रकल्पिता नूनं निर्द्धारितेत्यर्थः नीचेन सह नीचस्य सङ्गतिरुच्चेन सह उच्चस्य सङ्गतिर्विधिव्यवस्थितेति फलितार्थः । अत्रापि सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६६ ॥

चन्द्रेति । गिरिः पर्वतः चन्द्रपादैः चन्द्रमयूखैः जनिता उत्पादिता प्रवृत्तिः प्रसरणं येषां तथाभूतैः चन्द्रकान्तानां मणिविशेषाणां जलविन्दुभिः करणैः मेखलातरुषु नितम्बस्थवृक्षेषु निद्रितान् अमून् इमानिति वा पाठः शिखण्डिनः मयूरान् असमये निद्राभङ्गातिरिक्ते काले बोधयति जागरयति ॥ ६७ ॥

कल्पेति । हे सुन्दरि ! सम्प्रति शशी प्रस्फुरद्भिर्विराजद्भिरंशुभिः किरणैः हारयष्टिरचनां मुक्ताहारनिर्माणं कर्त्तुमिव आगतम् उपस्थितं कुतूहलम् औत्सुक्यं यस्य तथाभूत इव कल्पवृक्षाणां सुरतरूणां शिखरेषु शिरोदेशेषु वर्त्तत इति शेषः पश्य अवलोकय ।

उन्नतावनतभाववत्तया
चन्द्रिका सतिमिरा गिरेरियम् ।
भक्तिभिर्बहुविधाभिरर्पिता
भाति भूतिरिव मत्तहस्तिनः ॥ ६८ ॥

एतदुच्छ्वसितपीतमैन्दवं वोढुमक्षममिव प्रभारसम् ।
मुक्तषट्पदविरावमञ्जसा भिद्यते कुमुदमा निबन्धनात् ॥७०॥

यथा कश्चित् नीलकान्तमौक्तिकयोर्हारकृत् एकं नीलकान्तं ततो मौक्तिकमेकं परीपाट्या हारं रचयति, तथा किरणानां छदपत्रान्तरालेषु पतनात् चन्द्रस्य मौक्तिकनीलकान्तमणिहाररचनौत्सुक्यमुत्प्रेक्षितमित्युत्प्रेक्षालङ्कारः। शशिनि मालाकारव्यवहारसमारोपात् समासोक्तिं परिपुष्णातीत्यनयोरङ्गाङ्गिभावः सङ्करः। प्रस्फुरद्भिरविकल्पसुन्दरीति पाठे हे अविकल्पसुन्दरि! यस्याः सौन्दर्यं सन्देहं नावगाहते सा अविकल्पसुन्दरी तत्सम्बुद्धौ यथार्थसौन्दर्यशालिनीत्यर्थः ॥ ६८ ॥

उन्नतेति। हे प्रिये! गिरेः पर्वतस्य उन्नतावनतभाववत्तया बन्धुरत्वेन इयं सतिमिरा सान्धकारा उन्नतेषु प्रदेशेषु सम्यक् चन्द्रालोकस्य पतनात् अवनतेषु च अप्रवेशादिति भावः चन्द्रिका बहुभिर्नानाविधाभिर्भक्तिभिः रचनाभिरर्पिता जनिता मत्तहस्तिनः भूतिरिव अङ्गलग्नं भस्मेव भूतिर्भस्मनि सम्पदीत्यमरः। भाति राजते। मत्तेति विशेषणेन तादृशहस्तिनः शुण्डादण्डेन स्वाङ्गे भस्मोत्क्षेपणकारित्वं सूचितम्। उपमालङ्कारः ॥ ६८ ॥

एतदिति। एतत् पुरोवर्त्तीत्यर्थः उच्छ्वसितम् अतिस्फीतम् अत्यन्तमित्यर्थः यथा तथा पीतम् ऐन्दवं चान्द्रं प्रभारसं किरणामृतं वोढुं धारयितुमक्षममिव असमर्थमिव मुक्तः त्यक्तः षट्पदस्य भ्रमरस्य विरावो गुञ्जनमिति यावत् येन तथाभूतं भ्रमरगुञ्जनच्छलेन रुवदित्यर्थः

पश्य कल्पतरुलम्बि शुद्धया
ज्योत्स्नया जनितरूपसंशयम् ।
मारुते चलति चण्डिके ! बलाद्
व्यज्यते विपरिवृत्तमंशुकम् ॥ ७१ ॥

शक्यमङ्गुलिभिरुत्थितैरधः शाखिनां पतितपुष्पपेशलैः ।
पत्त्रजर्जरशशिप्रभालवैरेभिरुत्कचयितुं तवालकान् ॥ ७२ ॥
एष चारुमुखि ! योगतारया युज्यते तरलबिम्बया शशी ।

आ निबन्धनात् सम्यक् बन्धनात् मुद्रणादिति यावत् भिद्यते स्वयं विदलितं भवति विकसतीत्यर्थः । कर्मकर्त्तरि लट् । अत्रोत्प्रेक्षालङ्कारः कुड्मले बद्धरसपायिनो जठरभङ्गरूपव्यवहारसमारोपात् समासोक्तिं गमयतीति बोध्यम् ॥ ७० ॥

पश्येति । हे चण्डिके अतिकोपने । चण्डस्त्वत्यन्तकोपन इत्यमरः । शुद्धया विशदया ज्योत्स्नया जनितः उत्पादितः रूपस्य अवयवस्य संशयः सन्देहः यस्य तथाभूतम् उभयोरपि शुभ्रत्वादिति भावः कल्पतरुषु लम्बि लम्बमानम् अंशुकं वस्त्रं मारुते वायौ चलति वहति सति बलात् वेगात् विपरिवृत्तम् आन्दोलितमित्यर्थः सत् व्यज्यते व्यक्तत्वेन अंशुकमेतत् न चन्द्रकर इति प्रतीयते इत्यर्थः ॥७१॥

शक्यमिति । हे प्रिये ! अधःपतितानि पुष्पाणीव पेशलाः मृदुलाः तैः पतितपुष्पकोमलैरिति पाठे स एवार्थः । अतएव अङ्गुलिभिः उद्धृतैः उद्धर्त्तुं शक्यैरिवेत्यर्थः एभिः पुरतः दृश्यमानैरित्यर्थः पत्त्रजर्जराः पत्त्रान्तरपतिता इत्यर्थः ये शशिनश्चन्द्रस्य प्रभालवाः किरणबिन्दवः तैः तव अलकान् चूर्णकुन्तलान् उत्कचयितुं रञ्जयितुं शक्यम् । एतेन चन्द्रकिरणस्यातीव सान्द्रत्वमुक्तम् । काचित्तव सखी एतान् वृक्षाधःपतितचन्द्रकरान् गृहीत्वा तव केशान् रञ्जयत्विति परिहासोक्तिरिति भावः ॥ ७२ ॥

साध्वसादुपगतप्रकम्पया कन्ययेव नवदीक्षया वरः ॥ ७३ ॥
पाकभिन्नशरकाण्डगौरयोरुल्लसत्प्रकृतिजप्रसादयोः ।
रोहतीव तव गण्डलेखयोश्चन्द्रबिम्बनिहिताक्षिचन्द्रिका ॥७४॥
लोहितार्कमणिभाजनार्पितं कल्पवृक्षमधु बिभ्रति स्वयम् ।
त्वामियं स्थितिमतीमुपागता गन्धमादनवनाधिदेवता ॥७५॥
आर्द्रकेसरसुगन्धि ते मुखं
मत्तरक्तनयनं स्वभावतः ।

एष इति । हे चारुमुखि ! सुवदने ! एष शशी चन्द्रः साध्वसात् नवसङ्गमभयादित्यर्थः उपगतप्रकम्पया कम्पमानया नवदीक्षया नवोढ़या कन्यया वरः प्रिय इव तरलविम्बया चञ्चलमण्डलतया योग्या अनुरूपा या तारा तया युज्यते सङ्गच्छते सङ्गमेन शोभते इत्यर्थः । उपमालङ्कारः ॥ ७३ ॥

पाकेति । चन्द्रविम्बे निहिते अर्पिते अक्षिणी नेत्रे यया तथोक्ता तत्सम्बुद्धौ हे चन्द्रदर्शिनीत्यर्थः चन्द्रिका पाकेन परिणत्या भिन्नः वर्णान्तरं गतः यः शरकाण्डस्तृणविशेषावयवस्तद्वत् गौरौ तयोः उल्लसन् स्फुरन् प्रकृतिजः स्वाभाविकः प्रसादः वैशद्यं ययोस्तथाभूतयोस्तव गण्डलेखयोः कपोलयोः रोहतीव प्रस्फुरतीवेत्यर्थः ॥७४॥

लोहितेति । इयं गन्धमादनस्य अद्रेः वनाधिदेवता काननाधिष्ठात्री देवी स्वयं लोहितं रक्तवर्णं यत् अर्कमणिभाजनं सूर्यकान्तमणिपात्रं तत्र अर्पितं स्थापितं कल्पवृक्षमधु सुरतरुपुष्परसं बिभ्रती दधाना सती स्थितिमतीं अत्र तिष्ठन्तीं त्वाम् उपागता पानार्थं तुभ्यं दातुं प्राप्तेत्यर्थः ॥ ७५ ॥

आर्द्रेति । हे विलासिनि ! ते तव मुखं स्वभावतः आर्द्रं मधुसंयोगादिति भावः यत् केशरं बकुलकुसुमं तद्वत् सुगन्धि ससौरभं

अत्र लब्धवसतिर्गुणान्तरं
किं विलासिनि ! मदः करिष्यति ॥७६॥
मान्यभक्तिरथवा सखीजनः सेव्यतामिदमनङ्गदीपनम् ।
इत्युदारमभिधाय शङ्करस्तामपाययत पानमम्बिकाम् ॥७७॥
पार्वती तदुपयोगसम्भवां विक्रियामपि सतां मनोहराम् ।
अप्रतर्क्यविधियोगनिर्मितामाम्रतेव सहकारतां ययौ ॥७८॥

तथा मत्ते चपले रक्ते नयने यस्य तथाभूतम् अतः अत्र मुखे लब्धा वसतिराश्रयो येन तथोक्तः त्वया पीत इति भावः मदः किं गुणान्तरं करिष्यति ? न किमपीत्यर्थः ये ये मदगुणास्ते सर्व एव स्वभावतस्त्वन्मुखे वर्त्तन्ते अतः किं मदेन फलमिति भावः ॥ ७६ ॥

मान्येति । अथवा सखीजनः मान्या आदरणीया भक्तिरनुरागो यस्य तथाभूतः सखीजनादरो माननीयः न त्वहेलनीय इत्यर्थः तस्मात् अनङ्गदीपनं कामोद्दीपनकरम् इदं सख्या वनदेवतया नीतं मध्वित्यर्थः सेव्यतां पीयताम् इतीत्थम् उदारं मनोहरं यथा तथा अभिधाय अनुनीयेत्यर्थः शङ्करः ताम् अम्बिकां पीयते इति पानं मधु अपाययत पायितवान् ॥ ७७ ॥

पार्वतीति । पार्वती तस्य मधुनः उपयोगेन पानेन सम्भवः जननं यस्यास्तथोक्तां मद्यपानजनितामित्यर्थः विक्रियां विकृतिमपि आम्रता रसालत्वम् अप्रतर्क्येण अचिन्त्येन विधियोगेन दैवगत्या निर्मितां जनितां सतां साधूनाम् उपलक्षणमेतत् सर्वेषामित्यर्थः मनोहरां चित्तहारिणीं सहकारतामिव अतिसौरभत्वमिव ययौ प्राप । आम्रभूतो रसालोऽसौ सहकारोऽतिसौरभ इत्यमरः । आम्रः स्वभावमनोहरोऽपि यथा विधियोगेन सहकारत्वप्राप्त्या अतिमनोहरत्वं लभते तथा पार्वत्या विकृतिरपि नितरां हरमनोहारिणी अभूदिति भावः ॥ ७८ ॥

तत्क्षणं विपरिवर्तितह्रियोर्नेष्यतोः शयनमिद्धरागयोः ।
सा बभूव वशवर्तिनी द्वयोः शूलिनः सुवदना मदस्य च ॥७९॥
घूर्णमाननयनं स्खलत्कथं स्वेदबिन्दु मदकारणस्मितम् ।
आननेन न तु तावदीश्वरश्चक्षुषा चिरमुमामुखं पपौ ॥८०॥
तां विलम्बितपनीयमेखलामुद्वहञ्जघनभारदुर्वहाम् ।
ध्यानसम्भृतविभूतिरीश्वरः प्राविशन्मणिशिलागृहं रहः ॥८१॥
तत्र हंसधवलोत्तरच्छदं जाह्नवीपुलिनचारुदर्शनम् ।

तत्क्षणमिति । सा सुवदना सुमुखी पार्वती तत्क्षणं मद्यपानानन्तरक्षण एवेत्यर्थः विपरिवर्त्तिता विहीना ह्रीर्लज्जा याभ्यां तयोक्तयोः त्यक्तत्रपयोरित्यर्थः इद्धः दीप्तः रागः कामावेश इत्यर्थः याभ्यां तथाभूतयोः अतएव शयनं नेष्यतोः प्रापयिष्यतोः शूलिनः हरस्य मदस्य च द्वयोः वशवर्त्तिनी अधीना बभूव ॥ ७९ ॥

घूर्णमानेति । ईश्वरः शम्भुः घूर्णमाने नयने यस्य तथोक्तं स्खलन्ती कथा यस्य तथाभूतं स्वेदबिन्दुभिः सह मदकारणं मोहनमित्यर्थः स्मितं मन्दहासः यत्र तादृशम् उमायाः मुखम् आननेन न तु तावत् चिरमित्यर्थः चक्षुषा चिरं पपौ सातिशयादरं ददर्शेत्यर्थः ॥८०॥

तामिति । ध्यानेन योगेन सम्भृता समाहृता विभूतिः सम्पद् उपभोगसामग्रीत्यर्थः येन तथाभूतः विभूतिर्भूतिरैश्वर्यमित्यमरः ईश्वरः शिवः विलम्बिनी विशेषेण लम्बमाना तपनीयस्य काञ्चनस्य मेखला रशना यस्यास्तथोक्तां जघनस्य भारेण गौरवेण दुर्वहां वोढुमशक्यामित्यर्थः विशालजघनामित्यर्थः तां पार्वतीम् उद्वहन् दधत् रहः एकान्ते मणिशिलागृहं प्राविशत् । ध्यानसम्भृतविभूतिभूषितमिति पाठे ध्यानसम्भृताभिर्विभूतिभिर्भूषितं सज्जितं मणिशिलागृहमित्यस्य विशेषणम् ॥ ८१ ॥

अध्यशेत शयनं प्रियासखः शारदाभ्रमिव रोहिणीपतिः ॥८२॥
क्लिष्टकेशमवलुप्तचन्दनं व्यत्ययार्पितनखं समत्सरम् ।
तस्य तच्छिदुरमेखलागुणं पार्वतीरतमभून्न तृप्तये ॥ ८३ ॥
केवलं प्रियतमादयालुना ज्योतिषामवनतासु पङ्क्तिषु ।
तेन तत्प्रतिगृहीतवक्षसा नेत्रमीलनकुतूहलं कृतम् ॥ ८४ ॥

तत्रेति । तत्र मणिशिलागृहे प्रियायाः पार्वत्याः सखेति प्रियासखः कान्तासहचर इत्यर्थः हर इति शेषः रोहिणीपतिः रोहिण्या सहितश्चन्द्र इत्यर्थः शारदं शरत्कालीनम् अभ्रमिव मेघमिव निर्मलत्वाच्छुभ्रमिति भावः हंसवत् धवल उत्तरच्छदः आस्तरणं यस्य तथाभूतं जाह्नव्या गङ्गायाः पुलिनमिव चारु शोभनं दर्शनं यस्य तादृशं शीयते अस्मिन्निति शयनं शय्याम् अध्यशेत अधिशिश्ये । उपमालङ्कारः ॥ ८२ ॥

क्लिष्टेति । क्लिष्टाः पर्य्यस्ता इत्यर्थः केशा यस्मिन् तत् अवलुप्तं निर्मृष्टं चन्दनं यस्मिन् तथोक्तं व्यत्ययेन विपरीतभावेन अर्पिता नखाः यत्र तादृशम् अतएव समत्सरं सप्रणयकोपं तथा छिदुरः छेदं गतः मेखलागुणः काञ्चीसूत्रं यस्मिन् तथाभूतं पार्वत्या रतं सुरतव्यापारः तस्य हरस्य तृप्तये परितोषाय न अभूत् । भोगतृष्णाया आतिशय्यादिति भावः ॥ ८३ ॥

केवलमिति । ज्योतिषां पङ्क्तिषु नक्षत्रमण्डलीष्वित्यर्थः अवनतासु अस्तं गतास्विति यावत् प्रभातकल्पायां शर्व्वर्यामिति भावः केवलं प्रियतमायां पार्वत्यां दयालुना अत्यन्तसम्भोगे इयं क्लिष्टा स्यादिति दयावतेत्यर्थः न तु स्वयमशक्तेनेति भावः तेन हरेण तया कान्तया प्रतिगृहीतम् आश्लिष्टं वक्षो यस्य तादृशेन वक्षसि प्रियतमां वहतेति भावः सता नेत्रयोः निमीलनस्य मुद्रणस्य निद्राया इत्यर्थः कुतूहलं कृतं निद्रितमित्यर्थः ॥ ८४ ॥

स व्यबुध्यत बुधस्तवोचितः शातकुम्भकमलाकरैःसमम् ।
मूर्च्छनापरिगृहीतकैशिकैः किन्नरैरुषसि गीतमङ्गलः ॥८५॥
तौ क्षणं शिथिलितोपगूहनौ दम्पती रचितमानसोर्मयः ।
पद्मभेदपिशुनाः सिषेविरे गन्धमादनवनान्तमारुताः ॥८६॥

स इति । बुधानां विदुषां स्तवे स्तुत्याम् उचितः स्तवयोग्यः बुधैर्देववृन्दैः स्तूयमान इति भावः उषसि प्रत्यूषे मूर्च्छनया स्वरारोहावरोहक्रमभेदेन परिगृहीताः कैशिका वीणातन्त्वः यैः तादृशैः किन्नरैः देवयोनिभेदैः गीतं मङ्गलं शुभं यस्य तथाभूतः सन् शातकुम्भकमलानां सुवर्णपद्मानाम् आकरैः समूहैः समं सह व्यबुध्यत जागरितवान् ।

स व्यबुध्यत तया निशाक्षये शातकुम्भकमलाकरः समम् ।
मूर्च्छनापरिगृहीतवंशिकैः किन्नरैः समुपगीत मङ्गलः ॥

इति पाठान्तरम् ।

तत्र मूर्च्छनया परिगृहीता वंशी वेणुर्यैः तथाभूतैः किन्नरैः समुपगीतं सम्यक् समीपे गीतं मङ्गलं यस्य तथाभूतः स हरः तया शातकुम्भकमलाकरः स्वर्णपद्मनिलयः मानसं सर इत्यर्थः समं युगपत् निशाक्षये प्रभाते व्यबुध्यतेत्यन्वयः ॥ ८५ ॥

ताविति । रचिता जनिता मानसस्य सरसः ऊर्मयस्तरङ्गा येन तथाभूतः चलितमानसोर्मय इति पाठे चलिताः कम्पिता मानसस्य ऊर्मयः येनेति स एवार्थः एतेन वायोः शैत्यं सूचितम् । पद्मानां भेदस्य दलविसारणस्य पिशुनाः सूचकाः पद्मगन्धवहा इति भावः एतेन मान्द्यं सौरभञ्च सूचितम् । गन्धमादनस्य पर्वतस्य वनान्तमारुताः क्षणम् अल्पकालं शिथिलितं त्यक्तम् उपगूहनम् आलिङ्गनं याभ्यां तादृशौ तौ दम्पती पार्वतीपरमेश्वरौ सिषिविरे सेवितवन्तः । गात्रस्पर्शेन सुखीचक्रुरित्यर्थः ॥ ८६ ॥

ऊरुमूलनखमार्गराजिभिस्तत्क्षणं हृतविलोचनो हरः ।
वाससः प्रशिथिलस्य संयमं कुर्वतीं प्रियतमामवारयत् ॥८७॥
स प्रजागरकषायलोचनं गाढ़दन्तपरिताड़िताधरम् ।
आकुलालकमरंस्त रागवान् प्रेक्ष्य भिन्नतिलकं प्रियामुखम् ८८

तेन भिन्नविषमोत्तरच्छदं
मध्यपिण्डितविसूत्रमेखलम् ।
निर्मलेऽपि शयनं निशात्यये
नोज्झितं चरणरागलाञ्छितम् ॥ ८९ ॥

ऊर्विति । हरः ऊरुमूले ये नखमार्गा नखक्षतानीत्यर्थः तेषां राजिभिः पङ्क्तिभिः तत्क्षणं तद्दर्शनक्षणेनैवेत्यर्थः हृतानि विलोचनानि यस्य तथाभूतः सन् प्रशिथिलस्य प्रकर्षेण स्खलत इत्यर्थः वाससः वसनस्य संयमं संवरणं सञ्चयमिति पाठे स एवार्थः कुर्वतीं प्रियतमां पार्वतीम् अवारयत् मा वसनेनाङ्गमाच्छादयेति निवारितवान् ॥ ८७ ॥

स इति । रागवान् अनुरागप्रवणः स हरः प्रजागरेण कषाये कलुषे लोचने यस्य तथोक्तं गाढ़ं यथा तथा दन्तैः परिताड़ितः क्षतः अधरो यस्य तथाभूतं गाढ़दन्तपदताड़िताधरमिति पाठे गाढं यथा तथा दन्तपदैः दशनक्षतैः ताड़ितः अधरो यस्य तथाभूतम् आकुलाः व्यत्यस्ता अलकाश्चूर्णकुन्तला यस्मिन् तादृशं भिन्नतिलकं निर्मृष्टतिलकं प्रियामुखं प्रेक्ष्य दृष्ट्वा अरंस्त तुतोष पुनर्विजहार वा ॥ ८८ ॥

तेनेति । निशाया अत्यये अवसाने प्रभाते इत्यर्थः निर्मले प्रकटेऽपि तेन हरेण भिन्नः विपर्यस्तः अतएव विषम उन्नतानत इत्यर्थः उत्तरच्छदः आस्तरणं यस्य तादृशं मध्ये पिण्डिता मिलिता विसूत्रा छिन्नसूत्रेत्यर्थः मेखला काञ्ची यस्मिन् तथोक्तं तथा चरणयोः रागेण अलक्तकद्रवेणेत्यर्थः लाञ्छितं चिह्नितं रञ्जितमिति वा शयनं शय्या न उज्झितं न त्यक्तम् ॥ ८९ ॥

स प्रियामुखरसं दिवानिशं हर्षवृद्धिजननं सिषेविषुः ।
दर्शनप्रणयिनामदृश्यतामाजगाम विजयानिवेदनात् ॥९०॥

समदिवसनिशीथं सङ्गिनस्तत्र शम्भोः
शतमगमदृतूनां साग्रमेका निशेव ।
न च सुरतसुखेभ्यश्छिन्नतृष्णो बभूव
ज्वलन इव समुद्रान्तर्गतस्तज्जलेभ्यः ॥ ९१ ॥

इति श्रीमहाकविकालिदासकृतौ कुमारसम्भवे महाकाव्ये
उमासुरतवर्णनं नाम अष्टमः सर्गः ।

स इति । स हरः दिवानिशं हर्षवृद्धिजननम् आनन्दातिशयदं प्रियायाः पार्वत्याः मुखरसं वदनामृतं सिषेविषुः पिपासुरित्यर्थः विजयायाः पार्वतीसख्या निवेदनात् ज्ञापनात् विजयानिवेदित इति पाठे विजयया निवेदितः भवद्दर्शनार्थिनः आगता इति विज्ञापितोऽपीत्यर्थः दर्शनप्रणयिनां दर्शनार्थिनां देवानामिति शेषः अपिरत्राध्याहार्य्यः । अदृश्यताम् आजगाम न दर्शनं ददौ केवलं प्रेमासक्तौ निभृतं तस्थाविति भावः ॥ ९० ॥

समेति । तत्र गन्धमादनाद्रौ सङ्गिनः पार्वतीसङ्गवत इत्यर्थः शम्भोः समौ तुल्यौ दिवसनिशीथौ दिवारजन्यौ यत्र तादृशं सार्द्धम् ऋतूनां शतम् एका निशेव अगमत् सुखातिशयेन तादृशदीर्घकालस्य क्षणिकत्वावगमादिति भावः । समुद्रान्तर्गतः ज्वलनः वाड़वाग्निरित्यर्थः तस्य समुद्रस्य जलेभ्य इव सुरतसुखेभ्यः छिन्ना विगता तृष्णा यस्य तादृशः वितृष्ण इत्यर्थः न च बभूव । भोगतृष्णाया आनन्त्यादिति भावः ॥ ९१ ॥

इति अष्टमः सर्गः ।

——

# नवमः सर्गः ।

तथाविधेऽनङ्गरसप्रसङ्गे मुखारविन्दे मधुपः प्रियायाः ।
सम्भोगवेश्म प्रविशन्तमन्तर्ददर्श पारावतमेकमीशः ॥ १ ॥
सुकान्तकान्तामणितानुकारं कूजन्तमाघूर्णितरक्तनेत्रम् ।
प्रस्फारितोन्नम्रविनम्रकण्ठं मुहुर्मुहुर्न्यञ्चितचारुपुच्छम् ॥२॥
विशृङ्खलं पक्षतियुग्ममीषद्दधानमानन्दगतिं मदेन ।
शुभ्रांशुवर्णं जटिलाग्रपादमितस्ततो मण्डलकैश्चरन्तम् ॥ ३ ॥

तथाविधे इति । प्रियायाः पार्वत्या मुखारविन्दे मधु पिबतीति तथोक्तः मधुपानरतः भ्रमरभूत इत्यर्थः ईशः शम्भुः तथाविधे पूर्वोक्तप्रकारे अनङ्गरसप्रसङ्गे कामरसप्रसक्तौ सम्भोगवेश्म क्रीड़ागृहम् अन्तः प्रविशन्तमेकं पारावतं कपोतं ददर्श । उपजातिवृत्तमत्र सर्गे तदुक्तं स्यादिन्द्रवज्रा यदि तौ जगौ ग इति उपेन्द्रवज्रा प्रथमे लघौ सेति अनन्तरोदीरित लक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति च ॥१॥

द्वाभ्यां पारावतं विशिनष्टि सुकान्तमिति । सुकान्तम् अतिमनोहरं यत् कान्तया मणितं सुरतकूजितं मणितं रतिकूजितमित्यमरः । तस्य अनुकारः अनुकरणं यस्मिन् तद् यथा तथा कूजन्तं रुवन्तम् आघूर्णिते रक्ते नेत्रे यस्य तथोक्तम् । प्रस्फारितः विस्तारितः उन्नम्रः कदाचित् उन्नतः विनम्रः कदाचिद्विनतः कण्ठो यस्य तथाभूतं मुहुर्मुहुः पुनः पुनः न्यञ्चितः सङ्कुचितश्चारुपुच्छः येन तादृशम् ॥ २ ॥

विशृङ्खलमिति । विशृङ्खलं शृङ्खलारहितं निगड़शून्यमित्यर्थः स्वेच्छाचारिणमिति यावत् ईषत् अल्पं पक्षतियुग्मं पक्षमूलद्वयं तथा मदेन उल्लासेन आनन्दगतिं दधानं पक्षतिः पक्षमूलं स्यादित्यमरः ।

रतिद्वितीयेन मनोभवेन
ह्रदात्सुधायाः प्रविगाह्यमानात्।
तं वीक्ष्य फेनस्य चयं नवोत्थ-
मिवाभ्यनन्दत् क्षणमिन्दुमौलिः ॥४॥

तस्याकृतिं कामपि वीक्ष्य दिव्यामन्तर्भवश्छद्मविहङ्गमग्निम्।
विचिन्तयन् संविविदे स देवो भ्रूभङ्गभीमश्च रुषा बभूव ॥५॥

स्वरूपमास्थाय ततो हुताशः स्वसन्वलत्कम्पकृताञ्जलिः सन्।
प्रवेपमानो नितरां स्मरारिमिदं वदो व्यक्तमथाभ्युवाच ॥६॥

शुभ्रा धवला अंशवः प्रभा यस्य तादृशो वर्णो यस्य तथोक्तं श्वेतकान्तिमित्यर्थः। जटिलौ जटायुक्तौ अग्रपादौ यस्य तथोक्तम्। तथा मण्डलकैः मण्डलाकारगतिविशेषेण चरन्तं विचरन्तम्। तं कपोतं ददर्शेत्यन्वयः। त्रिभिः श्लोकैः विशेषकम् ॥ ३ ॥

रतीति। इन्दुमौलिः शिवः तं पारावतं रतिद्वितीयेन कान्तासहचरेण मनोभवेन कामेन प्रविगाह्यमानात् आलोड्यमानात् सुधाया अमृतस्य ह्रदात् सरसः नवोत्थम् अभिनवसमुत्थितं फेनस्य चयं पुञ्जमिव वीक्ष्य दृष्ट्वा अभ्यनन्दत् तुतोष ॥ ४ ॥

तस्येति। स देवो भवः शम्भुः तस्य पारावतस्य कामपि अनिर्वचनीयामित्यर्थः दिव्याम् आकृतिम् अवयवं तदाकृतिमितिपाठे स एवार्थः। वीक्ष्य दृष्ट्वा विचिन्तयन् ध्यायन् सन् छद्मना विहङ्गं विहङ्गाकृतिम् अग्निं देवमिति शेषः अन्तः मनसा संविविदे ज्ञातवान्। रुषा कोपेन भ्रूभङ्गभीमः भ्रुकुटीभीषणश्च बभूव। असमयोपस्थितेरिति भावः ॥ ५ ॥

स्वरूपमिति। ततः हरस्यान्तः स्वज्ञानानन्तरं हुताशः अग्निः स्वरूपं निजमूर्त्तिम् आस्थाय आश्रित्य त्रसन् बिभ्यत् वलता प्रबलेन कम्पेन कृतः अञ्जलिर्येन तथोक्तः तथा नितरामत्यर्थं प्रवेपमानः

अस्ति त्वमेको जगतामधीशः स्वर्गौकसां त्वं विपदो निहंसि।
ततः सुरेन्द्रप्रमुखाः प्रभो ! त्वामुपासते दैत्यवरैर्विधूताः ॥७॥
त्वया प्रियाप्रेमवशंवदेन शतं व्यतीये सुरतादृतूनाम् ।
रहः स्थितेन त्वदवीक्षणार्तो दैन्यं परं प्राप सुरैः सुरेन्द्रः ॥८॥
त्वदीयसेवावसरप्रतीक्षैरभ्यर्थितः शक्रमुखैः सुरैस्त्वाम् ।
उपागतोऽन्वेष्टुमहं विहङ्गरूपेण विद्वन् ! समयोचितेन ॥९॥

प्रकम्पमानः सन् अथ स्मरारिं हरम् इदं वक्ष्यमाणं वचः व्यक्तं प्रकाशं यथा तथा अध्युवाच अभ्युवाचेति वा पाठः। त्रासस्खलत्-कम्पकृताञ्जलिरिति वा पाठे त्रासेन भयेन स्खलन् वियोगं गच्छन्नित्यर्थः कम्पेन कृतः अञ्जलिर्येन तथाभूत इत्यर्थः ॥ ६ ॥

अस्मीति। हे देव ! एकस्त्वं जगताम् अधीशः अधीश्वरः असि, नान्य इति शेषः, त्वं स्वर्ग ओकः स्थानं येषां तेषां देवानामित्यर्थः विपदः निहंसि नाशयसि। हे प्रभो ! ततः कारणात् विपत्पातादित्यर्थः दैत्यवरैः तारकादिभिः विधूताः कम्पिता उपद्रुता इत्यर्थः सुरेन्द्रः देवराजः प्रमुखोऽग्रणीर्येषां ते देवाः त्वाम् उपासते सेवन्ते ॥ ७ ॥

त्वयेति। त्वया प्रियायाः कान्तायाः प्रेमवशंवदेन प्रणयासक्तेन अतएव रहसि एकान्तस्थितेन सता सुरतात् सुरतमाश्रित्येत्यर्थः ल्यबर्थे पञ्चमी ऋतूनां शतं व्यतीये अतिवाहितं बहवः काला अतीता इत्यर्थः, सुरेन्द्रः शचीपतिः सुरैः देवैः सह तव अवीक्षणेन अदर्शनेन आर्त्तः व्यथितः सन् परम् अत्यर्थं दैन्यं वैक्लव्यं प्राप। व्यतीयेऽत्र भवदृतुनामिति पाठे हे अत्र भवन् पूज्य ! इत्यर्थः। त्वदनीक्षणेनेति पाठे तव अनीक्षणेन अदर्शनेनेति स एवार्थः ॥ ८ ॥

त्वदीयेति। हे विद्वन् जानन् सर्वान्तर्यामिन्नित्यर्थः त्वदीयः यः सेवावसरः सेवासमयः तं प्रतीक्षन्ते इति तथोक्तैः त्वत्सेवार्थिभिरित्यर्थः शक्रमुखैः इन्द्रादिभिः सुरैः अभ्यर्थितः भवत्सकाशं गन्तुं

इति प्रभो ! चेतसि सम्प्रधार्य
तन्नोऽपराधं भगवन् ! क्षमस्व ।
पराभिभूता वद किं क्षमन्ते
कालातिपातं शरणार्थिनोऽमी ॥ १० ॥

प्रभो ! प्रसीदाशु सृजात्मपुत्रं
यं प्राप्य सेनान्यमसौ सुरेन्द्रः ।
स्वर्लोकलक्ष्मीप्रभुतामवाप्य
जगत्त्रयं पाति तव प्रसादात् ॥ ११ ॥

प्रार्थितः अहं समयोचितेन विहङ्गरूपेण पक्षिच्छद्मनेत्यर्थः त्वाम् अन्वेष्टुम् उपागतः प्राप्तः ॥ ९ ॥

इतीति । हे भगवन् ! हे प्रभो ! निग्रहानुग्रहसमर्थ ! इति चेतसि सम्प्रधार्य्य सम्यक् विचार्य्य नः अस्माकं तम् अपराधं छद्मना भवद्विहारदेशगमनरूपं क्षमस्व सहस्व । कथं यूयं समयं न प्रतीक्षा-ध्वेत्याशङ्क्याह परेति परैः शत्रुभिः अभिभूताः प्रपीड़िताः अतएव शरणार्थिनः त्राणार्थिनः अमी देवाः किं कालातिपातं कालविलम्बं क्षमन्ते सहन्ते ? वद नैव क्षमन्ते इत्यर्थः । आर्त्तैः कालविलम्बो न सह्यते इति भावः ॥ १० ॥

प्रभो इति । हे प्रभो ! आशु शीघ्रं प्रसीद प्रसन्नो भव, आ-त्मनः पुत्रं सृज उत्पादय, असौ सुरेन्द्रः देवराजः यं भवत्सृष्टं पुत्रं सेनान्यं सेनापतिं प्राप्य आश्रित्येत्यर्थः स्वर्लोकस्य या लक्ष्मीः श्रीः तस्याः साम्प्रतं परैर्हृतताया इति भावः प्रभुताम् अधिकारित्वं शत्रु-जयेनेतिभावः अवाप्य अधिगम्य तव प्रसादात् अनुग्रहात् जगतां त्रयं त्रिभुवनमित्यर्थः पाति पालयति भविष्यत् सामीप्ये लट् । प्रसीदाथेति पाठे अथ प्रसादानन्तरमित्यर्थः । स्वर्गैकलक्ष्मीप्रभुता-

स शङ्करस्तामिति जातवेदो-
विज्ञापनामर्थवतीं निशम्य ।
अभूत्प्रसन्नः परितोषयन्ति
गीर्भिर्गिरीशा रुचिराभिरीशम् ॥ १२ ॥

प्रसन्नचेता मदनान्तकारः
स तारकारेर्जयिनो भवाय ।
शक्रस्य सेनाधिपतेर्जयाय
व्यचिन्तयच्चेतसि भावि किञ्चित् ॥ १३ ॥

युगान्तकालाग्निमिवाविषह्यं परिच्युतं मन्मथरङ्गभङ्गात् ।
रतान्तरेतः स हिरण्यरेतस्यथोर्ध्वरेतास्तदमोघमाधात् ॥१४॥

मितिपाठे स्वर्गस्य एकः अद्वितीयः यः स्वच्छोप्रभुः तस्य भावस्तां स्वर्गस्यैकाधिपत्यमित्यर्थः ॥ ११ ॥

स इति । स शङ्करः इति उक्तप्रकारां ताम् अर्थवतीं सत्यामित्यर्थः जातवेदसः अग्नेः विज्ञापनां निवेदनं निशम्य श्रुत्वा प्रसन्नः प्रीतः अभूत् । तथाहि गिरां वाचाम् ईशाः वागीश्वराः सुवक्तार इत्यर्थः रुचिराभिः मनोहराभिः गीर्भिः वाग्भिः ईशं प्रभुं परितोषयन्ति प्रसादयन्ति । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥१२॥

प्रसन्नेति । प्रसन्नं चेतो यस्य तथोक्तः स मदनान्तकारः स्मरारिः जयिनः जयशीलस्य जयाय शत्रुजयार्थं शक्रस्य सेनाधिपतेः तारकारेः तारकासुरघातकस्य स्वपुत्रस्येत्यर्थः भवाय जन्मने चेतसि भावि भविष्यत् किञ्चित् व्यचिन्तयत् विशेषेण चिन्तितवान् ॥ १३ ॥

युगान्तेति । अथ चिन्तनानन्तरमित्यर्थः ऊर्द्धं ऊर्द्धगामीत्यर्थः स्वल्पधोगामि तेन पार्वतीयोनौ न पतितमिति भावः रेतोवीर्य्यं यस्य तथाभूतः स हरः मन्मथरङ्गभङ्गात् कामक्रीड़ायाः भङ्गादित्यर्थः

अथोष्णबाष्पानिलदूषितान्तं विशुद्धमादर्शमिवात्मदेहम् ।
बभार भूम्ना सहसा पुरारिरेतः परिक्षेपकुवर्णमग्निः ॥१५॥

त्वं सर्वभक्ष्यो भव भीमकर्मा
कुष्ठाभिभूतोऽनल ! धूमगर्भः ।
इत्थं शशापाद्रिसुता हुताशं
रुष्टा रतानन्दसुखस्य भङ्गात् ॥ १६ ॥

दक्षस्य शापेन शशी क्षयीव प्लुष्टो हिमेनेव सरोजकोशः ।
वहन्विरूपं वपुरुग्ररेतस्तयेन वह्निः किल निर्जगाम ॥ १७ ॥

परिच्युतं स्खलितं युगान्तकालाग्निमिव अविषह्यं सोढुमशक्यं तत्प्रसिद्धम् अमोघम् अव्यर्थं रतान्तरेतः सुरतान्तवीर्य्यं हिरण्यरेतसि अग्नौ आधात् निहितवान् ॥ १४ ॥

अथेति । अथानन्तरं रेतोनिधानात्परमित्यर्थः विशुद्धं पवित्रं समुज्ज्वलमित्यर्थः आत्मनः देहं सहसा उष्णेन बाष्पानिलेन मुखमारुतेन दूषितः मलिनीकृतः अन्तः उपरिभागः यस्य तथोक्तं आदर्शमिव दर्पणमिव भूम्ना अतिशयेन पुरारेर्हरस्य रेतःपरिक्षेपेण वीर्य्यसेकेन कुवर्णं मलिनवर्णं बभार दधौ । कुवर्णमित्यत्र विवर्णमिति पाठान्तरम् ॥ १५ ॥

त्वमिति । अद्रिसुता पार्वती रतानन्दस्य सुरतसुखस्य भङ्गात् नाशात् रेतःस्खलनेनेति भावः रुष्टा कुपिता सती हे अनल ! त्वं सर्वं खाद्यमखाद्यं वा भक्ष्यं यस्य तथाभूतः भीमं भयङ्करं कर्म यस्य तथोक्तः कुष्ठेन रोगविशेषेण अभिभूतः प्रपीड़ितः तथा धूमो गर्भे अभ्यन्तरे यस्य तादृशः भव इत्यम् अनेन प्रकारेण हुताशम् अग्निं शशाप अभिशप्तवती ॥ १६ ॥

दक्षस्येति । वह्निः दक्षस्य प्रजापतेः शापेन क्षयी क्षयरोगवान् शशीव चन्द्र इव हिमेन शिशिरेण प्लुष्टः दग्धः क्षयित इत्यर्थः

स पावकालोकरुषा विलक्षां स्मरत्रपास्मेरविनम्रवक्त्राम् ।
विनोदयामास गिरीन्द्रपुत्रीं शृङ्गारगर्भैर्मधुरैर्वचोभिः ॥१८॥
हरो विकीर्णं घनघर्मतोयैर्नेत्राञ्जनाङ्कं हृदयप्रियायाः ।
द्वितीयकौपीनचलाञ्चलेनाहरन्मुखेन्दोरकलङ्किनोऽस्याः ॥१९॥

सरोजकोश इव पद्मकोश इव उग्रस्य हरस्य उग्रः कपर्दी श्रीकण्ठ इत्यमरः रेतसां वीर्य्याणां चयेन सङ्घातेन विरूपं कुत्सिताकारं वपुः शरीरं वहन् किलेति प्रसिद्धौ निर्जगाम ततः सम्भोगगृहादिति शेषः ॥ १७ ॥

स इति । स हरः पावकस्य अग्नेः आलोकेन सम्भोगसमये इति भावः या रुट् कोपः तया विक्षतः लक्ष्यचिह्नं भाव इत्यर्थः यस्यास्तथोक्तां तथा स्मरत्रपाभ्यां कामलज्जाभ्यां स्मेरं विनम्रं विनतञ्च वक्त्रं वदनं यस्यास्तादृशीं गिरीन्द्रपुत्रीं पार्वतीं शृङ्गारः सुरतं गर्भे मध्ये येषां तथोक्तैः मधुरैः मनोहारिभिः वचोभिः विनोदयामास प्रसादितवान् । पावकालोकरुषेत्यत्र पावकालोकनत इति पाठे पावकस्य अग्नेः आलोकनतः दर्शनात् तादृशसमये इति भावः विलक्षां विलज्जितामित्यर्थः ॥ १८ ॥

हर इति । हरः हृदयप्रियायाः हृदयादपि प्रिया तस्याः प्राणप्रियाया इत्यर्थः अस्याः पार्वत्याः अकलङ्किनः निष्कलङ्कस्य मुखेन्दोर्वदनारविन्दस्य सम्बन्धिनं घनघर्मतोयैः घनानि सान्द्राणि यानि घर्मतोयानि प्रस्वेदबिन्दव इत्यर्थः तैः विकीर्णं व्याप्तं नेत्रयोरञ्जनमेव अङ्कः कलङ्कः तं द्वितीयस्य उत्तरीयभूतस्येति भावः कौपीनस्य स्कन्धलम्बिनो वस्त्रखण्डस्य कौपीनं स्यादधोवस्त्रं योगिनः स्कन्धलम्बि चेति मेदिनी । चलेन अञ्चलेन प्रान्तदेशेन अहरत् अपनीतवान् । हृदयप्रियाया इत्यत्र सदयं प्रियाया इति पाठान्तरम् । अहरदित्यत्र हरन्निति पाठे परश्लोकेनान्वयः कार्य्य इत्यलम् ॥ १९ ॥

मन्देन खिन्नाङ्गुलिना करेण कम्प्रेण तस्या वदनारविन्दात् ।
परामृशन् घर्मजलं जहार हरः सहेलं व्यजनानिलेन ॥२०॥
रतिश्लथं तत्कबरीकलापमंसावसक्तं विगलत्प्रसूनम् ।
स पारिजातोद्भवपुष्पमय्या स्रजा बबन्धामृतमूर्तिमौलिः॥२१॥
कपोलपाल्यां मृगनाभिचित्रपत्रावलीमिन्दुमुखः सुमुख्याः ।
स्मरस्य सिद्धस्य जगद्विमोहमन्त्राक्षरश्रेणिमिवोल्लिलेख ॥२२॥
रथस्य कर्णावभि तन्मुखस्य ताटङ्कचक्रद्वितयं न्यधात्सः ।

मन्देनेति । हरः मन्देन लघुप्रचारेण खिन्ना घर्मार्त्ता अङ्गुलयः यस्य तादृशेन कम्प्रेण वेपथुमता करेण तस्याः पार्वत्या वदनारविन्दात् घर्मजलं परामृशन् अपनयन् सहेलं सविलासं व्यजनानिलेन जहार शोषयामास ॥ २० ॥

रतिश्लथमिति । अमृतमूर्त्तिश्चन्द्रः मौलौ शिरसि यस्य स चन्द्रशेखर इत्यर्थः पारिजातात् उद्भवतीति तथोक्तं यत् पुष्पं तन्मय्या स्रजा पारिजातकुसुममालयेत्यर्थः रत्या सुरतविहारेण श्लथं स्खलितमित्यर्थः अतएव विगलन्ति च्योतन्ति प्रसूनानि पुष्पाणि यस्मात् तथाभूतम् अंसावसक्तं स्कन्धविलग्नं तस्याः पार्वत्याः कबरीकलापं केशचयं बबन्ध संयमितवान् ॥ २१ ॥

कपोलेति । इन्दुश्चन्द्रः मुखे शिरसीति यावत् यस्य तथोक्तः अथवा इन्दुरिव मुखं यस्य तथोक्तः हरः सुमुख्याः सुवदनायाः पार्वत्याः कपोलपाल्यां गण्डलेखायां मृगनाभेः कस्तूर्याः चित्रा मनोहारिणी विविधप्रकारा वा या पत्रावली पत्ररचना तां सिद्धस्य अभीष्टविषये सिद्धिं गतस्य कामस्य जगतां विमुह्यते अनेनेति विमोहः यः मन्त्रः तस्य अक्षराणां वर्णानां श्रेणिमिव पङ्क्तिमिव उल्लिलेख चतुरकर्षेण लिखितवान् ॥ २२ ॥

रथस्येति । स हरः कर्णौ अभि कर्णसमीपे कर्णयोरित्रि

जगज्जिगीषुर्विषमेषुरेष ध्रुवं यमारोहति पुष्पचापः ॥ २३ ॥

तस्याः स कण्ठे पिहितस्तनाग्रां
न्यधत्त मुक्ताफलहारवल्लीम् ।
या प्राप मेरुद्वितयस्य मूर्ध्नि
स्थितस्य गङ्गौघयुगस्य लक्ष्मीम् ॥ २४ ॥

नखव्रणश्रेणिवरे बबन्ध नितम्बबिम्बे रशनाकलापम् ।
चलस्य चेतोमृगबन्धनाय मनोभुवः पाशमिव स्मरारिः ॥२५॥

यावत् तस्याः पार्वत्या मुखस्य रथस्य रथभूतस्य ताटङ्के कर्णाभरणविशेषौ एव चक्रे तयोर्द्वितयं न्यधात् निहितवान् अर्पितवानित्यर्थः एष विषमेषुः पञ्चशरः पुष्पचापः कुसुमधन्वा कामः जगत् जिगीषुर्जेतुमिच्छुः सन् यं पार्वतीमुखरूपं रथं आरोहति ध्रुवमुत्प्रेक्षे । ताटङ्कभूषितेन पार्वतीमुखेन कामो जगत् जयतीति सम्भाव्यते इति भावः उत्प्रेक्षालङ्कारः ॥ २३ ॥

तस्या इति । स हरः तस्याः पार्वत्याः कण्ठे पिहितम् आवृतं स्तनयोरग्रं यया तथाभूतां स्तनावरणकारिणीमित्यर्थः मुक्ताफलानां मौक्तिकानां हारवल्लीं हारयष्टिं न्यधत्त अर्पितवान् । या हारवल्ली मेरुद्वितयस्य सुमेरुपर्वतद्वयस्य मूर्ध्नि शिरसि स्थितस्य गङ्गाया ओघयुगस्य प्रवाहद्वयस्य लक्ष्मीं श्रियं प्राप उवाह । अत्र एकस्य धर्मः कथमन्यत्र गच्छतीति असम्भवद्वस्तुसम्बन्धेन लक्ष्मीमिव लक्ष्मीमित्यौपम्ये पर्य्यवसानात् निदर्शनालङ्कारः तदुक्तं सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र विम्बानुविम्बत्वं बोधयेत् सा निदर्शनेति ॥ २४ ॥

नखेति । स्मरारिः शम्भुः नखानां व्रणश्रेणिभिः क्षतपङ्क्तिभिः वरे मनोहरे धरेतिपाठे नखव्रणश्रेणीनां धरे नितम्बबिम्बे तस्या इति शेषः चलं चञ्चलं यत् स्वस्य चेतः चित्तं तदेव मृगः तस्य बन्धनाय

भालेक्षणाग्नौ स्वयमञ्जनं स
भङ्क्त्वा दृशोः साधु निवेश्य तस्याः ।
नवोत्पलाक्ष्याः पुलकोपगूढे
कण्ठे विनीलेऽङ्गुलिमुज्जघर्ष ॥ २६ ॥

अलक्तकं पादसरोरुहाग्रे सरोरुहाक्ष्याः किल सन्निवेश्य ।
स्वमौलिगङ्गासलिलेन हस्तारुणत्वमक्षालयदिन्दुचूडः ॥२७॥

भस्मानुलिप्ते वपुषि स्वकीये सहेलमादर्शतलं विसृज्य ।
नेपथ्यलक्ष्म्याः परिभावनार्थमदर्शयज्जीवितवल्लभां सः ॥२८॥

मनोभुवः कामस्य पाशमिव बन्धनरज्जुमिव रशनाकलापं काञ्चीदाम बबन्ध अर्पितवान् । उत्प्रेक्षालङ्कारः ॥ २५ ॥

भालेक्षणाग्नाविति । स हरः भालेक्षणं ललाटनेत्रमेव अग्निः दीप इति यावत् तत्र स्वयम् अञ्जनं कज्जलं भङ्क्त्वा पातयित्वा स्वाङ्कलाविति भावः नवोत्पलाक्ष्यास्तस्याः पार्वत्याः दृशोः नेत्रयोः साधु सम्यक् चारु यथा तथा निवेश्य अर्पयित्वा कज्जलेन दृशौ रञ्जयित्वेति भावः पुलकैर्लोमाञ्चैः उपगूढे व्याप्ते विशेषेण नीले श्यामले कण्ठे स्वस्येति शेषः अङ्गुलिम् उज्जघर्ष उद्धृष्टवान्। यथा कश्चिद्दीपकोपरि कज्जलं पातयित्वा स्वस्य कान्ताया नेत्रे रञ्जयित्वा स्वाङ्गुलिं केशादावुद्घर्षति तद्वदिति भावः स्वभावोक्तिरलङ्कारः ॥ २६ ॥

अलक्तकमिति । इन्दुचूडः हरः सरोरुहाक्ष्याः पद्मनेत्रायाः पादसरोरुहाग्रे चरणारविन्दप्रान्ते अलक्तकं लाक्षारागं सन्निवेश्य लाक्षारागेण चरणौ रञ्जयित्वेत्यर्थः स्वस्य आत्मनः मौलौ या गङ्गा तस्याः सलिलेन हस्तस्य अरुणत्वं अलक्तकरागं अक्षालयत् क्षालितवान् । अपनीतवानित्यर्थः । इन्दुचूडः इत्यत्रेन्दुमौलिरिति पाठान्तरम् ॥ २७ ॥

भस्मेति । स हरः भस्मभिर्विभूतिभिरनुलिप्ते आच्छादिते

प्रियेण दत्ते मणिदर्पणे सा सम्भोगचिह्नं स्ववपुर्विभाव्य।
त्रपावती तत्र घनानुरागं रोमाञ्चदम्भेन बहिर्बभार॥ २९॥
नेपथ्यलक्ष्मीं दयितोपक्लृप्तां सस्मेरमादर्शतले विलोक्य।
अमंस्त सौभाग्यवतीषु धुर्य्यमात्मानमुद्भूतविलक्षभावा॥३०॥
अन्तः प्रविश्यावसरेऽथ तत्र
स्निग्धे वयस्ये विजया जया च।

स्वकीये वपुषि शरीरे आदर्शतलं दर्पणान्तं निक्षिप्य परिष्कृत्य विशदी-कृत्येति यावत् नेपथ्य लक्ष्म्याः वेशश्रियः परिभावनार्थं परिदर्शनार्थं जोषितवल्लभां प्राणेश्वरीं पार्वतीं सहेलं सविलासं अदर्शयत् अर्पया-मासेति भावः। नेपथ्यलक्ष्म्याः परिभावनार्थमित्यत्र नेपथ्यलक्ष्मी-परिभावनार्थमिति पाठान्तरम्॥ २८॥

प्रियेणेति। सा पार्वती प्रियेण हरेण मणिदर्पणे मणिमये आदर्शे सम्भोगस्य चिह्नानि नखक्षतादीनि यत्र तादृशं स्वस्य वपुः शरीरं विभाव्य निरीक्ष्य त्रपावती लज्जिता सती तत्र प्रिये हरे रोमाञ्चदम्भेन पुलकच्छलेन घनं निविड़म् अनुरागं प्रेम बहिः बाह्यदेशे बभार धृतवती हृदयस्थं प्रेम रोमाञ्चव्याजेन प्रकटयामासेति भावः। अपह्नुतिरलङ्कारः तदुक्तं प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिरिति॥ २९॥

नेपथ्येति। दयितेन प्रियेण हरेण उपक्लृप्तां विन्यस्तां नेपथ्य-लक्ष्मीं अलङ्करणश्रियं आदर्शतले दर्पणबिम्बे सस्मितं समन्दहासं विलोक्य उद्भूतः जातः विलक्षभावः सलज्जभावः यस्याः तथा-भूता सती आत्मानं सौभाग्यं प्रियवाल्लभ्यं विद्यते यासां तथोक्तासु पतिप्रियतमासु नारीष्वित्यर्थः मध्ये निर्द्धारे सप्तमी धुर्य्यां अग्रणीं अमंस्त मेने॥ ३०॥

अन्तरिति। अथ अनन्तरं नेपथ्यरचनात् परमित्यर्थः स्निग्धे

सुसम्पदोपाचरतां कलाना-

मङ्के स्थितां तां शशिखण्डमौलेः ॥ ३१ ॥

व्यधुर्बहिर्मङ्गलगानमुच्चैर्वैतालिकाश्चित्रचरित्रचारु ।

जगुश्च गन्धर्वगणाः सशङ्खस्वनं प्रमोदाय पिनाकपाणेः ॥३२॥

ततः स्वसेवावसरे सुराणां

गणांस्तदालोकनतत्पराणाम् ।

प्रणयवत्यौ वयस्ये सख्यौ विजया जया च आलिः सखी वयस्या चेत्यमरः । अन्तः अभ्यन्तरं प्रविश्य तत्र अन्तर्वेश्मनि शशिखण्डमौलेः हरस्य अङ्के उत्सङ्गे स्थितां तां पार्वतीं कलानां कामोपकरणविशेषाणां सुसम्पदा शोभनया सम्पदा उपाचरतां सेवितवत्यौ । उमां तदोपाचरतां कलाभां दूरे स्थितां तां शशिखण्डमौलेरिति पाठे तां शशिखण्डः चन्द्रकला मौलौ यस्य तथाभूतस्य हरस्य दूरे शिरोव्यतिरिक्ते देशे समीपे इत्यर्थः क्रोड़े वा स्थितां कलाभां चन्द्रकलासदृशीं ताम् उमाम् उपाचरतामित्यन्वयः ॥ २१ ॥

व्यधुरिति । वहिः वाह्यप्रदेशे वैतालिकाः स्तवपाठकाः पिनाकपाणेर्हरस्य प्रमोदाय हर्षाय चित्रेण चरित्रेण तदीयेन चारु मनोज्ञं मङ्गलगानं माङ्गलिकं गीतम् उच्चैः तारस्वरेणेत्यर्थः व्यधुः चक्रुः गन्धर्वगणाश्च सशङ्खस्वनं शङ्खवाद्यपुरःसरं जगुश्च गीतवन्तश्च । चित्रचरित्रचार्वित्यत्र चित्रितचारुवेद्यामिति पाठे चित्रिता अलङ्कृता सुसज्जितेत्यर्थः चारुर्मनोहारिणी या वेदिः परिष्कृतभूमिस्तत्र स्थितस्येति शेषः पिनाकपाणेर्विशेषणं स्थिता चेति शेषः वैतालिका इत्यस्य विशेषणम् । सशङ्खस्वनमित्यत्र सशङ्खध्वनिमिति पाठे स एवार्थः ॥ २२ ॥

तत इति । ततः अनन्तरं नन्दी द्वारि प्रविश्य प्रणतः अथ प्रणामानन्तरं कृताञ्जलिः सन् स्वस्य आत्मनः हरस्येत्यर्थः सेवावसरे

द्वारि प्रविश्य प्रणतोऽथ नन्दी
निवेदयामास कृताञ्जलिः सन् ॥ २३ ॥

महेश्वरो मानसराजहंसीं करे दधानस्तनयां हिमाद्रेः ।
सम्भोगलीलालयतः सहेलं हरो बहिस्तानभि निर्जगाम ॥२४

क्रमान्महेन्द्रप्रमुखाः प्रणेमुः शिरोनिबद्धाञ्जलयो महेशम् ।
प्रालेयशैलाधिपतेस्तनूजां देवीं च लोकत्रयमातरं ते ॥२५॥

यथागतं तान्विबुधान्विसृज्य
प्रसाद्य मानक्रियया प्रतस्थे ।
स नन्दिना दत्तभुजोऽधिरुह्य
वृषं वृषाङ्कः सह शैलपुत्र्या ॥ २६ ॥

परिचर्य्यासमये आगतानिति शेषः तदालोकनतत्पराणां हरदर्शनाभिलाषुकाणामित्यर्थः सुराणां देवानां गणान् निवेदयामास ॥ २३ ॥

महेश्वर इति । महेश्वरो हरः तां मानसं चित्तमेव मानसं सरः तत्र राजहंसीं हृदयविहारिणीमिति भावः अद्रेस्तनयां पार्वतीं करे दधानः सन् सम्भोगलीलालयतः सम्भोगलीलागृहात् सहेलं सलीलं यथा तथा तान् देवान् अभि अभिलक्ष्येत्यर्थः वहिः निर्जगाम देवानां समीपमागमदित्यर्थः । हर इत्यत्र हर्तान्निति पाठे महेश्वरविशेषणम् ॥ २४ ॥

क्रमादिति । महेन्द्रप्रमुखा इन्द्रादयस्ते देवाः शिरसि निबद्धः अञ्जलिः यैस्तथाभूताः सन्तः यथा वृद्धक्रमेणेति भावः महेशं शम्भुं प्रालेयशैलाधिपतेः हिमाद्रेः तनूजां कन्यां लोकत्रयस्य त्रिभुवनस्य मातरं जननीं देवीम् उमाञ्च प्रणेमुः नमश्चक्रुः ॥ २५ ॥

यथागतमिति । स वृषाङ्कः हरः तान् बिबुधान् देवान् मानक्रियया सम्माननेन प्रसाद्य परितोष्य यथागतं विसृज्य प्रस्थाप्य च

मनोऽतिवेगेन ककुद्मता स
प्रतिष्ठमानो गगनाध्वनोऽन्तः ।
वैमानिकैः साञ्जलिभिर्ववन्दे
विहारहेलागतिभिर्गिरीशः ॥ ३७ ॥

स्वर्वाहिनीवारिविहारचारी रतान्तनारीश्रमशान्तिकारी ।
तौ पारिजातप्रसवप्रसङ्गी मरुत् सिषेवे गिरिजागिरीशौ ॥३८

पिनाकिनापि स्फटिकाचलेन्द्रः
कैलासनामा कलिताम्बरांशः ।

नन्दिना दत्तभुजः दत्तहस्तावलम्बः सन् शैलपुत्र्या पार्वत्या सह वृषम् अधिरुह्य प्रतस्थे चचाल ॥ ३६ ॥

मन इति । मनसोऽपि अतिरिक्तो वेगो यस्य तादृशेन ककुद्मता वृषेण गगनमेवाध्वा तस्य अन्तः मध्ये प्रतिष्ठमानः गच्छन् गिरीशः हरः विहारे क्रीड़ायां हेलया विलासेन गतिर्येषां तथाभूतैः वैमानिकैः खेचरैः साञ्जलिभिः कृताञ्जलिभिः सद्भिः ववन्दे नमस्कृतः । कर्मणि लिट् । गगनाध्वनोऽन्तरित्यत्र गगनाध्वनीन इति पाठे गगनमार्गचारीत्यर्थः ॥ ३७ ॥

स्वरिति । स्वर्वाहिन्या मन्दाकिन्या वारिभिर्यो विहारः तेन चरतीति तथोक्तः मन्दाकिनीशीकरवानित्यर्थः एतेनास्य शैत्योक्तिः । रतान्ते सुरतावसाने नारीणां यः श्रमः तस्य शान्तिकारी शमयितेत्यर्थः एतेन मान्द्योक्तिः, तथा पारिजातस्य प्रसवैः पुष्पैः प्रसङ्ग आसक्तिर्यस्य तथाभूतः एतेन सौगन्ध्योक्तिः । मरुत् वायुः तौ गिरिजागिरीशौ उमामहेश्वरौ सिषेवे परिचरति स्म ॥ ३८ ॥

पिनाकिनेति । पिनाकिना हरेणापि कलितः स्पृष्टः अम्बरस्य आकाशस्य अंशः स्कन्धदेशः येन तथोक्तः अभ्रङ्कष इति भावः अन्यत्र कलितः व्याप्तः अम्बरांशः आकाशभागः येन तथाभूतः आकाशमयैक-

धृतार्धसोमोऽद्भुतभोगिभोगो
विभूतिधारी स्व इव प्रपेदे ॥ ३९ ॥
विलोक्य यत्र स्फटिकस्य भित्तौ
सिद्धाङ्गनाः स्वं प्रतिबिम्बमारात् ।
भ्रान्त्या परस्या विमुखीभवन्ति
प्रियेषु मानग्रहिला नमत्सु ॥ ४० ॥
सुबिम्बितस्य स्फटिकांशुगुप्त-
श्चन्द्रस्य चिह्नप्रकरः करोति ।

मूर्त्तित्वादिति भावः । अर्द्धः सोमश्चन्द्रः यत्र सोऽर्द्धसोमो हरः धृतः अर्द्धसोमो हरो येन सः हरस्य कैलाशवासित्वादिति भावः अन्यत्र धृतः गृहीतः अर्द्धसोमः शशिखण्डः येन तथाभूतः, अद्भुतः विचित्रः भोगिनां सुखभोगरतानां भोगः भोग्यं वस्तु इत्यर्थः यत्र तथाभूतः देवनिलयत्वादिति भावः अन्यत्र अद्भुतः भोगिनः भुजङ्गस्य भोगः कायः फणो वा यत्र तथाभूतः भुजङ्गभूषणत्वादिति भावः भूतभोगिभोग इति पाठेऽपि स एवार्थः । विभूतीः सम्पदः धरतीति तथोक्तः विविधसम्पद्युक्तः अन्यत्र विभूतिधारी भस्माधृतशरीरः भूतिर्भस्मनि सम्पदीत्यमरः । कैलासनामा स्फटिकाचलेन्द्रः रजतगिरिः स्व इव निजस्वरूपमिव प्रपेदे प्राप्तः । कर्मणि लिट् । उपमालङ्कारः । विभूतिधारीत्यत्र विभूतिधार इति पाठे स एवार्थः ॥ ३९ ॥

विलोक्येति । यत्र कैलासे स्फटिकस्य भित्तौ कुड्ये आरात् समीपे स्वं निजं प्रतिबिम्बं विलोक्य सिद्धाङ्गनाः परस्याः परकीयायाः सपत्न्या इति भावः भ्रान्त्या भ्रमेण इयं सपत्नी वा अन्या कामिनीति भ्रमवशादित्यर्थः प्रियेषु पतिषु नमत्सु नाहमन्यासक्त इति प्रणतेष्वपीति यावत् मानग्रहिलाः मानवत्यः सत्यः विमुखीभवन्ति कुप्यन्ति ॥ ४० ॥

सुबिम्बितस्येति । यत्र कैलासे सुबिम्बितस्य सुष्ठु प्रतिबिम्ब

गौर्य्यार्पितस्येव रसेन यत्र
कस्तूरिकायाः शकलस्य लीलाम् ॥ ४१ ॥
यदीयभित्तौ प्रतिबिम्बिताङ्ग-
मात्मानमालोक्य रुषा करीन्द्राः ।
मत्तान्यकुम्भिभ्रमतोऽतिभीम-
दन्ताभिघातव्यसनं वहन्ति ॥ ४२ ॥
निशासु यत्र प्रतिबिम्बितानि
ताराकुलानि स्फटिकालयेषु ।
दृष्ट्वा रतान्तच्युततारहार-
मुक्ताभ्रमं बिभ्रति सिद्धवध्वः ॥ ४३ ॥

गतस्य अतएव स्फटिकानाम् अंशुभिः शुभ्रिगोपनं यस्य तथाभूतस्य उभयोरपि समवर्णत्वात् पार्थक्येनाप्रतीयमानस्येति भावः चन्द्रस्य चिह्नप्रकरः कलङ्कनिचयः गौर्य्या पार्वत्या अर्पितस्य कुत्रचिन्निहितस्य कस्तूरिकाया मृगनाभेः शकलस्य खण्डस्य रसेन रागेण लीलां साम्यशोभां करोतीवेत्युत्प्रेक्षा ॥ ४१ ॥

यदीयेति । यदीयभित्तौ यस्य कैलासस्य भित्तौ करीन्द्राः गजपतयः आत्मानं स्वस्वरूपं प्रतिबिम्बिताङ्गम् आलोक्य दृष्ट्वा मत्तानाम् अन्येषां कुम्भिनां गजेन्द्राणां भ्रमतः भ्रान्त्या रुषा क्रोधेन अतिभीमः अत्युत्कटः यः दन्तैरभिघातः भित्तिषु ताड़नं तेन व्यसनं दुःखं दन्तभग्नत्वादिजनितां व्यथितामित्यर्थः वहन्ति भुञ्जते अमस्थानस्य परिणामदुःखजनकत्वादिति भावः । अत्र भ्रान्तिमानलङ्कारः तदुक्तं साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितेति ॥ ४२ ॥

निशास्विति । यत्र कैलासाद्रौ सिद्धवध्वः सिद्धानां देवयोनिविशेषाणां वध्वः अङ्गनाः निशासु रजनीषु स्फटिकालयेषु स्फटिक-

नभश्चरीमण्डनदर्पणश्रीः सुधानिधिर्मूर्धनि यस्य तिष्ठन् ।
अनर्घ्यचूडामणितामुपैति शैलाधिनाथस्य शिवालयस्य ॥४४॥

समीयिवांसो रहसि स्मरार्त्ता
रिरंसवो यत्र सुराः प्रियाभिः ।
एकाकिनोऽपि प्रतिबिम्बभाजो
विभान्ति भूयोभिरिवान्विताः स्वैः ॥ ४५ ॥

सयहर्म्येषु ताराकुलानि नक्षत्रवृन्दानि प्रतिबिम्बितानि दृष्ट्वा रतान्ते सुरतावसाने च्युतानां त्रुटितानां तारहाराणां समुज्ज्वलहाराणां या मुक्ता मौक्तिकानि तेषां भ्रमं नैतास्ताराः प्रतिफलिताः परमस्माकं हारमौक्तिकान्येवैतानीति भ्रान्तिं बिभ्रति वहन्ति । अत्रापि भ्रान्तिमानलङ्कारः ॥ ४३ ॥

नभश्चरीति । नभश्चरीणां खेचरीणां मण्डनस्य अलङ्करणस्य विलासस्य वा यः दर्पणः आदर्शः तस्येव श्रीः शोभा यस्य तथाभूतः सुधानिधिश्चन्द्रः यस्य कैलासस्य मूर्द्धनि शिरसि तिष्ठन् उद्यन्नित्यर्थः शैलाधिनाथस्य गिरीशस्य हरस्य शिवः शोभनः आलयः निकेतनं तस्य अनर्घ्यः अमूल्यः यश्चूड़ामणिः शिरोरत्नं तस्य भावस्ताम् उपैति प्राप्नोति । अथवा यस्य शैलाधिनाथस्य कैलासस्य मूर्द्धनि तिष्ठन् शिवालयस्य हरमन्दिरस्य अनर्घचूड़ामणिताम् उपैतीति योजना । रूपकोपमयोः संसृष्टिः ॥ ४४ ॥

समीयिवांस इति । यत्र कैलासाद्रौ स्मरार्त्ताः कामपीड़िताः सुराः देवाः प्रियाभिः कान्ताभिः सह रहसि विजने रिरंसवः रन्तुमिच्छवः अतएव समीयिवांसः सङ्गताः सन्तः एकाकिनोऽपि प्रतिबिम्बभाजः स्फाटिकभित्तौ प्रतिफलिताङ्गा इत्यर्थः अतएव भूयोभिर्बहुभिः स्वैरिव स्वदेहैरिवेत्यर्थः अन्विताः अनुगताः विभान्ति राजन्ते उत्प्रेक्षालङ्कारः ॥ ४५ ॥

देवोऽपि गौर्य्या सह चन्द्रमौलि-
र्यदृच्छया स्फाटिकशैलशृङ्गे ।
शृङ्गारचेष्टाभिरनारताभि-
र्मनोहराभिर्व्यहरच्चिराय ॥ ४६ ॥

देवस्य तस्य स्मरसूदनस्य हस्तं समालिङ्ग्य सुविभ्रमश्रीः ।
सा नन्दिना वेत्रभृतोपदिष्टमार्गा पुरोगेण कलं चचाल ॥४७॥

चलच्छिखाग्रो विकटाङ्गभङ्गः
सुदन्तुरः शुक्लसुतीक्ष्णतुण्डः ।
भ्रुवोपदिष्टः स तु शङ्करेण
तस्या विनोदाय ननर्त्त भृङ्गी ॥ ४८ ॥

देव इति। देवः चन्द्रमौलिर्हरोऽपि गौर्य्या सह स्फाटिकशैलस्य कैलासस्य शृङ्गे यदृच्छया स्वेच्छया अनारताभिः सन्तताभिर्मनोहराभिः शृङ्गारचेष्टाभिः चिराय चिरं कालं व्यहरत् विजहार ॥ ४६ ॥

देवस्येति। सुष्ठु विभ्रमः विलासो यस्यास्तादृशी श्रीर्यस्यास्तथाभूता सा पार्वती स्मरसूदनस्य कामशत्रोः तस्य हरस्य हस्तं समालिङ्ग्य समाश्लिष्य पुरोगेण अग्रगामिना वेत्रभृता वेत्रधारिणा नन्दिना उपदिष्टः प्रदर्शितः मार्गः पन्था यस्यास्तादृशी सती कलं मधुरं यथा तथा चचाल भ्रमति स्मेत्यर्थः ॥ ४७ ॥

चलच्छिखाग्र इति। शङ्करेण हरेण तस्याः पार्वत्या विनोदाय आनन्दवर्द्धनाय भ्रुवा भ्रूचालनसङ्केतेनेत्यर्थः उपदिष्टः नृत्यं कुर्विति नियुक्त इत्यर्थः सुदन्तुरः सुष्ठु बहिर्गतदन्त इत्यर्थः शुक्लं शुभ्रं सुतीक्ष्णं तुण्डं वक्त्रं यस्य तथाभूतः भृङ्गी चलन्ति शिखाग्राणि चूड़ाग्राणि यस्य तथाविधः तथा विकटः अङ्गानां भङ्गः यस्य तादृशः

कण्ठस्थलीलोलकपालमाला
दंष्टाकरालाननमभ्यनृत्यत् ।
प्रीतेन तेन प्रभुणा नियुक्ता
काली कलत्रस्य मुदे प्रियस्य ॥ ४९ ॥

भयङ्करौ तौ विकटं नदन्तौ विलोक्य बाला भयविह्वलाङ्गी ।
सरागमुत्सङ्गमनङ्गशत्रोर्गाढं प्रसह्य स्वयमालिलिङ्ग ॥ ५१ ॥
उत्तुङ्गपीनस्तनपिण्डपीडं ससम्भ्रमं तत्परिरम्भमीशः ।
प्रपद्य सद्यः पुलकोपगूढः स्मरेण रूढप्रमदो ममाद ॥ ५१ ॥

सन् नर्त्तनं नृत्यं चकार । चलद्विषाण इति पाठे चलत् विषाणं शृङ्गं यस्य तथोक्त इत्यर्थः ॥ ४८ ॥

कण्ठस्थलीति । प्रीतेन हृष्टेन प्रभुणा हरेण प्रियस्य दयितस्य कलत्रस्य कान्तायाः गौर्य्याः मुदे आनन्दाय नियुक्ता काली कण्ठ-स्थल्यां कण्ठदेशे लोला चञ्चला कपालमाला मुण्डमाला यस्या-स्तथाभूता सती दंष्ट्राभिः करालं भीषणम् आननं यस्मिन् तद् यथा तथा अभ्यनृत्यत् अभितो नृत्यति स्म । नियुक्तेत्यत्र प्रणुन्नेति पाठे स एवार्थः ॥ ४९ ॥

भयङ्कराविति । बाला मुग्धा गौरी तौ कालीभृङ्गिणौ भयङ्करौ तथा विकटं नदन्तौ शब्दं कुर्वन्तौ विलोक्य भयेन विह्वलानि विवशानि अङ्गानि यस्याः तादृशी सती प्रसह्य बलात् अनङ्गशत्रोः मदनारे-र्हरस्य उत्सङ्गं क्रोड़ं गाढ़ं तथा सरागं यथा तथा आलिलिङ्ग आश्लिष्टवती । सरागमित्यत्र सरङ्गमिति पाठे सरङ्गं सविलास-मित्यर्थः ॥ ५० ॥

उत्तुङ्गेति । ईशः शिवः उत्तुङ्गाभ्याम् उन्नताभ्यां पीनाभ्यां पुष्टा-भ्यां स्तनपिण्डाभ्यां पीड़ा यत्र तादृशं ससम्भ्रमं सभयं तस्याः गौर्य्याः परिरम्भम् आलिङ्गनं प्रपद्य प्राप्य सद्यः तत्क्षणात् पुलकेन लोमाञ्चेन

इति गिरितनुजाविलासलीला-
विविधविभङ्गिभिरेष तोषितः सन् ।
अमृतकरशिरोमणिर्गिरीन्द्रे
कृतवसतिर्वशिभिर्गणैर्ननन्द ॥ ५२ ॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
कैलासगमनो नाम नवमः सर्गः ।

---

उपगूढ़ः गृहीतः रोमाञ्चिताङ्ग इत्यर्थः स्मरेण कामेन रूढ़ः जातः प्रमदः उल्लासः यस्य तथाभूतः कामोल्लसित इत्यर्थः प्रमाद मत्तो बभूव ॥ ५१ ॥

इतीति । अमृतकरश्चन्द्रः शिरोमणिश्चूड़ारत्नं यस्य तथोक्तः गिरीन्द्रे पर्वतराजे कैलासे वशिभिः जितेन्द्रियैः गणैः प्रमथैः सह कृतवसतिः कृतावस्थानः एष हरः इतीत्थं गिरितनुजायाः गौर्य्याः विलासेन या लीला विहारः तस्याः विविधाभिर्नैकविधाभिर्भङ्गिभिः प्रकारैः तोषितः प्रीणितः सन् ननन्द आनन्दमलभत । गिरितनुजे-त्यत्र गिरिसुतयेति पाठान्तरं तत्र गिरिसुतयेति पृथक् पदं तोषित इत्यस्य कर्त्तृकारकं बोध्यम् पुष्पिताग्रा वृत्तम् ॥ ५२ ॥

इति नवमः सर्गः ।

---

## दशमः सर्गः ।

---

आससाद सुनासीरं सदसि त्रिदशैः सह ।
एष त्रैयम्बकं तीव्रं वहन्वह्निर्महन्महः ॥ १ ॥
सहस्रेण दृशामीशो कुत्सिताङ्गं च सादरम् ।
दुर्दर्शनं ददर्शाग्निं धूम्रधूमितमण्डलम् ॥ २ ॥
दृष्ट्वा तथाविधं वह्निमिन्द्रः क्षुब्धेन चेतसा ।
व्यचिन्तयच्चिरं किञ्चित्कन्दर्पद्वेषिरोषजम् ॥ ३ ॥
स विलक्ष्यमुखैर्देवैर्वीक्ष्यमाणः क्षणं क्षणम् ।
उपाविशत्सुरेन्द्रेणादिष्टं सादरमासनम् ॥ ४ ॥

आससादेति । एष वह्निः तीव्रं तीक्ष्णं त्र्यम्बकस्य इदं त्रैयम्बकं शैवमित्यर्थः महत् महः तेजः वहन् दधानः सन् सदसि सभायां त्रिदशैर्देवैः सह स्थितमिति शेषः सुनासीरम् इन्द्रम् आससाद प्राप । एष इत्यत्र गत्वेति पाठान्तरम् ॥ १ ॥

सहस्रेणेति । ईशः देवेन्द्रः दृशां नेत्राणां सहस्रेण कुत्सिताङ्गम् अतएव दुर्दर्शनम् असुदर्शनमित्यर्थः धूम्रं कृष्णलोहितवर्णं धूमितं सञ्जातधूमं धूमोद्गारीत्यर्थः मण्डलम् अवयवो यस्य तादृशम् अग्निं सादरं ददर्श । कुत्सिताङ्गञ्च सादरमित्यत्र द्युसदां सोऽतिसादरमिति पाठे दिवि सीदन्तीति द्युसदः देवाः तेषाम् ईशः सः देवराज इत्यर्थः अतिसादरं क्रियाविशेषणम् ॥ २ ॥

दृष्टेति । इन्द्रः वह्निं तथाविधं विरूपमिति भावः दृष्ट्वा क्षुब्धेन व्यथितेन चेतसा कन्दर्पद्वेषिणो हरस्य रोषजं कोपजं किञ्चित् एतत् वैरूप्यमिति शेषः चिरं बहुक्षणं व्यचिन्तयत् चिन्तयामास ॥ ३ ॥

स इति । स वह्निः विलक्ष्याणि वैकृतदर्शनेन म्लानानि मुखानि

हव्यवाह ! त्वयासादि दुर्दशेयं दशा कुतः ।
इति पृष्टः सुरेन्द्रेण स निःश्वस्य वचोऽवदत् ॥ ५ ॥
अनतिक्रमणीयात्ते शासनात्सुरनायक ! ।
पारावतं वपुः प्राप्य वेपमानोऽतिसाध्वसात् ॥ ६ ॥
अभिगौरीरतासक्तं जगामाहं महेश्वरम् ।
कालस्येव स्मरारातेः स्वं रूपमहमासदम् ॥ ७ ॥

येषां तथाभूतैः देवैः क्षणं क्षणं प्रतिक्षणं वीक्ष्यमाणः दृश्यमानः सन् सुरेन्द्रेण सादरम् आदिष्टं निर्दिष्टम् आसनम् उपाविशत् । स विलक्ष्यसुखैरित्यत्र स्रवज्जलसुखैरिति पाठे स्रवत् गलत् जलम् अश्रु॰ वारि यस्मात् तादृशं सुखं येषां तथाभूतैः देवैरित्यस्य विशेषणम् ॥ ४ ॥

हव्यवाहेति । हे हव्यवाह ! अग्ने ! त्वया इयं दुर्दशा दशा कुतः समासादि प्राप्ता इति सुरेन्द्रेण पृष्टः सः अग्निः निश्वस्य वचः वक्ष्यमाणं वाक्यम् अवदत् । दुर्दशेयं दशेत्यत्र सुमहा दुर्दशेति पाठे सुमहती दुर्दशेत्यर्थः ॥ ५ ॥

अनतिक्रमणीयादिति । हे सुरनायक ! सुरेन्द्र ! अनतिक्रमणीयात् अतिक्रमितुमशक्यात् ते तव शासनात् आदेशाद्धेतोः अहं पारावतं वपुः कपोतशरीरं प्राप्य धृत्वा अतिसाध्वसात् अतिभयात् वेपमानः कम्पमानः सन् अभि गौरि गौर्यामित्यर्थः विभक्त्यर्थे अव्ययीभावः । रतासक्तं रममाणमित्यर्थः महेश्वरं जगाम । अहं स्मरारातेः मदनारेर्हरस्य कालस्येव स्वं रूपम् अतिभयङ्करमिति भावः आसदम् अपश्यम् । अभि गौरि रतासक्तमित्यत्र अति गौरीरतासक्तमिति पाठे गौर्याम् अतिशयेन रतासक्तमित्यर्थः । स्वं रूपमहमासदमित्यत्र उपान्तमहमासदमिति पाठे उपान्तं समीपमित्यर्थः युग्मकम् ॥ ६ ॥ ७ ॥

दृष्ट्वा छद्मविहङ्गं मां सुज्ञो विज्ञाय जम्भभित् ! ।
ज्वलद्भालानले होतुं कोपनो माममन्यत ॥ ८ ॥
वचोभिर्मधुरैः सार्थैर्विनम्रेण मया स्तुतः ।
प्रीतिमानभवद्देवः स्तोत्रं कस्य न तुष्टये ॥ ९ ॥
शरण्यः सकलत्राता मामत्रायत शङ्करः ।
क्रोधाग्नेर्ज्वलतो त्रासात्त्रासतो दुर्निवारतः ॥ १० ॥
परिहृत्य परीरम्भरभसं दुहितुर्गिरेः ।

दृष्ट्वेति । हे जम्भभित् जम्भासुरारे ! सुष्ठु जानातीति सुज्ञः सर्वान्तर्यामीत्यर्थः सः हरः छद्मविहङ्गं कपटकपोतं मां दृष्ट्वा कोपनः क्रुद्धः सन् मां ज्वलन् यः भालस्य ललाटस्य अनलः अग्निः तत्र होतुं दग्धुमित्यर्थः अमन्यत इयेष । जम्भभिदित्यत्र ज्ञानभृदिति पाठे हे ज्ञानभृत् ज्ञानिन्निति इन्द्रसम्बोधनम् । कोपनो माममन्यतेत्यत्र कोपतोऽयममन्यतेति पाठे अयं हरः कोपतः कोपात् । अन्यत् समानम् ॥ ८ ॥

वचोभिरिति । मया विनम्रेण विनतेन सता सार्थैः यथार्थैः मधुरैः वचोभिः स्तुतः स देवः प्रीतिमान् प्रसन्नः मयीति शेषः अभवत् तथाहि स्तोत्रं कस्य जनस्य तुष्टये सन्तोषाय न ? अपि तु सर्वस्यैव तुष्टये भवतीत्यर्थः । सामान्येन विशेषसमर्थनात् अर्थान्तरन्यासोऽलङ्कारः ॥ ९ ॥

शरण्य इति । शरण्यः शरणे रक्षणे साधुः सकलानां जगतां त्राता रक्षिता शङ्करः ज्वलतः दीप्यमानस्य क्रोधाग्नेः दुर्निवारतः निवारयितुमशक्यादित्यर्थः त्रासात् यस्मात् त्रासः भयं तस्मात् माम् अत्रायत रक्षितवान् । त्रासात्त्रासत इत्यत्र त्रासत्रासत इति पाठे त्रासत्रासत इति समस्तं पदम् अर्थस्तु स एव ॥ १० ॥

परिहृत्येति । सः महेश्वरः गिरेः दुहितुः पार्वत्याः परीरम्भ-

कामकेलिरसोत्सेकाद् व्रीडया विरराम सः ॥ ११ ॥
रङ्गभङ्गच्युतं रेतस्तदामोघं सुदुर्वहम् ।
त्रिजगद्दाहकं सद्यो मद्विग्रहमधि न्यधात् ॥ १२ ॥
दुर्विषह्येण तेनाहं तेजसा दहनात्मना ।
निर्दग्धमात्मनो देहं दुर्वहं वोढुमक्षमः ॥ १३ ॥
रौद्रेण दह्यमानस्य महसातिमहीयसा ।
मम प्राणपरित्राणप्रगुणो भव वासव ! ॥ १४ ॥
इति श्रुत्वा वचो वह्नेः परितापोपशान्तये ।
हेतुं विचिन्तयामास मनसा विबुधेश्वरः ॥ १५ ॥

रभसम् आलिङ्गनावेगं परिहृत्य विहाय व्रीड़या लज्जया परपुरुषदर्शनजनितयेति भावः । कामकेलौ सुरतव्यापारे यः रसः रागः तस्य उत्सेकात् उद्रेकात् विरराम निवृत्ते ॥ ११ ॥

रङ्गेति । तदा तस्मिन् समये रङ्गस्य सुरतव्यापारस्य भङ्गात् व्यपगमात् च्युतं स्खलितम् अमोघम् अव्यर्थं सुदुर्वहं वोढुमशक्यं त्रिजगतां दाहकं रेतः शुक्रं मम विग्रहं शरीरम् अधि मदात्मनीत्यर्थः सद्यः तत्क्षणात् न्यधात् निहितवान् । सुदुर्वहमित्यत्र सुदुर्धरमिति पाठे स एवार्थः ॥ १२ ॥

दुर्विषह्येणेति । अहं तेन दुर्विषह्येण सोढुमशक्येन दहनात्मना अग्निस्वरूपेण तेजसा निर्दग्धम् अतएव दुर्वहम् आत्मनः स्वस्य देहं वोढुं धारयितुम् अक्षमः संवृत्त इति शेषः ॥ १३ ॥

रौद्रेणेति । हे वासव ! इन्द्र ! रौद्रेण रुद्रसम्बन्धिना अतिमहीयसा महसा तेजसा दह्यमानस्य मम प्राणानां परित्राणे परिरक्षणे प्रगुणः अनुकूलः तत्पर इत्यर्थः भव ॥ १४ ॥

इतीति । विबुधानां देवानामीश्वरः इन्द्रः इति वचः श्रुत्वा

तेजोदग्धानि गात्राणि पाणिनास्य परामृशन् ।
किञ्चित् कपीटयोनिं तं दिवस्पतिरभाषत ॥ १६ ॥
प्रीतः स्वाहास्वधाहन्तकारैः प्रीणयसे स्वयम् ।
देवान् पितॄन्मनुष्यांस्त्वमेकस्तेषां सुखं यतः ॥ १७ ॥
त्वयि जुह्वति होतारो हवींषि ध्वस्तकल्मषाः ।
भुञ्जन्ति स्वर्गमेकस्त्वं स्वर्गप्राप्तौ हि कारणम् ॥ १८ ॥
हवींषि मन्त्रपूतानि हुताश ! त्वयि जुह्वतः ।
तपस्विनस्तपःसिद्धिं यान्ति त्वं तपसां प्रभुः ॥ १९ ॥

मनसा वह्नेः परितापस्य देहदाहस्येत्यर्थः उपशान्तये हेतुम् उपायं विचिन्तयामास ॥ १५ ॥

तेजोदग्धानीति । दिवस्पतिः देवराजः पाणिना अस्य वह्नेः तेजसा रौद्रेणेति शेषः दग्धानि गात्राणि परामृशन् स्पृशन् तं कपीटयोनिम् अग्निं कपीटयोनिर्ज्वलन इत्यमरः । किञ्चित् वक्ष्यमाणं वच इत्यर्थः अभाषत उक्तवान् ॥ १६ ॥

प्रीत इति । हे अग्ने ! त्वं स्वाहास्वधाहन्तकारैः स्वाहाकारैः स्वधाकारैः हन्तकारैः मन्त्रभेदैः स्वयं प्रीतः सन् देवान् पितॄन् तथा मनुष्यान् प्रीणयसे तर्पयसि, अतस्त्वम् एकः केवलः तेषां सुखम् असीति अध्याहार्यम् ॥ १७ ॥

त्वयीति । होतारः याज्ञिकाः त्वयि हवींषि जुह्वति समन्त्रं प्रक्षिपन्ति, तेन ध्वस्तं नष्टं कल्मषं पापं येषां तथाभूताः सन्तः स्वर्गं भुञ्जन्ति अतस्त्वं हि त्वमेव स्वर्गप्राप्तौ कारणम् । भुञ्जन्तीत्यत्र भुञ्जते इति पाठान्तरम् ॥ १८ ॥

हवींषीति । हे हुताश ! अग्ने ! तपस्विनः त्वयि मन्त्रपूतानि हवींषि जुह्वतः अर्पयन्तः सन्तः तपसां सिद्धिं साफल्यं यान्ति प्राप्नुवन्ति अतः त्वं तपसां प्रभुः अधीश्वरः ॥ १९ ॥

निधत्से हुतमर्काय स पर्जन्योऽभिवर्षति।
ततोऽन्नानि प्रजास्तेभ्यस्तेनासि जगतः पिता ॥ २० ॥
अन्तश्चरोऽसि भूतानां तानि त्वत्तो भवन्ति च।
ततो जीवितभूतस्त्वं जगतः प्राणदोऽसि च ॥ २१ ॥
जगतः सकलस्यास्य त्वमेकोऽस्युपकारकृत्।
कार्योपपादने तत्र त्वत्तोऽन्यः कः प्रगल्भते ॥ २२ ॥

निधत्से इति। त्वम् अर्काय सूर्याय सूर्य्य देवोद्देशेनेति भावः प्रक्षिप्तं हविरित्यर्थः निधत्से तस्मै ददासीति यावत् सः अर्कः पर्जन्यः जलदः सन् अभिवर्षति ततः वर्षणात् अन्नानि उत्पद्यन्ते इति शेषः, तेभ्यः अन्नेभ्यः प्रजा लोका जीवन्तीति शेषः तेन हेतुना त्वं जगतः पिता पालकोऽसि उक्तञ्च अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति। निधत्से इत्यत्र नयसे इति पाठे स एवार्थः। प्रजास्तेभ्य इत्यत्र प्रजायन्ते इति इति पाठान्तरम् ॥ २० ॥

अन्तश्चर इति। त्वं भूतानां देहिनाम् अन्तश्चरः अन्तर्व्यापी असि, तानि भूतानि त्वत्तः भवन्ति सम्पद्यन्ते च। ततः कारणात् त्वं जगतः जीवितभूतः जीवनस्वरूपः प्राणदः जीवनदश्चासि। त्वत्तो भवन्ति चेत्यत्र त्वद्बु बलवन्ति चेति पाठे तानि भूतानि त्वत् त्वत्तः सकाशादित्यर्थः बलवन्ति तेजस्वलानि भवन्तीत्यर्थः। ततो जीवित-भूतस्त्वमित्यत्र त्वत्तो जीवितभूयस्त्वमिति पाठे त्वत्तः सकाशात् जगतः जीवितभूयस्त्वं प्रायेण जीवनधारणमित्यर्थः ॥ २१ ॥

जगत इति। त्वम् अस्य सकलस्य जगतः एकः केवलः मुख्यो वा एके मुख्यान्यकेवला इत्यमरः। उपकारकृत् उपकारकः असि, त्वत्तः अन्यः को जनः तत्र जगति कार्य्यस्य उपादाने साधने प्रगल्भते समर्थयते शक्नोतीत्यर्थः न कोऽपीत्यर्थः ॥ २२ ॥

अमीषां सुरसङ्घानां त्वमेकोऽर्थसमर्थने ।
विपत्तिरपि संश्लाघ्योपकारव्रतिनोऽनल ! ॥ २३ ॥
देवी भागीरथी पूर्वं भक्त्यास्माभिः प्रतोषिता ।
निमज्जतस्तवोदीर्णं तापं निर्वापयिष्यति ॥ २४ ॥
गङ्गां तद्गच्छ मा कार्षीर्विलम्बं हव्यवाहन ! ।
कार्य्येष्ववश्यकार्येषु सिद्धये क्षिप्रकारिता ॥ २५ ॥
शम्भोरम्भोमयी मूर्तिः सैव देवी सुरापगा ।
त्वत्तः स्मरद्विषो बीजं दुर्धरं धारयिष्यति ॥ २६ ॥

अमीषामिति । हे अनल ! एकः त्वम् अमीषां सुरसङ्घानां देववृन्दानाम् अर्थसमर्थने कार्य्यसाधने समर्थ इति शेषः, ननु सत्यमेतत् किन्तु विपन्मां बाधते इत्यत आह विपत्तिरिति उपकारव्रतिनः उपकारपरस्य जनस्य विपत्तिरपि सम्यक् श्लाघ्या प्रशंसनीया परोपकारसाधने विपदपि वरमिति भावः ॥ २३ ॥

देवीति । पूर्वम् अस्माभिः भक्त्या प्रतोषिता प्रसादिता देवी भागीरथी गङ्गा निमज्जतः स्नानं कुर्वतः तव उदीर्णम् अत्युत्कटं तापं निर्वापयिष्यति नाशयिष्यति ॥ २४ ॥

गङ्गामिति । हे हव्यवाहन अग्ने ! तत् तस्मात् गङ्गां गच्छ विलम्बं मा कार्षीः न कुरु । अवश्य कार्य्येषु कार्य्येषु क्रियासु क्षिप्रकारिता द्रुतकारित्वं सिद्धये भवतीति शेषः । विलम्बमित्यत्र विषादमिति पाठे विषादं दुःखमित्यर्थः । कार्य्येष्वित्यत्र अर्थेष्विति पाठे स एवार्थः ॥ २५ ॥

शम्भोरिति । सैव देवी सुरापगा गङ्गा शम्भोर्हरस्य अम्भोमयी जलमयी मूर्त्तिः, अतएव त्वत्तः सकाशात् स्मरद्विषः कामशत्रोः शिवस्य दुर्धरं दुर्वहं बीजं धारयिष्यति ॥ २६ ॥

इत्युदीर्य सुनासीरो विरराम स चानलः ।
तद्विसृष्टस्तमापृच्छ्य प्रतस्थे स्वर्धुनीमभि ॥ २७ ॥
हिरण्यरेतसा तेन देवी स्वर्गतरङ्गिणी ।
तीर्णाध्वना प्रपेदे सा निःशेषक्लेशनाशिनी ॥ २८ ॥
स्वर्गारोहणनिःश्रेणिर्मोक्षमार्गाधिदेवता ।
उदारदुरितोद्गारहारिणी दुर्गतारिणी ॥ २९ ॥
महेश्वरजटाजूटवासिनी पापनाशिनी ।
सरागान्वयनिर्वाणकारिणी धर्मधारिणी ॥ ३० ॥

इतीति । सुनासीरः देवेन्द्रः इति वाचम् उदीर्य उक्त्वा विरराम । स च अनलः अग्निः तेन सुनासीरेण विसृष्टः विमुक्तः तं देवेन्द्रम् आपृच्छ्य सम्भाष्य स्वर्धुनीं गङ्गामभिप्रतस्थे चलितः । तमापृच्छेत्यत्र तमामन्त्र्येति पाठे स एवार्थः ॥ २७ ॥

हिरण्यरेतसेति । तेन हिरण्यरेतसा वह्निना तीर्णाध्वना गतमार्गेण सता सा देवी निःशेषक्लेशनाशिनी अशेषतापनिवारिणी स्वर्गतरङ्गिणी गङ्गा प्रपेदे प्राप्ता । निःशेषक्लेशनाशिनीत्यत्र निःशेषाघविनाशिनीति पाठे सर्वपापनाशिनीत्यर्थः ॥ २८ ॥

त्रिभिर्गङ्गां विशिनष्टि स्वर्गेत्यादि । स्वर्गस्य आरोहणे निःश्रेणी सोपानपङ्क्तिः, मोक्षमार्गस्य मुक्तिपथस्य अधिदेवता अधिष्ठात्री देवी । उदाराणां महतां दुरितानां पापानाम् उद्गारस्य प्रसरस्य हारिणी नाशिनी । दुर्गस्य संसाररूपस्य तारिणी निस्तारकारिणी ॥ २९ ॥

महेश्वरेति । महेश्वरस्य जटाजूटे कपर्दे वसतीति तथोक्ता, पापनाशिनी दुरितक्षयकारिणी, सरागाणां विषयाभिलाषिणाम् अन्वयस्य वंशस्यापि निर्वाणकारिणी मोक्षसाधनी, धर्मधारिणी धर्मरक्षिणीत्यर्थः । सरागान्वयनिर्वाणकारिणीत्यत्र सागरान्वयनिर्वाण-

विष्णुपादोदकोद्भूता ब्रह्मलोकादुपागता ।
त्रिभिः स्रोतोभिरश्रान्तं पुनाना भुवनत्रयम् ॥ २१ ॥
जातवेदसमायान्तमूर्मिहस्तैः समुत्थितैः ।
आजुहावार्थसिद्ध्यर्थं सुप्रसादधरेव सा ॥ २२ ॥
सम्मिलद्भिर्मरालैः सा कलं कूजद्भिरुन्मदैः ।
ददे श्रेयांसि दुःखानि निहन्मीति तमभ्यधात् ॥ २३ ॥

कारिणीति पाठे सागरान्वयस्य सगरवंशस्य निर्वाणकारिणी मुक्तिदायिनीत्यर्थः ॥ २० ॥

विष्णुिति । विष्णोः पादोदकात् पादसलिलात् उद्भूता, ब्रह्मलोकात् उपागता पतिता, तथा त्रिभिः स्रोतोभिः स्वर्गमर्त्त्यपातालगामिभिरिति भावः भुवनत्रयम् अश्रान्तं सततं पुनाना पवित्रीकुर्वतीत्यर्थः । पुनानेत्यत्र पुनातीति पाठे पुनाति पवित्रीकरोतीत्यर्थः ॥ २१ ॥

जातवेदसमिति । सा भागीरथी सुप्रसादधरेव सुप्रसन्नेव समुत्थितैः ऊर्मय हस्ता इव तैः आयान्तम् आगच्छन्तं तं जातवेदसम् अग्निम् अर्थसिद्धौ कार्य्यसिद्ध्यर्थम् आजुहाव आहूतवती । समुत्थितैरित्यत्र समुच्छ्रितैरिति पाठे स एवार्थः । अर्थसंसिद्धौ इत्यत्र अस्य संसिद्धौ इति पाठे अस्य अग्नेः संसिद्धौ सम्यक् सिद्धये इत्यर्थः । सुप्रसादधरेवेति पाठे सुप्रसादादरेवेति पाठे सुष्ठु प्रसाद आदरश्च यस्यास्तादृशी वेत्यर्थः ॥ २२ ॥

सम्मिलद्भिरिति । सा सम्मिलद्भिः सङ्गच्छद्भिः कलं मधुरं कूजद्भिः शब्दायमानैः उन्मदैः सञ्जातोल्लासैः मरालैः हंसैः उपलक्षिता सती श्रेयांसि शुभानि ददे तुभ्यमिति शेषः दुःखानि निहन्मि नाशयामि तवेति तम् अग्निम् अभ्यधात् हंसानां रुतव्याजेन उवाचेत्यर्थः ॥ २३ ॥

कल्लोलैरुद्गतैरर्वाचीनं तटमभिद्रुतैः।
प्रीतेव तमभीयाय स्वर्धुनी जातवेदसम् ॥ २४ ॥
अथाभ्युपेतस्तापार्तो निममज्जानलः किल।
विपदा परिभूताः किं व्यवस्यन्ति विलम्बितुम् ॥ २५ ॥
गङ्गावारिणि कल्याणकारिणि श्रमहारिणि।
स मग्नो निर्वृतिं प्राप पुण्यभारिणि तारिणि ॥ २६ ॥
तत्र माहेश्वरं धाम सञ्चक्राम हविर्भुजः।
गङ्गायामुत्तरङ्गायामन्तस्तापविपद्धृति ॥ २७ ॥

कल्लोलैरिति। स्वर्धुनी गङ्गा प्रीतेव प्रसन्नेव उद्गतैः उत्थितैः आनन्दादिति भावः तटम् अभिद्रुतैः अभिधावितैः कल्लोलैः तरङ्गैः तम् अर्वाचीनं जड़ं रौद्रतेजसा विमूढ़मिति यावत् जातवेदसम् अग्निम् अभीयाय उपाजगाम। प्रीतेवेत्यत्र प्रीत्येवेति पाठे प्रीत्या प्रणयेनेत्यर्थः ॥ २४ ॥

अथेति। अथ अनन्तरम् अभ्युपेतः अभितः समुपेतः गङ्गयेति शेषः तापार्त्तः अनलः निममज्ज किलेति प्रसिद्धौ। तथाहि विपदा परिभूताः आर्त्ता जनाः विलम्बितुं किं व्यवस्यन्ति पारयन्ति? नैवेत्यर्थः येन केनापि प्रकारेण तापशान्तये यतन्त एवाविलम्बमित्यर्थः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः। अभ्युपेत इत्यत्राभ्युपेत्येति पाठे अनलः तापार्त्तः अभ्युपेत्य समीपं गत्वेति योज्यम् ॥ २५ ॥

गङ्गेति। सः अनलः कल्याणकारिणि शुभकारिणि श्रमहारिणि तापनिवारिणि पुण्यानां भारः समूहः विद्यते अस्या इति पुण्यभारिणी पवित्रकारिणीत्यर्थः तारिणि पापेभ्यः उद्धारिणीत्यर्थः गङ्गावारिणि गङ्गाजले मग्नः अवगाढ़ः सन् निर्वृतिं सुखं सन्तापाभावमित्यर्थः प्राप। पुण्यभारिणीत्यत्र पुण्यकारिणीति पाठः ॥ २६ ॥

कृशानुरेतसो रेतस्याहृते सरिता तया।
निश्चक्राम ततः सौख्यं हव्यवाहो वहन् बहु ॥ ३८ ॥
सुधासारैरिवाम्भोभिरभिषिक्तो हुताशनः।
यथागतं जगामाथ परां निर्वृतिमादधत् ॥ ३९ ॥
सा सुदुर्विषहं गङ्गा धाम कामजितो महत्।
आदधाना परीतापमवाप व्योमवाहिनी ॥ ४० ॥

तत्रेति। हविर्भुजः अग्निः तत्र उत्तरङ्गायां कल्लोलिन्याम् अन्तस्तापः मनोव्यथा एव विपद् तां हरति नाशयतीति अन्तस्तापविपद्धृत् तस्यां गङ्गायां माहेश्वरं रौद्रं धाम तेजः सञ्चक्राम सन्निदधे। अन्ये तु द्वितीयार्द्धं गङ्गाया मिद्धभङ्गायामन्तस्ताप विपद्भृत इत्येवं पठन्ति तत्र इद्धाः समृद्धा वृहन्त इत्यर्थः भङ्गास्तरङ्गा यस्यास्तथाभूतायां भङ्गस्तरङ्ग ऊर्मिर्वेत्यमरः। अन्तस्ताप एव विपद् तया भृतः अभिभूत इत्यर्थः ॥ ३७ ॥

कृशान्विति। कृशानुरेतसः शम्भोः रेतसि शुक्रे तया सरिता गङ्गया आहृते सादरं गृहीते इत्यर्थः हव्यवाहः अग्निः बहु सौख्यम् आनन्दं वहन् लभमानः ततः गङ्गायाः निश्चक्राम चचाल। आहृते इत्यत्राहूते इति पाठे आहूते संगृहीते इत्यर्थः ॥ ३८ ॥

सुधेति। अथ अनन्तरं हुताशनः सुधाया अमृतस्य आसारैरिव धाराभिरिव अम्भोभिर्गाङ्गेयैः सलिलैः अभिषिक्तः कृतस्नानः अतएव परां महतीं निर्वृतिं सन्तोषम् आदधत् लभमानः सन् यथागतं जगाम। अभिषिक्त इत्यत्र परिषिक्त इति पाठान्तरम् ॥ ३९ ॥

सेति। सा व्योमवाहिनी आकाशचारिणी गङ्गा मन्दाकिनीत्यर्थः दुर्विषहम् असह्यं कामजितः शङ्करस्य महत् धाम वीर्य्यम् आदधाना धारयन्ती परीतापं सन्तापम् अवाप प्राप्नवती। गङ्गेत्यत्र काममिति पाठे कामं सम्यगिति आदधानेति अवापेति च क्रियाविशेषणं द्रष्टव्यम् ॥ ४० ॥

बहिरार्ता युगान्ताग्नेस्तप्तानीव शिखाशतैः ।
हित्वोष्णानि जलान्यस्या निर्जग्मुर्जलजन्तवः ॥ ४१ ॥
तेजसा तेन रौद्रेण तप्तानि सलिलान्यपि ।
समुदञ्चन्ति चण्डानि दुर्धराणि बभार सा ॥ ४२ ॥
जगच्चक्षुषि चण्डांशौ किञ्चिदभ्युदयोन्मुखे ।
जग्मुः षट् कृत्तिका माघे मासि स्नातुं सुरापगाम् ॥४३॥
शुभ्रैरभ्रङ्कषैरूर्मिशतैः स्वर्गनिवासिनाम् ।
कथयन्तीमिवालोकावगाहाचमनादिकम् ॥ ४४ ॥

बहिरिति। जलजन्तवः जलचराः प्राणिनः आर्त्ताः व्यथिताः सन्तः युगान्ताग्नेः कल्पान्तानलस्य शिखाशतैः तप्तानीव उष्णानि अस्या गङ्गाया जलानि हित्वा परित्यज्य बहिः निर्जग्मुः प्रस्थिताः ॥ ४१ ॥

तेजसेति। सा गङ्गा तेन रौद्रेण तेजसा तप्तानि समुदञ्चन्ति समुत्पतन्ति चण्डानि उग्राणि अतएव दुर्धराण्यपि दुर्वहाण्यपि सलिलानि बभार धृतवती ॥ ४२ ॥

जगदिति। माघे मासि जगतां चक्षुषि नयनस्वरूपे चण्डांशौ उष्णकिरणे सूर्य्ये किञ्चित् ईषत् अभ्युदयोन्मुखे प्रत्यूषे इति भावः षट् कृत्तिकाः तदाख्यनक्षत्राधिदेव्यः स्नातुं सुरापगां गङ्गां जग्मुः ॥ ४३ ॥

अथ सुरापगां विशिनष्टि चतुर्भिः श्लोकैः शुभ्रैरित्यादिभिः। शुभ्रैः अभ्रङ्कषैः गगनस्पर्शिभिः ऊर्मिशतैः तरङ्गनिचयैरित्यर्थः स्वर्गनिवासिनां देवानाम् आलोकः दर्शनम् अवगाहः स्नानम् आचमनं पानम् आदिना स्पर्शनपरिग्रहः एतत् सर्वं कथयन्तीमिव मामवलोकयत, मयि अवगाहध्वं मां पिबत स्पृशत च इत्येवं तरङ्गहस्तसंज्ञया वदन्तीमिवेत्यर्थः स्वर्गनिवासिनामित्यत्र स्वर्गमनं सतामिति तथा कथ-

**सुस्नातानां मुनीन्द्राणां बलिकर्मोचितैरलम् ।**
**बहिः पुष्पोत्करैः कीर्णतीरां दूर्वाक्षतान्वितैः ॥ ४५ ॥**
**ब्रह्मध्यानपरैर्योगपरैर्ब्रह्मासनस्थितैः ।**
**योगनिद्रागतैर्योगपट्टबन्धैरुपाश्रिताम् ॥ ४६ ॥**
**पादाङ्गुष्ठाग्रभूमिस्थैः सूर्यसम्बद्धदृष्टिभिः ।**
**ब्रह्मर्षिभिः परं ब्रह्म स्तुवद्भिरुपसेविताम् ॥ ४७ ॥**

यन्तीमिवालोकावगाहाचमनादिकमित्यत्र कथयन्तीमिवालोकावगाहाचमनादिनेति पाठे आलोकावगाहाचमनादिना सतां साधूनां स्वर्गगमनं कथयन्तीमिव मे मम आलोकादिकं कुर्वन्ति ते स्वर्गं गच्छन्तीति तरङ्गहस्तसंज्ञया वेदयन्तीमिवेत्यर्थः ॥ ४४ ॥

सुस्नातानामिति । सुस्नातानां सुखेन कृतस्नानानां मुनीन्द्राणां देवर्षीणां बलिकर्मणि पूजनक्रियायाम् उचितैः दूर्वाभिरक्षताभिरातपतण्डुलैश्च अन्वितैः युक्तैः पुष्पाणाम् उत्करैः समूहैः बहिः अलम् अत्यर्थं कीर्णं व्याप्तं तीरं यस्यास्तथाभूताम् ॥ ४५ ॥

ब्रह्मेति । ब्रह्मणः परमात्मनः ध्यानं परं प्रधानं येषां तादृशैः परमात्मचिन्तनपरैरित्यर्थः योगः जीवब्रह्मणोरैक्यचिन्तनं परं प्रधानं येषां तथाभूतैः योगिभिरित्यर्थः ब्रह्मासनम् आसनविशेषः तत्र स्थितैः योग एव निद्रा अभिनिवेशविशेषः तां गतैः प्राप्तैः तथा योगपट्टं बध्नन्ति धारयन्तीति तथाविधैः पुरुषैरिति शेषः उपाश्रितां सेविताम् । ब्रह्मासनस्थितैरित्यत्र पद्मासनस्थितैरिति पाठे पद्मासनम् आसनविशेषस्तत्र स्थितैरित्यर्थः । योगनिद्रां गतैर्भोगिभोगबद्धैरिति पाठे योगनिद्रां गतैरिति असमस्तं पदम् । भोगिनां भुजङ्गानां भोगैः शरीरैः बद्धाः युक्तास्तैः कृतसर्पयज्ञोपवीतैरित्यर्थः ॥ ४६ ॥

पादाङ्गुष्ठेति । पादाङ्गुष्ठेन भूमिस्थैः स्पृष्टभूतलैरित्यर्थः सूर्ये संबद्धा निहिता दृष्टियैस्तथाभूतैः अनन्यदृष्ट्या सवितारं निरीक्षमाणै-

अथ दिव्यां नदीं देवीमभ्यनन्दन्विलोक्य ताः ।
कं नाभिनन्दयत्येषा दृष्टा पीयूषवाहिनी ॥ ४८ ॥
चन्द्रचूड़ामणिर्देवो यामुद्वहति मूर्धनि ।
यस्या विलोकनं पुण्यं श्रद्दधुस्ता मुदा हृदि ॥ ४९ ॥
दिव्यां विष्णुपदीं देवीं निर्वाणपददेशिनीम् ।
निर्धूतकल्मषां मूर्ध्ना सुप्रह्वास्ता ववन्दिरे ॥ ५० ॥
सौभाग्यैः खलु सुप्रापां मोक्षप्रतिभुवं सतीम् ।

रित्यर्थः परं ब्रह्म परमात्मानं गृणद्भिः जपद्भिः ब्रह्मर्षिभिः उपसेविताम् अधिष्ठितामित्यर्थः । सूर्यसंविष्टदृष्टिभिरिति पाठे तथैवार्थः ॥ ४७ ॥

अथेति । अथानन्तरं ताः कृत्तिकाः दिव्यां नदीं विलोक्य अभ्यनन्दन् सन्तोषमलभन्त, तथाहि एषा पीयूषवाहिनी अमृतनिष्यन्दिनी गङ्गा दृष्टा सती कं जनं न अभिनन्दति ? सर्वमेवेत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासः । दिव्यां नदीमित्यत्र देवीं धुनीमिति पाठे धुनीं नदीं देवीं गङ्गामित्यर्थः ॥ ४८ ॥

चन्द्रचूड़ामणिरिति । देवश्चन्द्रचूड़ामणिः शम्भुः मूर्द्धनि शिरसि याम् उद्वहति धत्ते, तया यस्या विलोकनं दर्शनं पुण्यं पवित्रं ताः कृत्तिकाः मुदा आनन्देन तां गङ्गां हृदि मनसि श्रद्दधुः विश्वसितवत्यः पूज्येयमिति विश्वासं जग्मुरित्यर्थः ॥ ४९ ॥

दिव्यामिति । ताः कृत्तिकाः सुप्रह्वाः अतिविनताः सत्यः मूर्द्ध्ना शिरसा दिव्यां स्वर्गीयां निर्धूतकल्मषां पापनाशिनीम् अतएव निर्वाणपददेशिनीं मुक्तिदायिनीं देवीं विष्णुपदीं विष्णुपादोद्भवां गङ्गां ववन्दिरे प्रणेमुः । दिव्यामित्यत्र दिष्ट्येति पाठे दिष्ट्या भाग्येन । निर्धूतकल्मषां मूर्ध्नेति पाठे निर्धूतकल्मषा भूत्वेति पाठे निर्धूतकल्मषा ध्वस्तपापा इति ता इत्यस्य विशेषणम् ॥ ५० ॥

भक्त्यात्र तुष्टुवुस्तां ताः श्रद्दधाना दिवो धुनीम् ॥ ५१ ॥
मुक्तिस्त्रीसङ्गदूत्यज्ञैस्तत्र ता विमलैर्जलैः ।
प्रक्षालितमलाः सस्नुः सुस्नातास्तपसान्विताः ॥ ५२ ॥
स्नात्वा तत्र सुलभ्यायां भाग्यैः परिपचेलिमैः ।
चरितार्थं स्वमात्मानं बहु ता मेनिरे मुदा ॥ ५३ ॥

सौभाग्यैरिति । ताः कृत्तिकाः अत्र गङ्गातीरे स्थिता इति शेषः सौभाग्यैः खलु शुभादृष्टैरेव सुप्रापां सुलभां मोक्षस्य प्रतिभुवं दानप्रतिभूस्वरूपामित्यर्थः सतीं शोभनां दिवः स्वर्गस्य धुनीं नदीं तां गङ्गां श्रद्दधानाः सत्यः तुष्टुवुः स्तुतवत्यः । सुप्रापामित्यत्र सम्प्राप्तामिति पाठे सम्यक् प्राप्तां लब्धामित्यर्थः । सतीमित्यत्र सतामिति पाठे सतां साधूनां मोक्षप्रतिभुवमित्यन्वयः । दिवो धुनीमित्यत्र सिषेविरे इति पाठे सिषेविरे सेवितवत्यस्वेत्यर्थः ॥ ५१ ॥

मुक्तीति । सुस्नाताः शोभनं यथाविधीति भावः स्नातं स्नानम् अवगाहनं भावे क्तप्रत्ययः । यासां विधिपूर्वकस्नानकारिण्य इत्यर्थः तपसान्विताः तपःपरायणास्ताः कृत्तिकाः तत्र गङ्गायां मुक्तिरेव स्त्री तस्याः सङ्गे समागमे यत् दूत्यं दूतकर्म तत् जानन्तीति तथोक्तैः मुक्तिसाधनैरिति भावः विमलैः निर्मलैः जलैः प्रक्षालितमलाः अपकृष्टकलुषाः सत्यः सस्नुः स्नानं चक्रुरित्यर्थः ॥ ५२ ॥

स्नात्वेति । ताः कृत्तिकाः परिपचेलिमैः परिपक्वैः भाग्यैः सुलभ्यायां सुप्रापायां तत्र गङ्गायां स्नात्वा मुदा हर्षेण स्वम् आत्मानं बहु यथा तथा चरितार्थं कृतार्थं मेनिरे अमन्यन्त । सुलभ्यायामित्यत्र सुरम्यायामिति पाठे सुरम्यायां मनोहारिण्यामित्यर्थः । चरितार्थं स्वमात्मानमित्यत्र चरितार्थमिवात्मानमिति पाठे आत्मानं चरितार्थमिवेत्यर्थः तत्तु न शोभनं चरितार्थताया वास्तविकत्वेन सम्भावनाया अयुक्तत्वादिति ध्येयम् ॥ ५२ ॥

कृशानुरेतसो रेतस्तासामभिकलेवरम्।
अमोघं सञ्चाराथ सद्यो गङ्गावगाहनात्॥ ५४॥
रौद्रं सुदुर्धरं धाम दधाना दहनात्मकम्।
परितापमवापुस्ता मग्ना इव विषाम्बुधौ॥ ५५॥
अक्षमा दुर्वहं वोढुमम्बुनो बहिरातुराः।
अग्निं ज्वलन्तमन्तस्ता दधाना इव निर्ययुः॥ ५६॥
अमोघं शाम्भवं बीजं सद्यो नद्योज्झितं महत्।
तासामभ्युदरं दीप्तं स्थितं गर्भत्वमागमत्॥ ५७॥

कृशानुरेतस इति। अथ गङ्गायाम् अवगाहनाद्धेतोः तासां षसां कृत्तिकानाम् अभिकलेवरं कलेवरेषु शरीरेषु विभक्त्यर्थे अव्ययीभावः। सद्यः तत्क्षणात् कृशानुरेतसः शम्भोः अमोघम् अव्यर्थं रेतः शुक्रं सञ्चचार प्रविवेशेत्यर्थः॥ ५४॥

रौद्रमिति। ताः कृत्तिकाः रौद्रं शैवं दहनात्मकम् अग्निमयम् अतएव सुदुर्धरं सुखेन धर्त्तुमशक्यं धाम तेजः दधानाः सत्यः विषाम्बुधौ विषसागरे मग्ना इव परितापम् अवापुः प्राप्तवत्यः॥ ५५॥

अक्षमा इति। दुर्वहं वोढुमशक्यं तद्धाम वोढुमक्षमाः अशक्ताः अतएव आतुराः व्यथितास्ताः कृत्तिकाः अन्तर्ज्वलन्तम् अग्निं दधाना इव धारयन्त्य इव अम्बुनः जलात् वहिः निर्ययुः उत्तस्थुरित्यर्थः। अन्तस्ता इत्यत्र अन्तस्थमिति पाठे अन्तस्थं शरीरान्तश्चारिणमित्यर्थः॥ ५६॥

अमोघमिति। तासां कृत्तिकानाम् अभ्युदरम् उदरेषु विभक्त्यर्थे अव्ययीभावः। सद्यः अवगाहनक्षणेनैवेत्यर्थः नद्या गङ्गया उज्झितं परित्यक्तं महत् अमोघम् अव्यर्थं दीप्तं ज्वलत् शाम्भवं रौद्रं वीजं स्थितं सत् गर्भत्वं कुक्षिस्थजीवत्वम् आगमत् प्राप। नद्योज्झितमित्यत्र नद्यां स्थितमिति पाठः। दीप्तमित्यत्र तीव्रमिति वा पाठः॥५७॥

सुज्ञा विज्ञाय ता गर्भभूतं तद्वोढुमक्षमाः ।
विषादमदधुः सद्यो गाढं भर्तृभिया क्रिया ॥ ५८ ॥

ततः शरवणे सार्धं भयेन व्रीडया च ताः ।
तद्गर्भजातमुत्सृज्य स्वान् गृहानभिनिर्ययुः ॥ ५९ ॥

ताभिस्तत्रामृतकरकलाकोमलं भासमानं
तद्विक्षिप्तं क्षणमभिनभोगर्भमभ्युज्जिहानैः ।
स्वैस्तेजोभिर्दिनपतिशतस्पर्धमानैरमानै-
र्वक्त्रैः षड्भिः स्मरहरगुरुस्पर्धयेवाजनीव ॥ ६० ॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
कुमारोत्पत्तिर्नाम दशमः सर्गः ।

सुज्ञा इति । सुज्ञाः सुष्ठु ज्ञानवत्यः तत् तेजः वोढुं धारयितुम् अक्षमाः ताः कृत्तिकाः भर्गभूतं विज्ञाय सद्यः तत्क्षणं भर्तृभिया पतिभयेन लज्जया च गाढम् अत्यर्थं विषादम् अदधुः अगमन् ॥ ५८ ॥

तत इति । ततः अनन्तरं ताः कृत्तिकाः शरवणे तत्रत्ये शराख्य-तृणकानने भयेन भर्तुरिति शेषः व्रीड़या लज्जया च सार्द्धं सह तत् गर्भजातं गर्भस्थजीवमित्यर्थः उत्सृज्य त्यक्त्वा स्वान् गृहान् अभि-निर्ययुः अभ्यगच्छन् । सार्द्धं भयेनेत्यत्र शापभयेनेति पाठे शापभयेन भर्तुरभिसम्पातभयेनेत्यर्थः ॥ ५९ ॥

ताभिरिति । ताभिः कृत्तिकाभिः तत्र शरवणे विक्षिप्तं विसृष्टम् अमृतकरस्य चन्द्रस्य कलेव कोमलं मृदुलं भासमानं जलोपरि तिष्ठ-दित्यर्थः अभिनभो गर्भं गगनान्तरे इत्यर्थः विभक्त्यर्थे अव्ययीभावः । अभ्युज्जिहानैः अभ्युत्थितैः दिनपतिशतस्पर्द्धमानैः शतसूर्य्यातिशयि-भिरित्यर्थः अमानैः अपरिमितैः स्वैः निजैः तेजोभिः तथा षड्भिर्वक्त्रैः वदनैः उपलक्षितं सत् स्मरहरः शिव एव गुरुः पिता तस्य स्पर्द्धयेव

# एकादशः सर्गः।

——:०:——

अभ्यर्थ्यमाना विबुधैः समग्रैः प्रह्वैः सुरेन्द्रप्रमुखैरुपेत्य ।
तं पाययामास सुधातिपूर्णं सुरापगा स्वं स्तनमाशु मूर्त्ता ॥१॥

पिबन् स तस्याः स्तनयोः सुधौघं
चणङ्कणं साधु समेधमानः ।
प्रापाकृतिं कामपि षड्भिरेत्य
निषेव्यमाणः खलु कृत्तिकाभिः ॥ २ ॥

जिगीषयैवेत्यर्थः अजनीव उदपद्यतेव पितुः पञ्चाननत्वादिति भावः । दिनपतिशतस्पर्द्धमानैरित्युपमाया अजनीवेत्युत्प्रेक्षाया द्वयोरनपेक्षतया स्थितेः संसृष्टिः । उक्तञ्च मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते इति । मन्दाक्रान्तावृत्तं, मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ ग युग्ममिति ॥ ६० ॥

इति दशमः सर्गः ।

——

अभ्यर्थमानेति । समग्रैः सर्वैः प्रह्वैः विनतैः सुरेन्द्रप्रमुखैः इन्द्रादिभिर्विबुधैः देवैः उपेत्य उपगम्य अभ्यर्थमाना प्रार्थ्यमाना अनुरुध्यमानेत्यर्थः सुरापगा मन्दाकिनी मूर्त्ता मूर्त्तिमती सती आशु शीघ्रं तं सुतं सुधातिपूर्णम् अमृतरसं स्वं स्तनं पाययामास । स्वं स्तनमाशु मूर्त्तेत्यत्र स्वस्तनमाशु धात्रीति पाठे धात्री उपमाता सती स्वस्तनं पाययामासेति सम्बन्धः । सर्गेऽस्मिन् उपजातिवृत्तम् ॥ १ ॥

पिबन्निति । सः अर्भकः तस्याः सुरापगायाः स्तनयोः सुधौघम्

भागीरथीपावककृत्तिकानामानन्दबाष्पाकुललोचनानाम् ।
तं नन्दनं दिव्यमुपात्तुमासीत्परस्परं प्रौढतरो विवादः ॥३॥
अत्रान्तरे पर्वतराजपुत्र्या समं शिवः स्वैरविहारहेतोः ।
नभो विमानेन विगाहमानो मनोतिवेगेन जगाम तत्र ॥४॥

निसर्गवात्सल्यवशाद्विवृद्ध-
चेतःप्रमोदौ गलदश्रुनेत्रौ ।
अपश्यतां तं गिरिजागिरीशौ
षड़ाननं षड्दिनजातमात्रम् ॥ ५ ॥

अमृतचयं पिबन् चणं चणं प्रतिचणं साधु सम्यक् समेधमानः संवर्द्धमानः तथा षड्भिः कृत्तिकाभिः एत्य आगत्य निषेव्यमाणः लाल्यमानः सन् कामपि अनिर्वचनीयाम् आकृतिं प्राप खलु प्राप्तवानेव । षड्भिरेत्येत्यत्र षड्भिरेवेति पाठान्तरम् ॥ २ ॥

भागीरथीति । आनन्दबाष्पेण आकुलानि पूर्णानीत्यर्थः लोचनानि यासां तथाभूतानां भागीरथी च पावकश्च कृत्तिकाश्च तासां तं दिव्यं नन्दनं पुत्रम् उपात्तुं प्राप्तुं परस्परं प्रौढ़तरः अतिप्रबलः विवादः विरोधः ममायं पुत्रः ममायं पुत्र इत्येवंरूप इति भावः आसीत् ॥ ३ ॥

अत्रान्तरे इति । अत्रान्तरे अस्मिन्नवसरे शिवः पर्वतराजपुत्र्या गौर्य्या समं सह स्वैरविहारहेतोः यथेच्छविहारार्थं मनोजवेन विमानेन देवयानेन नभः आकाशं विगाहमानः सञ्चरन् तत्र भागीरथीतीरे जगाम ॥ ४ ॥

निसर्गेति । गिरिजागिरीशौ गौरीहरौ निसर्गेण स्वभावेन यत् वात्सल्यं स्नेहः तद्वशात् विवृद्धः विशेषेण वृद्धिं गतः चेतसः प्रमोदो ययोः तथोक्तौ अतएव गलन्ति अश्रूणि येभ्यः तादृशानि नेत्राणि ययोस्तथाभूतौ सन्तौ षड्दिनजातमात्रं तं षड़ाननम्

अथाह देवी शशिखण्डमौलिं
कोऽसौ शिशुर्दिव्यवपुः पुरस्तात् ।
कस्याथवा धन्यतमस्य पुंसो
माताऽस्य का भाग्यवतीषु धुर्या ॥ ६ ॥

स्वर्गापगासावनलोऽयमेताः
षट् कृत्तिकाः किं कलहायमानाः ।
पुत्रो ममायं न तवायमित्थं
मिथ्येतिवैलक्ष्यमुदाहरन्ति ॥ ७ ॥

एतेषु कस्येदमपत्यमीशाखिलत्रिलोकीतिलकायमानम् ।

अपश्यतां दृष्टवन्तौ । निसर्गवात्सल्यवशाद्विवृद्धचेतः प्रमोदौ इत्यत्र निसर्गवात्सल्यविवृद्धचेतः पृथु प्रमोदाविति पाठे निसर्गवात्सल्येन विवृद्धः चेतसः पृथुर्महान् प्रमोदः ययोस्तादृशावित्यर्थः । षड्दिनजातमात्रमित्यत्र तद्दिनजातमात्रमिति पाठान्तरम् ॥ ५ ॥

अथेति । अथानन्तरं देवी गौरी शशिखण्डमौलिं चन्द्रशेखरम् आह अब्रवीत् कः असौ पुरस्तात् अग्रतः दिव्यवपुः शिशुः दृश्यते इति शेषः । अथवा कस्य धन्यतमस्य अतिभाग्यवतः पुंसः अयमिति शेषः, भाग्यवतीषु धुर्या अग्रगण्या अस्य माता का ? कोऽसावित्यत्र कोऽयमिति पाठः । माताऽस्येत्यत्र माता चेति पाठः ॥ ६ ॥

स्वर्गापगेति । असौ स्वर्गापगा मन्दाकिनी, अयम् अनलः एताश्च षट् कृत्तिकाः अयं मम पुत्रः, नायं तव, इत्थं कलहायमानाः कलहं कुर्वत्यः सत्यः किं कथं मिथ्या इति वैलक्ष्यम् । विसंवादम् उदाहरन्ति कथयन्ति ? । मिथ्येति वैलक्ष्यमित्यत्र मिथोऽतिवैलक्ष्यमिति पाठे मिथः परस्परम् अतिवैलक्ष्यम् अतिविसंवादं यथातथेत्यर्थः ॥ ७ ॥

एतेष्विति । हे ईश ! अखिलत्रिलोकीतिलकायमानं समस्त-

अन्यस्य कस्याप्यथ देवदैत्यगन्धर्वसिद्धोरगराक्षसेषु ॥ ८ ॥
श्रुत्वेति वाक्यं हृदयप्रियायाः कौतूहलिन्या विमलस्मितश्रीः ।
सान्द्रप्रमोदोदयसौख्यहेतुभूतं वचोऽवोचत चन्द्रचूड़ः ॥ ९ ॥

जगत्त्रयीनन्दन एष वीरः
प्रवीरमातुस्तव नन्दनोऽस्ति ।
कल्याणि ! कल्याणकरः सुराणां
त्वत्तोऽपरस्याः कथमेष सर्गः ॥ १० ॥

देवि ! त्वमेवास्य निदानमास्से सर्गे जगन्मङ्गलगानहेतोः ।

त्रिभुवनललाटरत्नभूतम् इदम् अपत्यं पुत्रः एतेषु कृत्तिकादिषु मध्ये कस्य ? अथापि अथवा देवदैत्यगन्धर्वसिद्धोरगराक्षसेषु मध्ये अन्यस्य कस्य ? ॥ ८ ॥

श्रुत्वेति । चन्द्रचूड़ः शिवः कौतूहलिन्याः कौतुकवत्याः हृदयप्रियायाः गौर्याः इति वाक्यं श्रुत्वा विमलः स्मितस्य अल्पहासस्य श्रीर्यस्य तथाभूतः ईषद्धसन्नित्यर्थः सान्द्रेण निविड़ेन प्रमोदोदयेन आनन्दोदयेन यत् सौख्यं सुखसन्तानः तस्य हेतुभूतं कारणमित्यर्थः वचः वाक्यम् अवोचत उक्तवान् । वाक्यमित्यत्र वाचमिति पाठान्तरम् ॥ ९ ॥

जगत्त्रयीनन्दन इति । हे कल्याणि ! जगतां त्रय्या नन्दनः आनन्दवर्द्धनः एष सुराणां देवानां कल्याणकरः वीरः प्रवीरमातुः प्रकृष्टवीरजनन्याः तवैव नन्दनः सुतः अस्ति भवति, एष सर्गः अपत्यरूपा सृष्टिरित्यर्थः त्वत्तः अपरस्याः नार्याः कथं सम्भवतीति शेषः । नायमन्यस्याः कस्या अपि तनयस्तवैवायमिति भावः । प्रवीरमातुस्तव नन्दनोऽस्तीत्यत्र प्रवीरमातस्तव नन्दनोऽयमिति पाठे हे प्रवीरमातः ! अयं तव नन्दन इति योजना ॥ १० ॥

देवीति । हे देवि ! जगतां मङ्गलाय यानि गानानि तेषां

सत्यं त्वमेवेति विचारयस्व रत्नाकरे युज्यत एव रत्नम्॥ ११॥
अतः शृणुष्वावहितेन वृत्तं बीजं यदग्नौ निहितं मया तत्।
सङ्क्रान्तमन्तस्त्रिदशापगायां ततोऽवगाहे सति कृत्तिकासु॥१२॥
गर्भत्वमाप्तं तदमोघमेतत्ताभिः शरस्तम्बमधि न्यधायि।
बभूव तत्रायमभूतपूर्वो महोत्सवोऽशेषचराचरस्य॥ १३॥
अशेषविश्वप्रियदर्शनेन धुर्या त्वमेतेन सुपुत्रिणीनाम्।

हेतोस्तदर्थमित्यर्थः अस्य शिशोः सर्गे सृष्टौ त्वमेव निदानम् आदि-कारणम् आस्थे उपविशसि, भवसीत्यर्थः तथाहि त्वमेव रत्नाकरे एव रत्नं युज्यते इति सत्यं विचारयस्व अवधारयेत्यर्थः। निदानमास्थे इत्यत्र निदानमार्ये इति पाठे हे आर्ये साध्वि! इति सम्बोधनम् ॥ ११ ॥

अत इति। अतः कारणात् अवहितेन अवधानेन भावे क्त-प्रत्ययः। वृत्तं विवरणं वृत्तान्तमित्यर्थः शृणु, मया अग्नौ यत् बीजं तेजः निहितं, तत् त्रिदशापगायां मन्दाकिन्याम् अन्तः संक्रान्तम् अग्निनेति शेषः, ततः तस्याम् अवगाहे सति कृत्तिकासु संक्रान्तमिति काकाक्षिगोलकन्यायेन सम्बन्धः। ततोऽवगाहे इत्यत्र ततो विगाहे इति पाठे स एवार्थः॥ १२॥

गर्भत्वमिति। तत् अमोघम् अव्यर्थं बीजं गर्भत्वम् आप्तं प्राप्तं कुक्षिस्थजीवरूपेण परिणतमित्यर्थः। ताभिः कृत्तिकाभिः एतत् गर्भरूपेण परिणतं बीजमित्यर्थः शरस्तम्बम् अधि शरवणोपरीत्यर्थः न्यधायि निहितं त्यक्तमित्यर्थः। तत्र अयम् अशेषचराचरस्य समस्त-स्थावरास्थावरमयजगत इत्यर्थः अभूतपूर्वः पूर्वम् अभूतः महोत्सवः महानन्दभूत इत्यर्थः पुत्र इति शेषः बभूव। तदमोघमित्यत्र यद-मोघमिति पाठान्तरम्॥ १३॥

अशेषेति। हे अचलराजपुत्रि! अशेषविश्वप्रियदर्शनेन सर्वजगत्-

अलं विलम्बेन गाचलराजपुत्रि! स्वपुत्रमुत्सङ्गतले निधेहि ॥१४॥
अथेति वादिन्यमृतांशुमौलौ शैलेन्द्रपुत्री रभसेन सद्यः।
सान्द्रप्रमोदेन सुपीनगात्री धात्री समस्तस्य चराचरस्य ॥१५॥

किरीटबद्धाञ्जलिभिर्नभःस्थै-
र्नमस्कृता सत्वरनाकिलोकैः।
विमानतोऽवातरदात्मजं तं
ग्रहीतुमुत्कण्ठितमानसाभूत् ॥ १६ ॥

स्वर्गापगापावककृत्तिकादीन्
कृताञ्जलीनानमतोऽपि भूयः।

सुदर्शनेन एतेन पुत्रेण त्वं सुपुत्रिणीनां शोभनपुत्रवतीनां धुर्या अग्रणीरसीति शेषः तस्मादलं विलम्बेन विलम्बेनालं विलम्बं मा कुर्वित्यर्थः स्वपुत्रं निजतनयम् उत्सङ्गतले क्रोड़देशे निधेहि स्थापयेत्यर्थः। स्वपुत्रमुत्सङ्गतले निधेहीत्यत्र सुपूर्णमुत्सङ्गतलं विधेहीति पाठे सुपुत्रिणीनां धुर्या त्वम् अशेषविश्वप्रियदर्शनेन एतेन उत्सङ्गतलं सुपूर्णं विधेहि कुरु इति योजना ॥ १४ ॥

अथेति। अमृतांशुमौलौ चन्द्रचूड़े इति वादिनि सति समस्तस्य चराचरस्य धात्री शैलेन्द्रपुत्री पार्वती सद्यः तत्क्षणं रभसेन सवेगेन उत्कटेनेत्यर्थः सान्द्रप्रमोदेन अतिहर्षेणेत्यर्थः सुपीनं स्फीतं गात्रं यस्यास्तथाभूता तया किरीटेषु बद्धा अञ्जलयो यैस्तथोक्तैः नभःस्थैः खेचरैः सत्वरैः त्वरावद्भिः नाकिलोकैः देववृन्दैः नमस्कृता सती विमानतः देवयानात् अवातरत् तम् आत्मजं पुत्रं ग्रहीतुम् उत्कण्ठितं मानसं यस्यास्तथाविधा अभूच्च। अथेतीत्यत्र तथेतीति पाठान्तरम्। नाकिलोकैरित्यत्र नाकलोकैरिति पाठे स एवार्थः ॥ १५ ॥ १६ ॥ युग्मकम्।

स्वर्गापगेति। स्वर्गापगा सुरनदी पावकः अग्निः कृत्तिकादयश्च

ह्रित्वोत्सुका तं सुतमाससाद
पुत्रोत्सवे माद्यति का न हर्षात् ॥ १७ ॥
प्रमोदबाष्पाकुललोचना सा न तं ददर्श क्षणमग्रतोऽपि ।
परिस्पृशन्ती करकुड्मलेन सुखान्तरं प्राप किमप्यपूर्वम् ॥१८॥
सुविस्मयानन्दविकस्वरायाः शिशुर्गलद्बाष्पतरङ्गितायाः ।
विवृद्धवात्सल्यरसोत्तराया देव्या दृशोर्गोचरतां जगाम ॥१९॥

तान् कृताञ्जलीन् भूयः अतिशयेनेत्यर्थः आनमतः प्रणमतः अपि ह्रित्वा अनभिनन्द्येति भावः उत्सुका सती तं सुतम् आससाद जगाम तथाहि का नारी पुत्रोत्सवे हर्षात् न माद्यति ? सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासः । भूय इत्यत भूम्नेति पाठे स एवार्थः । ह्रित्वोत्सुका तमित्यत ह्रित्वा सुकान्तमिति पाठे सुकान्तं सुमनोहरमिति सुतमित्यस्य विशेषणम् । कोऽपत्र वा इति पुंलिङ्गनिर्देशः क्वापि ॥ १७ ॥

प्रमोदेति । सा पार्वती प्रमोदबाष्पेण आनन्दाश्रुणा आकुले लोचने यस्यास्तथाभूता सती अग्रतोऽपि स्थितमिति शेषः तं पुत्रं क्षणं न ददर्श । किन्तु करकुड्मलेन करकलिकया परिस्पृशन्ती सती किमपि अनिर्वचनीयम् अपूर्वं पूर्वमननुभूतमित्यर्थः सुखान्तरं सुखविशेषं प्राप अनुबभूव । करकुड्मलेनेत्यत करकुड्मलाभ्यामिति पाठान्तरम् ॥ १८ ॥

सुविस्मयेति । शिशुः सुष्ठु विस्मयेन आनन्देन च विकस्वरायाः प्रफुल्लायाः गलन् स्रवन् बाष्पाणां तरङ्गः अश्रुजलप्रवाहः जातः अस्या इति तथोक्तायाः इतोऽस्य जाते इति इतच्प्रत्ययः । विवृद्धः विशेषेण वृद्धिं गतः वात्सल्यरसः स्नेहरसः उत्तरः प्रधानं यस्यास्तथाविधायाः देव्याः गौर्याः दृशोर्नेत्रयोः गोचरतां दृष्टिविषयतां जगाम प्राप । सुविस्मयानन्दविकस्वराया इत्यत स विस्मयानन्दविकस्वराया इति पाठे स इति शिशुरित्यस्य विशेषणम् ॥ १९ ॥

तमीक्षमाणा क्षणमीक्षणानां सहस्रमाप्तुं विनिमेषमैच्छत् ।
सा नन्दनालोकनमङ्गलेषु क्षणंक्षणं तृप्यति कस्य चेतः ॥२०॥
विनम्रदेवासुरपृष्ठगाभ्यामादाय तं पाणिसरोरुहाभ्याम् ।
नवोदयं पार्वणचन्द्रचारु गौरी स्वमुत्सङ्गतलं निनाय ॥२१॥
स्वमङ्कमारोप्य सुधानिधानमिवात्मनो नन्दनमिन्दुवक्त्रा ।
तमेकमेषा जगदेकवीरं बभूव पूज्या धुरि पुत्रिणीनाम् ॥२२॥

तमिति । सा पार्वती क्षणं तं सुतम् ईक्षमाणा पश्यन्ती सती विनिमेषं निमेषशून्यम् ईक्षणानां नेत्राणां सहस्रमाप्तुं प्राप्तुम् ऐच्छत् इच्छति स्म । क्षणं क्षणं प्रतिक्षणं नन्दनस्य आलोकनं दर्शनान्येव मङ्गलानि तेषु कस्य जनस्य चेतः मनः तृप्यति परितोषमेति ? न कस्यापीत्यर्थः सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासः । सा नन्दनालोकनमङ्गलेष्वित्यत्र सुनन्दनालोकनकौतुकेनेति पाठे सुनन्दनस्य सुपुत्रस्य आलोकने दर्शने यत् कौतुकम् औत्सुक्यं तेन इति करणे हेतौ वा तृतीया ॥ २० ॥

विनम्रेति । गौरी विनम्राणां चरणपतितानामित्यर्थः देवासुराणां पृष्ठं गच्छतः स्पृशत इति तयोक्ताभ्यां पाणिसरोरुहाभ्यां करपङ्कजाभ्यां नवोदयं पार्वणचन्द्रचारु पूर्णचन्द्रमनोहरं तं सुतम् आदाय गृहीत्वा स्वम् उत्सङ्गतलं क्रोड़देशं निनाय । नवोदयमित्यत्र महोदयादिति पाठे महान् उदयः महोदयः तस्मात् हेतोरित्यर्थः ॥ २१ ॥

स्वमिति । इन्दुवक्त्रा चन्द्रमुखी एषा गौरी तं जगताम् एकवीरं सुधानिधानमिव अमृतनिधिमिव तमेकम् आत्मनः स्वस्य नन्दनं स्वम् अङ्कं क्रोड़म् आरोप्य नीत्वा पुत्रिणीनां पुत्रवतीनां धुरि अग्रे पूज्या माननीया बभूव । तमेकमेषा जगदेकवीरमित्यत्र तमेकदेवं जगदेकदेवीति पाठे जगताम् एका अद्वितीया मुख्येत्यर्थः देवी तम् एकम् अद्वितीयं देवं नन्दनमित्यस्य विशेषणम् ॥ २२ ॥

निसर्गवात्सल्यरसौघसिक्ता सान्द्रप्रमोदामृतपूरपूर्णा ।
तमेकपुत्रं जगदेकमाताभ्युत्सङ्गिनं प्रस्नविणी बभूव ॥ २३ ॥
अशेषलोकत्रयमातुरस्याः षाण्मातुरः स्तन्यसुधामधासीत् ।
सुरस्रवन्त्याः किल कृत्तिकाभिर्मुहुर्मुहुः सस्पृहमीक्ष्यमाणः ॥२४
सुखाश्रुपूर्णेन मृगाङ्कमौलेः कलत्रमेकेन मुखाम्बुजेन ।
तस्यैकनालोद्गतपद्मपद्मलक्ष्मीं क्रमात्षड्वदनीं चुचुम्ब ॥ २५॥

निसर्गेति । जगतामेका अद्वितीया माता जननी गौरी निसर्गेण स्वभावेन यः वात्सल्यरसौघः स्नेहरससमूहः तेन सिक्ता आर्द्रेत्यर्थः तथा सान्द्रेण घनेन प्रमोदामृतपूरेण आनन्दामृतप्रवाहेण पूर्णा अतएव उत्सङ्गिनं क्रोड़स्थितं तम् एकपुत्रम् अभि प्रस्नविणी दुग्ध-वर्षिणीत्यर्थः बभूव । अभ्युत्सङ्गिनमित्यत्र सोत्सङ्गिनमिति पाठे सा जगदेकमातेत्यस्य विशेषणम् । तम् एकपुत्रं प्रतीति अध्याहार्य्यम् ॥२३॥

अशेषेति । षसां मातृणाम् अपत्यमिति षाण्मातुरः स बालकः सुरस्रवन्त्या देवनद्या गङ्गया कृत्तिकाभिश्च मुहुःमुहुः पुनःपुनः सस्पृहं साभिलाषम् अस्माकं स्तन्यं पिबत्वयं बालक इत्यभिलाषसहितम् ईक्ष्य-माणः दृश्यमानः सन् अशेषलोकत्रयमातुः त्रिजगज्जनन्याः अस्या गौर्य्याः स्तन्यसुधां पयोधरामृतम् अधासीत् पपौ । धेटपाने इत्यस्य लुङिरूपम् । किलेति प्रसिद्धौ । सुरस्रवन्त्या किलकृत्तिकाभिरित्यत्र सुरस्रवन्त्यानलकृत्तिकाभिरिति पाठे सुरस्रवन्त्या अनलेन अग्निना कृत्तिकाभिश्च सस्पृहम् ईक्ष्यमाण इत्यन्वयः ॥ २४ ॥

सुखेति । मृगाङ्कमौलेः चन्द्रशेखरस्य कलत्रं कान्ता गौरी सुखाश्रु-पूर्णेन आनन्दवाष्पसलिलेन एकेन मुखाम्बुजेन वदनकमलेन तस्य सुतस्य एकस्मात् नालात् उद्गतानामुत्थितानां पद्मानां पद्मानां लक्ष्मीरिव लक्ष्मीः शोभा यस्यास्तादृशीं षसां वदनानां समाहारः षड्वदनी तां क्रमात् चुचुम्ब चुम्बितवती । सुखाश्रुपूर्णेनेत्यत्र सुखास्रपूर्णेनेति पाठे स एवार्थः । तस्यैकनालोद्गतेत्यत्र तस्यैकनालोद्गमेति पाठे एकस्मात्

हैमी फलं हेमगिरेर्लतेव विकस्वरं नाकनदीव पद्मम् ।
पूर्वेव दिङ्नूतनमिन्दुमाभात्तं पार्वती नन्दनमादधाना ॥२६॥
प्रीतात्मना सा प्रयतेन दत्तहस्तावलम्बा शशिशेखरेण ।
कुमारमुत्सङ्गतले दधाना विमानमभ्रंलिहमारुरोह ॥ २७ ॥

महेश्वरोऽपि प्रमदप्ररूढ-
रोमोद्गमो भूधरनन्दनायाः ।
अङ्कादुपादत्त तदङ्कतः सा
तस्मात्तु सोऽप्यात्मजवत्सलत्वात् ॥ २८ ॥

नालात् उद्गतो येषां तथोक्तानि षण्णानि पद्मानि तेषां लक्ष्मीरिव लक्ष्मीर्यस्यास्तथोक्तामित्यर्थः । एकनालोद्गतपञ्चपद्मलक्ष्मीमिति प्रामादिकः पाठः षड्वदनीमित्यस्य पञ्चपद्मलक्ष्मीयोगस्यायुक्तत्वात् प्रत्युत षट्पद्मलक्ष्मीयोगस्यैव वक्तव्यत्वात् तस्मात् एकनालोद्गतपद्मषट्कलक्ष्मीति पाठः साधुतया युज्यते इति सुधीभिर्भाव्यम् ॥ २५ ॥

हैमीति । हेमगिरेः कनकाद्रेर्हैमी काञ्चनमयी लता फलमिव हैममिति शेषः, नाकनदी स्वर्गगङ्गा विकस्वरं प्रफुल्लं पद्ममिव, तथा पूर्वा दिक् नूतनं नवोदयम् इन्दुमिव पार्वती तं नन्दनम् आदधाना सती आभात् शुशुभे । हैमीत्यत्र हैममिति पाठे हैमफलमित्यस्य विशेषणम् ॥ २६ ॥

प्रीतात्मनेति । सा पार्वती प्रीतात्मना प्रसन्नमनसा प्रयतेन अवहितेन शशिशेखरेण हरेण दत्तः हस्तावलम्बः यस्यास्तथाभूता कुमारम् उत्सङ्गतले क्रोड़देशे दधाना धारयन्ती सती अभ्रंलिहम् अत्युच्चं विमानं देवरथम् आरुरोह । सा प्रयतेनेत्यत्र सुप्रयतेनेति पाठान्तरम् ॥ २७ ॥

महेश्वर इति । महेश्वरोऽपि आत्मजवत्सलत्वात् पुत्रवात्सल्यात् हेतोः प्रमदेन हर्षेण प्ररूढः सञ्जातः रोमोद्गमः रोमाञ्चः यस्य

दत्त्वानया नेत्रसुधैकपात्रं पुत्रं पवित्रं सुतया तथाद्रेः।
संश्लिष्यमाणः शशिखण्डधारी विमानवेगेन गृहञ्जगाम॥२९॥
अधिष्ठितः स्फाटिकशैलशृङ्गे तुङ्गे निजं धाम निकामरम्यम्।
महोत्सवाय प्रमथप्रमुख्यान् पृथून् गणान् शम्भुरथादिदेश॥३०॥

तथाभूतः सन् भूधरनन्दनायाः पार्वत्याः अङ्कात् क्रोड़ात् उपादत्त जग्राह तं पुत्रमिति शेषः। सा पार्वती तस्य महेश्वरस्य अङ्कतः क्रोड़ात् उपादत्तेति सम्बन्धः तु पुनः सोऽपि तस्याः पार्वत्याः अङ्का-दिति शेषः उपादत्तेति क्रिययान्वयः। अङ्कादुपादत्त तदङ्कतः सा तस्यास्तु सोऽप्यात्मजवत्सलत्वादित्यत्र अकाण्डमादत्त तमङ्कतः स तस्यास्तु सौम्यात्मजवत्सलत्वादिति पाठे स महेश्वरः सौम्यः सुदर्शनः य आत्मजः तस्य वत्सलत्वात् तस्या भूधरनन्दनायाः गौर्य्याः अङ्कतः क्रोड़ात् तं पुत्रम् अकाण्डं सहसा आदत्त गृहीतवान्॥ २८॥

दत्त्वेति। शशिखण्डधारी चन्द्रशेखरो हरः अनया अद्रेः सुतया गौर्य्या नेत्रसुधाया एकमद्वितीयं पात्रं तथा पवित्रं पुत्रं दत्त्वा संश्लिष्यमाणः समालिङ्ग्यमानः सन् विमानवेगेन गृहं जगाम। दत्त्वानयेत्यत्र दधानयेति तथाद्रेरित्यत्र तयाद्रेरिति पाठे तया अद्रेः सुतया नेत्रसुधैकपात्रमित्यत्र नेत्रसुधैकसत्रमिति पाठे नेत्रसुधाया एकं सत्रं यज्ञम् उत्सवरूपमित्यर्थः पवित्रं पुत्रं दधानया धारयन्त्या तया संश्लिष्यमाण इत्यन्वयः। गृहमित्यत्र गृहानिति बहुवचनान्तं पाठान्तरम्॥ २९॥

अधिष्ठित इति। अथानन्तरं शम्भुः तुङ्गे उन्नते स्फाटिक-शैलस्य कैलासस्य शृङ्गे निकामरम्यं निजं धाम गृहम् अधिष्ठितः सन् प्रमथाः प्रमुखाः प्रधानानि येषां तथोक्तान् पृथून् महतः गणान् स्ववर्गान् महोत्सवाय आदिदेश आज्ञापयामास। निजं धाम निकामरम्यमित्यत्र निजे धामनि कामरम्ये इति पाठे कामेन रम्ये मनोहरे निजे धामनि गृहे अधिष्ठित इत्यन्वयः प्रमथप्रमुख्यानित्यत्र

पृथुप्रमोदः प्रगुणो गणानां गणः समग्रो वृषवाहनस्य ।
गिरीन्द्रपुत्र्यास्तनयस्य जन्मन्यथोत्सवं संववृते विधातुम् ॥२१॥

स्फुरन्मरीचिच्छुरिताम्बराणि
सन्तानशाखिप्रसवाञ्चितानि ।
उच्चिक्षिपुः काञ्चनतोरणानि
गणा वराणि स्फटिकालयेषु ॥ २२ ॥

दिक्षु प्रसर्पंस्तदधीश्वराणा-
मथामराणामिव मध्यलोके ।

प्रमथान् स नाथ इति गणान् शम्भुरथादिदेशेत्यत्र महिम्ना स्वसुदा-दिदेशेति पाठे स नाथः हरः स्वस्य मुदा हर्षेण प्रमथान् गणान् महिम्ना माहात्म्येन महासमृद्ध्येत्यर्थः महोत्सवाय आदिदेशेत्यन्वयः ॥ २० ॥

पृथुप्रमोद इति। अथ आदेशानन्तरं पृथुर्महान् प्रमोदो हर्षो यस्य तथोक्तः प्रगुणः अनुकूलः समग्रो गणानां गणः प्रमथवर्गः वृषवाहनस्य हरस्य गिरीन्द्रपुत्र्याः गौर्याश्च तनयस्य पुत्रस्य जन्मनि उत्सवं विधातुं कर्त्तुं संववृते प्रवृत्तः ॥ २१ ॥

अथ सप्तभिर्महोत्सवं वर्णयति स्फुरदित्यादिभिः। गणाः प्रमथाः स्फटिकालयेषु स्फुरन्तीभिर्मरीचिभिः किरणैः छुरितं व्याप्तम् अम्बरम् आकाशं यैः तादृशानि सन्तानशाखिनां देवतरुविशेषाणां प्रसवैः पुष्पैः पुष्पमालाभिरिति यावत् अञ्चितानि शोभितानि वराणि उत्कृष्टानि काञ्चनतोरणानि सौवर्णवहिर्द्वाराणि उच्चिक्षिपुः उत्-क्षिप्तवन्तः उत्तोलितवन्त इत्यर्थः। गणा वराणीत्यत्र गणाश्चलानीति पाठे चलानि चञ्चलानि स्फुरन्तीत्यर्थः काञ्चनतोरणानीत्यस्य विशे-षणम् ॥ २२ ॥

दिक्ष्विति। अथ काञ्चनतोरणोत्क्षेपानन्तरं दिक्षु आशासु प्रसर्पन् विस्तारं गच्छन् तदधीश्वराणां तासां दिशामधिपतीनाम् अम-

महोत्सवं शंसितुमाहतोऽन्यै-
र्दध्वान धीरः पटहः पटीयान् ॥ २३ ॥

महोत्सवे तत्र समागतानां गन्धर्वविद्याधरसुन्दरीणाम् ।
सम्भावितानां गिरिराजपुत्र्या गृहेऽभवन्मङ्गलगीतकानि ॥२४

सुमङ्गलोपायनपात्रहस्ता-
स्तं मातरो मातृवदभ्युपेताः ।
निधाय दूर्वाक्षतकानि मूर्ध्नि
निन्युः स्वमङ्कं गिरिजातनूजम् ॥ २५ ॥

ध्वनत्सु तूर्येषु सुमन्द्रमङ्क्यालिङ्ग्योर्ध्वकेष्वप्सरसो रसेन ।
सुसन्धिबन्धं ननृतुः सुवृत्तगीतानुगं भावरसानुविद्धम् ॥२६॥

राणां देवानाम् इन्द्रादीनां सम्बन्धी पटीयान् महान् धीरः गम्भीरः पटहः वाद्यभेदः अन्यैर्देवभृत्यैरित्यर्थः आहतस्ताड़ितः सन् मर्त्यलोके भूतले महोत्सवं शंसितुमिव दध्वान ध्वनिं चकार ॥ २३ ॥

महोत्सवे इति । तत्र महोत्सवे गृहे समागतानां गिरिराजपुत्र्या सम्भावितानां सत्कृतानां गन्धर्वविद्याधरसुन्दरीणां मङ्गलगीतकानि मङ्गलसङ्गीतानि अभवन् ॥ २४ ॥

सुमङ्गलेति । सुमङ्गलानाम् उपायनानाम् उपढौकनानां पात्राणि हस्तेषु यासां तथोक्ताः अभ्युपेताः उपस्थिताः मातरः ब्राह्मीत्यादयः दूर्वाक्षतानि मूर्ध्नि शिरसि बालकस्येति शेषः मातृवत् मातर इव तं गिरिजातनूजं कुमारं स्वम् अङ्कं क्रोड़ं निन्युः नीतवत्यः । मातृवदभ्युपेता इत्यत्र मातृवदभ्युपेत्येति पाठे अभ्युपेत्य समागत्येत्यर्थः ॥ २५ ॥

ध्वनत्स्विति । अङ्क्यालिङ्ग्योर्ध्वकेषु अङ्क्यम् आलिङ्ग्यम् ऊर्ध्वकञ्च तेषु तदाख्येषु त्रिष्वर्थः तूर्येषु वाद्यभेदेषु सुमन्द्रं गम्भीरं यथा तथा ध्वनत्सु नदत्सु सत्सु अप्सरसः रसेन अनुरागेण बालकस्नेहेनेत्यर्थः

वाता ववुः सौख्यकराः प्रसेदु-
राशा विधूमो हुतभुग्दिदीपे ।
जलान्यभूवन्विमलानि तस्मि-
न्नवेऽन्तरिक्षं प्रससाद सद्यः ॥ ३७ ॥

गम्भीरशङ्खध्वनिमिश्रमुच्चै-
र्गृहोद्भवा दुन्दुभयः प्रणेदुः ।
दिवौकसां व्योम्नि विमानसङ्घा
विमुच्य पुष्पप्रचयान् प्रसस्रुः ॥ ३८ ॥

सुष्ठु सम्बिबन्धः स्वरसंयोगबन्धः यत्र तादृशं सुवृत्तं सुरचितं यत् गीतं तदनुगं तद्युक्तमित्यर्थः तथा भावेन रत्यादिना रसेन शृङ्गारादिना अनुविद्धं सुसङ्गतं यथा तथा ननृतुः नृत्यं चक्रुः । सुवृत्त-गीतानुगमित्यत्र सुतन्त्रीगीतानुगमिति पाठे सुतन्त्र्या गीतेन अनुगम् अनुगतमित्यर्थः ॥ २६ ॥

वाता इति । तत्र उत्सवे सद्यः तत्क्षणं वाताः वायवः सौख्यकराः सुखस्पर्शा इति भावः सन्तः ववुः वहन्ति स्म, आशा दिशः प्रसेदुः प्रसन्ना निर्मला बभूवुः । हुतभुक् अग्निः विधूमः धूम-शून्यः सन् दिदीपे प्रजज्वाल । जलानि विमलानि निर्मलानि अभूवन् अन्तरीक्षम् आकाशं प्रससाद प्रसन्नमभूत् ॥ ३७ ॥

गम्भीरेति । गृहोद्भवाः ईश्वरगृहे वाद्यमाना इत्यर्थः दुन्दुभयः तदाख्यवाद्यभेदाः गम्भीरेण शङ्खध्वनिना मिश्रं यथा तथा उच्चैः प्रणेदुः दध्वनुः । तथा व्योम्नि अन्तरीक्षे दिवौकसां देवानां विमान-सङ्घाः देवयाननिचयाः पुष्पप्रचयान् विमुच्य अभिवृष्येत्यर्थः प्रसस्रुः विचेरुः । गृहोद्भवा इत्यत्र दिवि भुवा इति पाठे दिवि स्वर्गे भुवाः यथार्थाः अन्वर्थनामानः दुम् दुमिति शब्दकारिण इति भावः । विमुच्य पुष्पप्रचयानित्यत्र विसृजतां पुष्पचयानिति पाठे पुष्पचयान् विसृजतां वर्षतां दिवौकसामित्यन्वयः ॥ ३८ ॥

इत्थं महेशाद्रिसुतासुतस्य जन्मोत्सवे सम्मदयाञ्चकार ।
चराचरं विश्वमशेषमेतत्परं चकम्पे किल तारकश्रीः ॥ ३९ ॥

ततः कुमारः सुमुदां निदानैः
स बाललीलाचरितैर्विचित्रैः ।
गिरीशगौर्योर्हृदयं जहार
मुदे न हृद्या किमु बालकेलिः ॥ ४० ॥

महेश्वरः शैलसुता च हर्षात्
सतर्षमेकेन मुखेन गाढम् ।
अजातदन्तानि मुखानि सूनो-
र्मनोहराणि क्रमशश्चुचुम्ब ॥ ४१ ॥

इत्थमिति । महेशाद्रिसुतयोः हरपार्वत्योः सुतस्य इत्थं जन्मोत्सवः एतत् अशेषं समग्रं चराचरं स्थावरजङ्गमं विश्वं जगत् सम्मदयाञ्चकार समानन्दयत् । परं केवलं तारकस्य असुरराजस्य श्रीः चकम्पे किल कम्पितवत्येव ॥ ३९ ॥

तत इति । ततः अनन्तरं स कुमारः सुमुदां शोभनानन्दानां निदानैः हेतुभूतैः विचित्रैः विविधैः बाललीलाचरितैः बाल्यक्रीड़ानुष्ठानैः गिरीश गौर्य्योः हरपार्वत्योः हृदयं जहार आनन्दयामासेत्यर्थः तथाहि हृद्या मनोहारिणी बालकेलिः बाल्यलीला किमु मुदे न ? आनन्दायन लोकस्येति शेषः अपितु सर्वस्यैव मुदे भवतीत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । सुमुदां निदानैरित्यत्र स मुदो निदानैरिति पाठे स कुमारः मुदः हर्षस्येत्यर्थः । स बाललीलाचरितैरित्यत्र स्वबाललीला ललितैरिति पाठे स्वस्य बाललीलाया ललितैश्चरितैरित्यर्थः ॥ ४० ॥

महेश्वर इति । महेश्वरः शैलसुता पार्वती च हर्षात् आनन्दात्

क्वचित् स्खलद्भिः क्वचिदस्खलद्भिः
क्वचित्प्रकम्पैः क्वचिदप्रकम्पैः ।
बालः स लीलाचलनप्रयोगै-
स्तयोर्मुदं वर्धयति स्म पित्रोः ॥ ४२ ॥

अहेतुहासच्छुरिताननेन्दुर्गृहाङ्गणक्रीडनधूलिधूम्रः ।
मुहुर्वदन् किञ्चिदलक्षितार्थं मुदं तयोरङ्कगतस्ततान ॥४३॥

गृह्णन्विषाणे हरवाहनस्य
स्पृशन्नुमाकेसरिणं सलीलम् ।
स भृङ्गिणः सूक्ष्मतरं शिखाग्रं
कर्षन् बभूव प्रमदाय पित्रोः ॥ ४४ ॥

एकेन मुखेन सूनोः पुत्रस्य अजातदन्तानि मनोहराणि मुखानि सतृष्णं गाढं यथा तथा क्रमशः चुचुम्ब ॥ ४१ ॥

क्वचिदिति । स बालः शिशुः क्वचित् स्खलद्भिः क्वचित् अस्खलद्भिः क्वचित् प्रकम्पैः कम्पनसहितैः क्वचित् अप्रकम्पैः कम्परहितैः लीलया चलनप्रयोगैः सञ्चरणव्यापारैः तयोः पित्रोः मातापित्रोः गौरीहरयोः मुदम् आनन्दं वर्द्धयति स्म । स लोलेत्यत्र स लीलमिति पाठे सलीलं सविलासमित्यर्थः । वर्द्धयति स्म पित्रोरित्यत्र कन्दलयाञ्चकारेति पाठे कन्दलयाञ्चकार अवीवृधदित्यर्थः ॥ ४२ ॥

अहेत्विति । अहेतुना अकारणेन हासेन छुरितः शोभितः आननेन्दुः मुखचन्द्रः यस्य तथोक्तः गृहाङ्गणेषु गृहचत्वरेषु यत् क्रीडनं तेन धूलिधूम्रः रेणुरूषित इत्यर्थः तथा मुहुः पुनःपुनः अलक्षितार्थकम् असङ्गतार्थं किञ्चित् यत् किञ्चिदित्यर्थः वदन् अङ्कगतः स बालकः तयोर्मातापित्रोः मुदम् आनन्दं ततान विस्तारयामास ॥ ४३ ॥

गृह्णन्निति । स बालः हरवाहनस्य वृषभस्य विषाणे शृङ्गे गृह्णन्

एको नव द्वौ दश पञ्च सप्तेत्यजीगणन्नात्मसुखं प्रसार्य ।
महेशकण्ठोरगदन्तपङ्क्तिं तदङ्कग: शैशवमौग्ध्यमैशि:॥४५॥
कपर्दिकण्ठान्तकपालदाम्नोऽङ्गुलिं प्रवेश्याननकोटरेषु ।
दन्तानुपात्तुं रभसी बभूव मुक्ताफलभ्रान्तिकर: कुमार:॥४६॥

शम्भो: शिरोऽन्त:सरितस्तरङ्गा-
न्विगाह्य गाढं शिशिरान्सेन ।

आक्रमन् उमाया: केशरिणं सिंहं वाहनमिति शेष: सलीलं स्पृशन् गृह्णन् तथा भृङ्गिण: सूक्ष्मतरम् अतिसूक्ष्मं शिखाग्रं कर्षन् आक्षिपन् सन् पित्रो: गौरीगिरीशयो: प्रमदाय आनन्दाय बभूव। उमाकेशरिणं सलीलमित्यत्र उमाकेशरिण: सटालीरिति पाठे उमाकेशरिण: सटाली: जटापङ्क्ती: स्पृशन्नित्यनेन सम्बन्ध: ॥ ४४ ॥

एक इति। तस्य महेशस्य अङ्कग: क्रोड़स्थ: ईशस्यापत्यम् ऐशि: स्कन्द: शैशवेन मौग्ध्यं सौन्दर्य्यं यस्मिन् तद् यथा तथा आत्मसुखम् आत्मना सुखम् उरगस्येति भाव: प्रसार्य्य विस्तार्य्य महेशस्य कण्ठे य उरग: भुजङ्ग: मालारूप इति भाव: तस्य दन्तपङ्क्तिम् एक: नव द्वौ दश पञ्च सप्त अजीगणत् संख्यातवान्। आत्मसुखमित्यत्र मञ्जु सुखमिति पाठे मञ्जु मनोहरं सुखं स्वमिति शेष:। शैशवमौग्ध्यमित्यत्र शैशवमुग्धमिति पाठे स एवार्थ: ॥ ४५ ॥

कपर्द्दीति। कुमार: कपर्दिन: शिवस्य कण्ठान्ते गलदेशे यत् कपालदाम नृकपालमाला, तस्य आननकोटरेषु मुखगह्वरेषु अङ्गुलिं प्रवेश्य मुक्ताफलभ्रान्तिकर: मौक्तिकभ्रमवानित्यर्थ: सन् दन्तान् कपालस्थानिति भाव: उपात्तुं गृहीतुं रभसी वेगवान् यत्नवानित्यर्थ: अप्य इति यावत् रभसो वेगहर्षयोरित्यमर:। बभूव मुक्ताफलभ्रान्तिकर इत्यत्र मुक्ताफलभ्रान्तिकरानिति पाठे मुक्ताफलभ्रान्तिकरान् दन्तानित्यस्य विशेषणम् ॥ ४६ ॥

शम्भोरिति। स कुमार: शिशिरान् शीतलान् शम्भो: शिरो-

स जातजाड्यं निजपाणिपद्म-
मतापयद्भालविलोचनाग्नौ ॥ ४७ ॥

किञ्चित्कलं भङ्गुरकन्धरस्य
नमज्जटाजूटधरस्य शम्भोः ।
प्रलम्बमानं किल कौतुकेन
चिरं चुचुम्बे मुकुटेन्दुखण्डम् ॥ ४८ ॥

इत्थं शिशोः शैशवकेलिवृत्तैर्मनोभिरामैर्गिरिजागिरीशौ ।
मनोविनोदैकरसप्रसक्तौ दिवानिशं नाविदतां कदाचित्॥४९

ऽन्तःचरितः मूर्द्धस्थितनद्याः शिरश्चारिण्या गङ्गाया इत्यर्थः तरङ्गान् रसेन आनन्देन गाढ़ं यथा तथा विगाह्य जातं जाड्यं शैत्यं यस्य तादृशं निजपाणिपद्मं भालविलोचनाग्नौ ललाटनेत्रानले अतापयत् उष्णं चकार । स जातजाड्यमित्यत्र सञ्जातजाड्य इति पाठे सञ्जात-जाड्यः शीतलदेह इति भावः ॥ ४७ ॥

किञ्चिदिति । किञ्चित् ईषत् कलं मधुरं यथा तथा भङ्गुरा कन्धरा ग्रीवा यस्य तथोक्तस्य नमत् यत् जटाजूटं तस्य धरतीति धरः तस्य शम्भोर्हरस्य प्रलम्बमानं मुकुटभूतम् इन्दुखण्डम् अर्द्धचन्द्रं कौतुकेन चिरं चुचुम्बे किल । भङ्गुरकन्धरस्य नमज्जटाजूटधरस्येत्यत्र भङ्गुरकण्ठे रस्य नमज्जटाजूटधरस्येति पाठे भङ्गुरे कण्ठे नमत् यत् जटाजूटं तस्य धरः तस्येत्यर्थः ॥ ४८ ॥

इत्थमिति । गिरिजागिरीशौ इत्थम् एवंप्रकारैरित्यर्थः मनोभि-रामैः शिशोः शैशवकेलिवृत्तैः बाल्यलीलाचरितैः मनसः विनोदे एकः अद्वितीयः यः रसः स्वाद इत्यर्थः तत्र प्रसक्तौ सन्तौ कदाचित् दिवा-निशं न अविदतां दिवारात्रं कुतो गतमिति न विज्ञातवन्तावित्यर्थः । मन इत्यत्र मुदेति पाठे मुदा हर्षेणेत्यर्थः ॥ ४९ ॥

इति बहुविधं बालक्रीडाविचित्रविचेष्टितं
ललितललितं सान्द्रानन्दं मनोहरमाचरन् ।
अलभत परां बुद्धिं षष्ठे दिने नवयौवनं
स किल सकलं शास्त्रं शस्त्रं विवेद विभुर्यया ॥५०॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
कुमारोत्पत्तिर्नामैकादशः सर्गः ।

---

## द्वादशः सर्गः ।

---

अथ प्रपेदे त्रिदशैरशेषैः क्रूरासुरोपप्लवदुःखितात्मा ।
पुलोमपुत्रीदयितोऽन्धकारिं पत्रीव तृष्णातुरितः पयोदम्॥१॥

इतीति । इति इत्थं बहुविधं ललितललितम् अतिमनोहरं सान्द्रानन्दं मनोहरं बालक्रीड़ाया विचित्रम् अद्भुतं विचेष्टितं विहारम् आचरन् विदधत् स कुमारः षष्ठे दिने परां महतीं बुद्धिं प्रज्ञां नवं यौवनञ्च अलभत प्राप, यया बुद्ध्या स विभुः समर्थः सन् सकलं समग्रं शास्त्रं शस्त्रञ्च विवेद किल ज्ञातवानेव । बुद्धिमित्यत्र वृद्धिमिति पाठे वृद्धिम् अभ्युदयमित्यर्थः । विभुर्ययेत्यत्र विभोरपीति पाठे विभोः पितृहरात् शास्त्रं शस्त्रमपीत्यर्थः ॥ ५० ॥

इति एकादशः सर्गः ।

---

अथेति । अथ कुमारस्य विद्याशिक्षानन्तरं क्रूरस्य असुरस्य तारकस्य उपद्रवेण अत्याचारेण दुःखित आत्मा यस्य तथाभूतः

दृप्तारिसन्त्रासखिलीकृतात्स कथञ्चिदम्भोदविहारमार्गात् ।
अवातताराभि गिरिं गिरीशगौरीपदन्यासविशुद्धमिन्द्रः॥२॥

सङ्क्रन्दनः स्यन्दनतोऽवतीर्य
मेघात्मनो मातलिदत्तहस्तः ।
पिनाकिनोऽथालयमुच्चचाल
शुचौ पिपासाकुलितो यथाम्भः ॥ ३ ॥

पुलोम्नः तदाख्यस्य असुरराजस्य पुत्री शची तस्या दयितः प्रियः देवराज इत्यर्थः तृष्णया पिपासया आतुरितः क्लिष्टः पत्री पक्षी चातक इत्यर्थः पयोदमिव मेघमिव अशेषैः समस्तैः त्रिदशैः देवैः सह अन्धकारिं हरं प्रपेदे प्राप। पत्रीव तृष्णातुरित इत्यत्र तृषातुरश्चातकवदिति पाठे स एवार्थः। उपमालङ्कारः। उपजातिवृत्तमस्मिन् सर्गे ॥ १ ॥

दृप्तारीति। स इन्द्रः दृप्तात् अरेस्तारकात् यः सन्त्रासः तेन खिलीकृतात् रुद्धीकृतात् अम्भोदानां मेघानां विहारः विचरणं तस्य मार्गात् अन्तरीक्षादित्यर्थः गिरीशस्य गौर्य्याश्च पदन्यासेन विशुद्धं पूतं गिरिं कैलासम् अभि कथञ्चित् अतिकष्टेन भयेनेति भावः अवाततार अवारुरोह। दृप्तारिसन्त्रासखिलीकृतादित्यत्र दृप्तासुरत्रासखिलीकृतादिति पाठान्तरम् ॥ २ ॥

संक्रन्दन इति। अथ अवतरणानन्तरं संक्रन्दनः इन्द्रः संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहन इत्यमरः। मातलये स्वसूताय दत्तः हस्तो येन तथाभूतः सन् मातलिहस्तमवलम्बमान इत्यर्थः मेघात्मनः मेघरूपिणः स्यन्दनतः रथादित्यर्थः मेघवाहनत्वादिति भावः अवतीर्य्य शुचौ ग्रीष्मे पिपासाकुलितः अम्भः जलं यथा पिनाकिनः शिवस्य आलयम् उच्चचाल गतवान्। पिनाकिनोऽथालयमित्यत्र पिनाकिरम्यालयमिति पाठे पिनाकिनः रम्यम् आलयमावासमित्यर्थः।

इतस्ततोऽथ प्रतिबिम्बभाजं विलोकमान: स्फटिकाद्रिभूमौ।
आत्मानमप्येकमनेकधा स व्रजन्विभोरास्पदमाससाद ॥ ४ ॥
विचित्रचञ्चन्मणिभङ्गिसङ्गं सौवर्णदण्डं दधतातिचण्डम्।
स नन्दिनाधिष्ठितमध्यतिष्ठत्सौधाङ्गणद्वारमनङ्गशत्रो: ॥ ५ ॥
तत: स कक्षाहितहेमदण्डो नन्दी सुरेन्द्रं प्रतिपद्य सद्य: ।
प्रतोषयामास सुगौरवेण गत्वा शशंस स्वयमीश्वरस्य ॥ ६ ॥

पिपासाकुलितो यथास्य इत्यत्र पिपासाकुलवज्जलौघमिति पाठे स एवार्थ: । उपमालङ्कार: ॥ ३ ॥

इतस्तत इति । अथ अनन्तरं स इन्द्र: स्फटिकाद्रिभूमौ कैलासतले इतस्तत: व्रजन् गच्छन् प्रतिबिम्बभाजं प्राप्तप्रतिबिम्बम् आत्मानम् एकमपि अनेकधा अनेकमित्यर्थ: विलोकमान: पश्यन् सन् विभो: शङ्करस्य आस्पदम् आवासम् आससाद प्राप । इतस्ततोऽथेत्यत्र इतस्ततोऽपीति पाठान्तरम् ॥ ४ ॥

विचित्रेति । स इन्द्र: विचित्राणां नानाविधानां चञ्चतां स्फुरतां मणीनां रत्नानां भङ्गिभि: रचनाभि: सङ्ग: सम्बन्ध: यस्य तथोक्तं बहुरत्नरचितमिति यावत् अतिचण्डम् अतिविकटं सौवर्णदण्डं हेमयष्टिं दधता नन्दिना अधिष्ठितम् अनङ्गशत्रो: हरस्य सौधाङ्गणद्वारं हर्म्यचत्वरद्वारम् अध्यतिष्ठत् प्राप ॥ ५ ॥

तत इति । तत: अनन्तरं स नन्दी सुरेन्द्रं प्रतिपद्य प्राप्य सद्य: तत्क्षणं कक्षे भुजाधस्तले आहित: निहित: हेमदण्डो येन तथाभूत: सन् सुगौरवेण सुसत्कारेण प्रतोषयामास प्रकर्षेण सन्तोषयामास स्वयं गत्वा ईश्वरस्य हरस्य शशंस निवेदयामास च । शशंस स्वयमीश्वरस्येत्यत्र सदो मण्डलमीश्वरस्येति पाठे सुरेन्द्रं प्रतिपद्य प्राप्य नीत्वेत्यर्थ: ईश्वरस्य सदो मण्डलं स्थानं गत्वा सुगौरवेण प्रतोषयामास देवराजागमननिवेदनेनेश्वरमिति शेष: ॥ ६ ॥

भ्रूसंज्ञयानेन कृताभ्यनुज्ञः सुरेश्वरं तं जगदीश्वरेण ।
प्रवेशयामास सुरैः पुरोगः समं स नन्दी सदनं सदस्य ॥७॥
स चण्डिभृङ्गिप्रमुखैर्गरिष्ठैर्गणैरनेकैर्विविधस्वरूपैः ।
अधिष्ठितं संसदि रत्नमय्यां सहस्रनेत्रः शिवमालुलोके ॥८॥
कपर्दमुद्बद्धमहीनमूर्धरत्नांशुभिर्भासुरमुल्लसद्भिः ।
दधानमुच्चैस्तरमिद्धधातोः सुमेरुशृङ्गस्य समत्वमाप्तम् ॥ ९ ॥

भ्रूसंज्ञयेति । अनेन जगतामीश्वरेण भ्रूसंज्ञया भ्रुवश्चालनसङ्केतेन कृता अभ्यनुज्ञा अनुमतिः सुरेन्द्रप्रवेशायेति भावः यस्य तथाभूतः नन्दी पुरोगः अग्रगामी सन् तं सुरेन्द्रं सुरैः देवैः समं सह अस्य जगदीश्वरस्य सत् शोभनं सदनं गृहं प्रवेशयामास । भ्रूसंज्ञयानेनेत्यत्र तेनेति पाठान्तरम् । सदस्येत्यत्र हरस्येति पाठान्तरम् ॥७॥

स इति । स सहस्रनेत्रः इन्द्रः चण्डिभृङ्गिमुखैः गरिष्ठैः महद्भिः विविधस्वरूपैः नानाविधरूपैः अनेकैर्गणैः सह रत्नमय्यां संसदि सभायाम् अधिष्ठितम् आसीनं शिवम् आलुलोके ददर्श । रत्नमय्यामित्यत्र रत्नवत्यामिति पाठान्तरम् ॥ ८ ॥

अथ त्रयोदशभिः शिवं विशिनष्टि कपर्दमित्यादिभिः । उल्लसद्भिः स्फुरद्भिः अहीनां भुजगानाम् इनाः स्वामिनः वासुकिप्रभृतयः तेषां मूर्द्धसु शिरःसु यानि रत्नानि तेषाम् अंशुभिः किरणैः भासुरं समुज्ज्वलम् उद्बद्धम् उत्क्षिप्तं संयतं कपर्दं जटाजूटं दधानं धारयन्तम् उच्चैस्तरम् अतिशयेन उन्नतम् । अतएव इद्धाः दीप्ताः धातवः गैरिकादयः यत्र तथाभूतं सुमेरुशृङ्गस्य काञ्चनाचलस्य समत्वं सादृश्यम् आप्तं प्राप्तम् । कपर्दमुद्बद्धमहीनमूर्द्धरत्नांशुभिर्भासुरमुल्लसद्भिरित्यत्र कपर्दमूर्द्धस्थमहाहिमूर्द्धरत्नांशुभिर्भासुरमुल्लसद्भिरिति पाठे उल्लसद्भिः कपर्दस्य मूर्द्धनि शिरसि अग्रे इत्यर्थः । तिष्ठन्तीति तथोक्तानां महाहीनां महानागानां मूर्द्धरत्नानाम् अंशुभिः भासुरं समुज्ज्वलमिति शिवविशेषणम् ॥ ९ ॥

बिभ्राणमुत्तुङ्गतरङ्गमालां गङ्गां जटाजूटतटं भजन्तीम् ।
गौरीं तदुत्सङ्गजुषं हसन्तीमिव स्वफेनैः शरदभ्रशुभ्रैः ॥१०॥
गङ्गातरङ्गप्रतिबिम्बितैः स्वैर्बह्नभवन्तं शिरसा सुधांशुम् ।
चलन्मरीचिप्रचयैस्तुषारगौरैर्हिमद्योतितमुद्वहन्तम् ॥ ११ ॥
भालस्थले लोचनमेधमानधामाधरीभूतरवीन्दुनेत्रम् ।
युगान्तकालोचितहव्यवाहं मीनध्वजप्लोषणमादधानम् ॥ १२

बिभ्राणमिति । उत्तुङ्गा प्रवृद्धास्तरङ्गमाला यस्यास्तथोक्तां जटाजूटतटं कपर्द्दप्रदेशं भजन्तीं सञ्चरन्तीमित्यर्थः शरदभ्रशुभ्रैः शारदीयमेघधवलैः स्वफेनैः तस्य शिवस्य उत्सङ्गजुषं क्रोड़स्थितां गौरीं सपत्नीमिति भावः हसन्तीमिव त्वं पत्युरुत्सङ्गवर्त्तिनी, अहन्तु शिरश्चारिणी अतस्त्वत्तोऽतिवल्लभाहं भर्त्तुरिति उपहसन्तीमिव गङ्गां बिभ्राणं धारयन्तम् ॥ १० ॥

गङ्गेति । गङ्गायाः शिरश्चारिण्या इति भावः तरङ्गेषु प्रतिबिम्बितैः प्रतिफलितैः स्वैः निजावयवैः बह्नभवन्तं तथा तुषारगौरैः हिमशुभ्रैः चलद्भिः स्फुरद्भिः मरीचीनां मयूखानां प्रचयैः समूहैः हिमस्येव द्योतः दीप्तिः जातोऽस्येति तथोक्तं हिमवत् द्योतमानमित्यर्थः सुधांशुं चन्द्रं शिरसा उद्वहन्तम् । चलन्मरीचिप्रचयैस्तुषारगौरैर्हिमद्योतितमित्यत्र चलन्मरीचिप्रचयैस्तुषारैर्गौरैर्दिगुद्योतितमिति पाठे तुषारैः शीतैः गौरैर्धवलैः चलन्मरीचिप्रचयैः दिक्षु उद्योतितं दीप्यमानमित्यर्थः ॥ ११ ॥

भालस्थले इति । एधमानं वर्द्धमानं धाम तेजः यस्य तादृशम् अधरीभूते निर्जिते रवीन्दु सूर्य्याचन्द्रमसौ एव नेत्रे जगत इति भावः येन तथोक्तं युगान्तकाले कल्पान्तसङ्कटे उचितः अभ्यस्तः निर्गलित इति भावः हव्यवाहः अग्निर्यस्मात् तथाविधं मीनध्वजस्य

स्ववद्धया कण्ठिकयेव नील-
माणिक्यमय्या कुतुकेन गौर्य्याः ।
नीलस्य कण्ठस्य परिस्फुरन्त्या
कान्त्या महत्या सुविराजमानम् ॥ १३ ॥
महार्हरत्नाञ्चितयोरुदारं
स्फुरत्प्रभामण्डलयोः समन्तात् ।
कर्णस्थिताभ्यां शशिभास्कराभ्या-
मुपासितं कुण्डलयोश्छलेन ॥ १४ ॥
कालार्दितानां त्रिदशासुराणां
चितारजोभिः परिपाण्डुराङ्गम् ।

कामस्य शोषणं दहनं लोचनं तृतीयमिति भावः आदधानं धारयन्तम् ॥ १२ ॥

स्ववद्धयेति । गौर्य्याः कुतुकेन इच्छयेत्यर्थः स्वेन आत्मना वद्धया परिहितया नीलमाणिक्यमय्या कण्ठिकयेव कण्ठाभरणेनेव नीलस्य कण्ठस्य परिस्फुरन्त्या विकसन्त्या महत्या कान्त्या सुविराजमानम् । स्ववद्धयेत्यत्र सुवद्धया इति गौर्य्या इत्यत्र गौर्य्येति पाठे गौर्य्या कर्त्र्या सुवद्धया सुष्ठु परिहितया गले निहितयेति यावदित्यर्थः । सुवि-राजमानमित्यत्र च विराजमानमिति पाठान्तरम् ॥ १३ ॥

महार्हेति । महार्हरत्नैः महामूल्यमणिभिः अञ्चितयोः उद्भासितयोः स्फुरत् प्रभामण्डलं ययोस्तादृशयोः कुण्डलयोः कर्णा-लङ्कारविशेषयोश्छलेन कर्णयोः स्थिताभ्यां शशिभास्कराभ्यां चन्द्र-सूर्य्याभ्यां समन्तात् उपासितं सेवितम् । उदारं महान्तम् । उदारं स्फुरत् प्रभामण्डलयोरित्यत्र उदारस्फुरत् प्रभामण्डलयोरिति पाठे उदारं यथा तथा स्फुरत् प्रभामण्डलयोरित्यर्थः ॥ १४ ॥

कालार्दितानामिति । कालेन अर्दितानां निहतानां त्रिदशा-

महन्महेभाजिनमुद्गताभ्र-
प्रालेयशैलश्रियमुद्वहन्तम् ॥ १५ ॥
पाणिस्थितब्रह्मकपालपात्रं वैकुण्ठभाजापि निषेव्यमाणम्।
नरास्थिखण्डाभरणं रणान्तमूलं त्रिशूलं कलयन्तमुच्चैः ॥१६॥

सुराणां देवदैत्यानां चितारजोभिः चिताभस्मभिः परिपाण्डुराणि श्वेतीकृतानि अङ्गानि यस्य तथोक्तं महत् बृहत् महेभस्य गजासुरस्य अजिनं चर्म उद्वहन्तं दधानम् अतएव उद्गतम् उदितम् अभ्रं मेघः यत्र तथाभूतः यः प्रालेयशैलः हिमाद्रिः तस्येव श्रीः शोभा यस्य तादृशम् ॥ १५ ॥

पाणीति। पाणौ स्थितं ब्रह्मकपालं ब्रह्मणः कपालमेव पात्रं यस्य तथोक्तं पुरा किल ब्रह्मणः कन्यायां जातानुरागस्य विरूपं चेष्टितमालोक्य भगवान् शङ्करस्तस्य पञ्चानां मुखानामेकं चिच्छेद। ततस्तच्छिरस्तस्य हस्ते लग्नमासीत् ब्रह्महत्या च तं देवमधावत्। स तु देवः कथञ्चिदपि ब्रह्महत्यामतिक्रमितुमशक्नुवन् त्रिभुवनं बभ्राम। ततो भगवतो नारायणस्य परामर्शेन वाराणसीं जगाम, ब्रह्महत्या तु वाराणसीं गन्तुं नाशकत्। हस्तलग्नं शिरश्च तदानीं हस्तात् पपात। ततः प्रभृति तत् ब्रह्मकपालं स्वायत्तं जातम्। तेन च भगवान् हरो भिक्षामकरोत्। तच्च तस्य भिक्षापात्रत्वेन प्रसिद्ध-मासीदिति पौराणिकी कथात्रानुसन्धेया। वैकुण्ठभाजापि विष्णुनापि का कथा अन्यैर्देवैरिति अपिशब्दार्थः। निषेव्यमाणम् आराध्यमा-नम्। नराणाम् अस्थिखण्डान्येव आभरणानि यस्य तथाभूतम्। रणे संग्रामे यः अन्तः अवसानं निधनमित्यर्थः वीराणामिति भावः तस्य मूलं साधनमित्यर्थः उच्चैः महत् त्रिशूलं कलयन्तं धारयन्तम्। वैकुण्ठभाजापि निषेव्यमाणमित्यत्र वैकुण्ठकङ्कालकरालकायमिति पाठे वैकुण्ठस्य नारायणस्य कङ्कालेन अस्थ्ना करालः भीषणः कायो देहः यस्य तथाभूतं सर्वसंहारकत्वात्तस्येति भावः। नरास्थि खण्डाभरण-

पुरातनीं ब्रह्मकपालमालां कण्ठे वहन्तं पुनराश्वसन्तीम् ।
उद्गीतवेदां मुकुटेन्दुवर्षत्सुधाभरौघाप्लवलब्धसंज्ञाम् ॥ १७ ॥
सलीलमङ्कस्थितया गिरीन्द्रपुत्र्या नवाष्टापदवल्लिभासा ।
विराजमानं शरदभ्रखण्डं परिस्फुरन्त्याचिररोचिषेव ॥१८॥
इमान्धकप्राणहरं पिनाकं महासुरस्त्रीविधवत्वहेतुम् ।

मित्यत्र सुरास्थिकण्ठाभरणं सुराणां देवानाम् अस्थीन्येव कण्ठाभरणानि गलमाल्यानीत्यर्थः यस्य तथाभूतमित्यर्थः ॥ १६ ॥

पुरातनीमिति । मुकुटं शिरोभूषणभूतं यदिन्दुरस्य: तस्मात् वर्षन् गलन् यः सुधाभराणाम् अमृतचयानाम् ओघः प्रवाहः तस्मिन् आप्लवेन सन्तरणेन तत्सङ्गेनेत्यर्थः लब्धा संज्ञा चैतन्यं यया तथोक्ताम् अतएव पुनः आश्वसन्तीम् उज्जीवन्तीं ततश्च उच्चैर्गीतः वेदो यया तथाभूतां पुरातनीं पूर्वकालीनां ब्रह्मकपालानां मालां स्रजं युगे युगे बहूनां ब्रह्मणां संहारकत्वादिति भावः कण्ठे उद्वहन्तं धारयन्तम् । उद्गीतवेदामित्यत्र उद्गीर्णवेदामिति पाठे स एवार्थः । मुकुटेन्दुवर्षत् सुधाभरौघाप्लवलब्धसंज्ञामित्यत्र मुकुटेन्दुवर्षत्सुधौघसंप्लावनलब्धसंज्ञामिति पाठे मुकुटेन्दोः वर्षन् यः सुधौघः अमृतचयः तस्य संप्लावनेन सङ्गेन लब्धसंज्ञामित्यर्थः ॥ १७ ॥

सलीलमिति । सलीलं सविलासं यथा तथा अङ्कस्थितया उत्सङ्गवर्त्तिन्या नवा या अष्टापदवल्लिः स्वर्णलता तस्या इव भाः कान्तिर्यस्या तादृश्या गिरीन्द्रपुत्र्या गौर्य्या परिस्फुरन्त्या परितः विकसन्त्या अचिररोचिषा विद्युता शरदभ्रखण्डमिव शारदं मेघमिव विराजमानम् । नवाष्टापदवल्लिभासेत्यत्र नवाष्टापदतुल्यभासेतिपाठे नूतनकाञ्चनसमकान्त्येत्यर्थः ॥ १८ ॥

इमेति । इमः यः अन्धकः तदाख्योऽसुरः तस्य प्राणहरं प्राणनाशनं महासुराणां याः स्त्रियः तासां विगता धवाः पतयः यासां तासां भावः विधवात्वं वैधव्यमित्यर्थः तस्य हेतुं साधनम्

करेण गृह्णन्तमगृह्यमन्यैः पुरास्मरप्लोषणकेलिकारम् ॥ १९ ॥
भद्रासनं काञ्चनपादपीठं महार्हमाणिक्यविभङ्गिचित्रम् ।
अधिष्ठितं चन्द्रमरीचिगौरैरुद्वीज्यमानं चमरैर्गणाभ्याम् ॥२०॥
शस्त्रास्त्रविद्याभ्यसनैकसक्ते सविस्मयैरेत्य गणैः सुदृष्टे ।
नीराज्यमाने स्फटिकाचलेन सानन्दनिर्दिष्टदृशं कुमारे ॥२१॥

अन्यैः अगृह्यं ग्रहीतुमशक्यं पिनाकं स्वं धनुः करेण गृह्णन्तं तथा पुरा पूर्वं स्मरस्य कामस्य प्लोषणं दहनमेव केलिः क्रीड़ा तं करोतीति तथोक्तं कामनिसूदनमित्यर्थः । महासुरस्त्रीविधवात्वहेतुमिति पाठे तथैवार्थः । अगृह्यमन्यैरित्यत्रासह्यमूलमिति पाठे असह्यं केनापि सोढुमशक्यं मूलं यस्य तथाभूतमित्यर्थः । पुरास्मरप्लोषण केलिकारमित्यत्र पुरासुरप्लोषण केलिकारमिति पाठे पुरासुराणां त्रिपुरवासिनामसुराणां प्लोषणकेलिकारं दहनकेलिकरमित्यर्थः ॥ १९ ॥

भद्रासनमिति । काञ्चनं सौवर्णं पादपीठं यस्य तथोक्तं महार्हाणां महामूल्यानां माणिक्यानां विभङ्गिभिः रचनाभिः चित्रं विचित्ररूपं भद्रं शुभमासनम् अधिष्ठितं तथा चन्द्रमरीचिगौरैः चन्द्रकिरणधवलैः चमरैः वालव्यजनैः गणाभ्याम् उभयपार्श्वयोः स्थिताभ्यामिति भावः उद्वीज्यमानं सेव्यमानमिति भावः ॥ २० ॥

शस्त्रास्त्रेति । शस्त्रास्त्रयोर्विद्यानाम् अभ्यसने शिक्षायाम् एका केवला आसक्तिरनुरागो यस्य तथाभूते अनवरतं शस्त्रविद्यां अस्त्रविद्याञ्च अभ्यस्यतीत्यर्थः सविस्मयैः असम्भवमेतत् षड्दिनजातस्यार्भकस्येति चमत्कृतैरित्यर्थः गणैः प्रमथवर्गैः एत्य उपेत्य सुदृष्टे सुनिरीक्षिते तथा स्फटिकाचलेन कैलासेन तदधिष्ठात्रेति भावः नीराज्यमाने दीपमालया सेव्यमाने इति यावत् कुमारे सानन्दं यथा तथा निर्दिष्टे निहिते दृशौ नेत्रे येन तादृशं सादरं कुमारं

तथाविधं शैलसुताधिनाथं
पुलोमपुत्रीदयितो निरीक्ष्य ।
आसीत् क्षणं क्षोभपरो नु कस्य
मनो न हि क्षुभ्यति धामधाम्नि ॥ २२ ॥

विकस्वराम्भोजवनश्रिया तं
दृशां सहस्रेण निरीक्ष्यमाणः ।
रोमालिभिः स्वर्गपतिर्बभासे
पुष्पोत्कराकीर्ण इवाम्रशाखी ॥ २३ ॥

दृष्ट्वा सहस्रेण दृशां महेशमभूत् कृतार्थोऽतितरां महेन्द्रः ।

पश्यन्तमित्यर्थः । नीराज्यमाने स्फटिकाचलेनेत्यत्र संवीज्यमानेऽम्बिकयाञ्चलेनेति पाठे अम्बिकया गौर्या अञ्चलेन वसनप्रान्तेन संवीज्यमाने वायुसञ्चालनेन सम्यक् सेव्यमाने इत्यर्थः ॥ २१ ॥

तथाविधमिति । पुलोमपुत्रीदयितः शचीपतिः तथाविधं पूर्वोक्तप्रकारं शैलसुताधिनाथं पार्वतीनाथं निरीक्ष्य क्षणं क्षोभपरः सम्भ्रान्तचित्त इत्यर्थः आसीत् तथाहि नु भोः धाम्नां तेजसां धाम्नि निलये कस्य जनस्य मनः न हि क्षुभ्यति ? न क्षोभं गच्छति ? अपि तु सर्वस्यैव मनः क्षोभः जायते इत्यर्थः ॥ २२ ॥

विकस्वरेति । स्वर्गपतिरिन्द्रः विकस्वरं प्रफुल्लं यत् अम्भोजवनं पद्मवनं तस्येव श्रीर्यस्य तथाभूतेन दृशां चक्षुषां सहस्रेण तम् ईश्वरं निरीक्ष्यमाणः पश्यन् पुष्पाणाम् उत्करेण समूहेन आकीर्णः आम्रशाखीव रसालतरुरिव रोमावलिभिः रोमाञ्चैः उपलक्षितः सन् बभासे शुशुभे । रोमालिभिः स्वर्गपतिर्बभासे इत्यत्र सर्वाङ्गनेत्रोद्युपतिर्बभासे इति पाठे सर्वेषु अङ्गेषु नेत्राणि यस्य तथाविधो द्युपतिः दिवस्पतिरिन्द्र इत्यर्थः ॥ २३ ॥

दृष्ट्वेति । महेन्द्रः दृशां चक्षुषां सहस्रेण महेशं दृष्ट्वा अतितराम्

सर्वाङ्गजातं तदथो विरूपमिव प्रियाकोपकरं विवेद ॥२४॥
ततः कुमारं कनकाद्रिसारं पुरन्दरः प्रेक्ष्य धृतास्त्रशस्त्रम् ।
महेश्वरीपान्तिकवर्त्तमानं शत्रोर्जयाशां मनसा बबन्ध ॥२५॥

श्रीनीलकण्ठ ! द्युपतिः पुरोऽस्ति
त्वयि प्रणामावसरं प्रतीच्छन् ।
सहस्रनेत्रेऽत्र भव त्रिनेत्र !
दृष्ट्या प्रसादप्रगुणो महेश ! ॥ २६ ॥

अतिशयेन कृतार्थः अभूत् अथो महेशदर्शनानन्तरं सर्वेषु अङ्गेषु जातम् उद्भूतं विरूपमिव विरुद्धरूपमिव अतएव प्रियायाः शच्याः कोपकरं मानजनकं तत् रोमहर्षणमितिशेषः विवेद जज्ञे । सपत्नीसम्बन्धात् रोमाञ्चोऽयमिति शङ्काकुलितत्वादिति भावः । कृतार्थोऽतितरां महेन्द्र इत्यत्र कृतार्थः खलु तेन शक्रः इति पाठे शक्र इन्द्रः तेन दृशां सहस्रेणेत्यर्थः ॥ २४ ॥

तत इति । ततः अनन्तरं पुरन्दर इन्द्रः कनकाद्रिसारं सुमेरुगिरितुल्यबलं धृतानि शिक्षितानि अस्त्राणि शस्त्राणि च येन तादृशं कुमारं महेश्वरस्य उपान्तिके समीपे वर्त्तमानं प्रेक्ष्य अवलोक्य मनसा शत्रोस्तारकस्य जयाशां जेष्यामि शत्रुमित्येवं रूपां प्रत्याशां बबन्ध धृतवान् ॥ २५ ॥

अथ युग्मेन देव मनुकूलयन्नाह श्रीति । हे श्रीनीलकण्ठ ! द्युपतिः देवराजः त्वयि प्रणामस्य अवसरं समयं प्रतीच्छन् प्राप्तुमिच्छन्नित्यर्थः पुरः अग्रतः अस्ति तिष्ठति हे त्रिनेत्र ! हे महेश ! अत्र सहस्रनेत्रे इन्द्रे दृष्ट्या दर्शनदानेनेत्यर्थः प्रसादप्रगुणः प्रसादप्रवणः प्रसन्न इत्यर्थः भव । प्रणामावसरं प्रतीच्छन्नित्यत्र प्रणामावसरस्य प्रच्छन्निति पाठान्तरम् । प्रसादप्रगुण इत्यत्र प्रसादप्रवण इति पाठान्तरम् ॥ २६ ॥

इति प्रबद्धाञ्जलिरेत्य नन्दी
निधाय कक्षामभि हेमवेत्रम् ।
प्रसादपात्रं पुरतो भविष्णु-
रथ स्मरारातिमुवाच वाचम् ॥ २७ ॥

पुरा सुरेन्द्रं सुरसङ्घसेव्यं
त्रिलोकसेव्यस्त्रिपुरासुरारिः ।
प्रीत्या सुधासारनिधारिणेव
ततोऽनुजग्राह विलोकनेन ॥ २८ ॥

किरीटकोटिच्युतपारिजातपुष्पोत्करेणानमितेन मूर्ध्ना ।
स्वर्गैकवन्द्यो जगदेकवन्द्यं तं देवदेवं प्रणनाम देवः ॥ २९ ॥

इतीति । अथ नन्दी हेमवेत्रं स्वर्णदण्डं कक्षाम् अभिप्रकोष्ठे निधाय प्रकर्षेण बद्धः कृतः अञ्जलिः येन तथाभूतः पुरतः एत्य आगत्य प्रसादपात्रं भविष्णुः सन् स्मराराति हरम् इति उक्तप्रकारां वाचम् उवाच ॥ २७ ॥

पुरेति । ततः नन्दिवाक्यानन्तरं त्रिलोकसेव्यः त्रिभुवनवन्द्यः त्रिपुरासुरारिः शम्भुः प्रीत्या स्नेहेन सुधानाम् आसारः धारासम्पातः धारासम्पात आसार इत्यमरः । तं निधारयति वर्षतीति तथोक्तेनेव विलोकनेन दर्शनेन सुरसङ्घसेव्यं सुरवृन्द वन्दनीयं सुरेन्द्रं पुरा प्राक् अनुजग्राह प्रथमं दृष्टिदानेनानुगृहीतवानित्यर्थः । पुरा सुरेन्द्रमित्यत्र सुदा सुरारिमिति पाठे सुदा हर्षेण असुराणाम् अरिं शत्रुमिन्द्रमित्यर्थः । त्रिलोकसेव्य इत्यत्र त्रैलोक्यसेव्य इति पाठान्तरम् । सुधासारनिधारिणेवेत्यत्र सुधासारविसारिणेवेति पाठे तथैवार्थः ॥ २८ ॥

किरीटेति । स्वर्गैकवन्द्यो देवः शचीपतिः जगतामेकवन्द्यं तं देवदेवम् आनमितेन अतएव किरीटस्य मुकुटस्य कोटिभ्यः अग्रेभ्यः च्युताः पतिताः पारिजातस्य पुष्पोत्कराः कुसुमचया यस्य तादृशेन

अनेकलोकैकनमस्क्रियार्हं
महेश्वरं तं त्रिदशेश्वरः सः ।
भक्त्या नमस्कृत्य कृतार्थतायाः
पात्रं पवित्रं परमं बभूव ॥ ३० ॥

सुभक्तिभाजामधि पादपीठं
प्रान्तक्षितिं नम्रतरैः शिरोभिः ।
ततः प्रणेमुः पुरतो गणानां
गणाः सुराणां क्रमतः पुरारिम् ॥ ३१ ॥

गणोपनीते प्रभुणोपदिष्टे
नृपासने हैममये पुरस्तात् ।

मूर्ध्ना शिरसा प्रणनाम । किरीटकोटिच्युतपारिजातपुष्पोत्करेणेत्यत्र किरीटकोटिच्युतपारिजातपुष्पेण भक्त्येति पाठान्तरम् । जगदेकवन्द्यमित्यत्र जगदेकदेवमिति पाठान्तरम् । तं देवदेवं प्रणनाम देव इत्यत्र ननाम देवः स सहस्रनेत्र इति पाठान्तरम् ॥ २९ ॥

अनेकेति । स त्रिदशानां देवानामीश्वरः अनेकलोकानां सर्वजगतामेक नमस्क्रियार्हम् एकवन्द्यं तं महेश्वरं भक्त्या नमस्कृत्य कृतार्थतायाः मनोरथसिद्धेः परमं पवित्रं पात्रभाजनं बभूव ॥ ३० ॥

सुभक्तीति । ततः इन्द्रप्रणामानन्तरं सुभक्तिभाजाम् अतिभक्तिमतां सुराणां गणाः गणानां प्रमथानां पुरतः अग्रतः पादपीठस्य चरणासनस्य प्रान्तक्षितिम् अन्तिकभूमिम् अधिकृत्येत्यर्थः नम्रतरैः अतिशयेनावनतैः शिरोभिः क्रमतः यथाक्रमं पुरारिं शम्भुं प्रणेमुः प्रणतवन्तः ॥ ३१ ॥

गणोपनीते इति । सुरेन्द्रः प्रभुणा हरेण उपदिष्टे निर्दिष्टे गणोपनीते प्रमथानीते हैममये सौवर्णे नृपासने पुरस्तात् प्रभुसमक्षमित्यर्थः उपविश्य प्रमदं प्रकृष्टम् आनन्दं प्राप, हि तथाहि प्रभु-

प्रापोपविश्य प्रमदं सुरेन्द्रः
प्रभुप्रसादो हि मुदे न कस्य ॥ ३२ ॥
क्रमेण चान्येऽपि विलोकनेन
सम्भाविताः सस्मितमीश्वरेण ।
उपाविशंस्तोषविशेषमाप्ता
दृग्गोचरे तस्य सुराः समग्राः ॥ ३३ ॥
अथाह देवो बलवैरिमुख्यान्
गीर्वाणवर्गान् करुणार्द्रचेताः ।
कृताञ्जलीकानसुराभिभूतान्
ध्वस्तश्रियः श्रान्तमुखानवेक्ष्य ॥ ३४ ॥

प्रसादः कस्य जनस्य मुदे आनन्दाय न ? सर्वस्यैवानन्दाय भवतीत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासालङ्कारः । प्रभुणोपदिष्ट इत्यत्र प्रभुणोपदिष्ट इति पाठे प्रभुणा हरेण उपदिष्टः इतो निषीदेति दत्ताभ्यनुज्ञ इत्यर्थः । नृपासने इत्यत्र शुभासने इति पाठान्तरम् । प्रमदमित्यत्र प्रमुदमिति पाठे तथैवार्थः ॥ ३२ ॥

क्रमेणेति । अन्येऽपि समग्राः सुराः ईश्वरेण सस्मितं विलोकनेन सम्भाविताः सम्मानिताः अतएव तोषविशेषं हर्षातिशयमाप्ताः सन्तः क्रमेण तस्य ईश्वरस्य दृग्गोचरे समक्षमित्यर्थः उपाविशन् । सुराः समग्रा इत्यत्र पुरः समेता इति पाठान्तरम् ॥ ३३ ॥

अथाहेति । अथ सर्वेषामुपवेशनानन्तरं देवः शङ्करः बलवैरी बलासुरशत्रुरिन्द्रः मुख्यः प्रधानं येषां तान् गीर्वाणवर्गान् देवगणान् कृताञ्जलीकान् असुरैरभिभूतान् निर्जितान् अतएव ध्वस्ता विलुप्ता श्रीः येषां तथाभूतान् तथा श्रान्तानि क्लान्तानि विषण्णानीत्यर्थः मुखानि येषां तथाविधान् अवेक्ष्य दृष्ट्वा करुणया कृपया आर्द्रं चेतः यस्य तथाभूतः सन् आह अब्रवीत् । गीर्वाणवर्गानित्यत्र गीर्वाण-

अहो बतानन्तपराक्रमाणां दिवौकसो ! वीरवरायुधानाम् ।
हिमोदविन्दुग्लपितस्य किं वः पद्मस्य दैन्यं दधति मुखानि ॥३५
स्वर्गौकसः ! स्वर्गपरिच्युताः किं स्वपुण्यराशौ सुमहत्तमेऽपि ।
चिह्नं चिरोढं न तु यूयमेते निजाधिपत्यस्य परित्यजध्वम् ॥३६

सुख्यानिति पाठे गीर्वाणमुख्यान् देवश्रेष्ठानित्यर्थः। असुराभिभूतान् ध्वस्तश्रियः श्रान्तसुखानित्यत्र असुरैर्विधूतान् ध्वस्तप्रियान् शीर्णसुखानिति पाठे असुरैः तारकादिभिः विधूतान् भ्रंशितान्। ध्वस्तानि विनष्टानि प्रियाणि स्वच्छन्दविहारादीनि येषां तान्। शीर्णानि क्षीणानि सुखानि येषां तथोक्तान् इति पर्य्यवसानम् ॥ ३४ ॥

अहो इति। अहो आश्चर्य्यम्। हे दिवौकसः देवाः ! वीरैर्व्रियन्ते काम्यन्ते इति वीरवराणि वीरैः स्पृहणीयानीत्यर्थः आयुधानि अस्त्राणि वज्रादीनीति यावत् येषां तादृशानाम् अतएव अनन्तपराक्रमाणाम् असीमसामर्थ्यानां वः युष्माकं सुखानि हिमोदविन्दुभिः शिशिरवारिविन्दुभिः ग्लपितस्य ग्लानिं नीतस्य पद्मस्य दैन्यं दौर्गत्यं किं कथं दधते धारयन्ति ? बत खेदे एवंरूपान् युष्मान् दृष्ट्वा खेदं गतोऽस्मीति भावः ॥ ३५ ॥

स्वर्गौकस इति। हे स्वर्गौकसः स्वर्गवासिनः ! स्वपुण्यराशौ निजपुण्यपुञ्जे सुमहत्तमेऽपि समधिकेऽपि अक्षयेऽपीत्यर्थः सति किं कथं स्वर्गात् परिच्युताः भ्रष्टाः ? यूयमिति शेषः तु किन्तु एते यूयं निजाधिपत्यस्य स्वपदस्य चिरोढं चिरमृढीतं चिह्नं छत्रचामरादिकं न परित्यजध्वं न परित्यजथ। चिह्नधारणेऽपि कथं पदभ्रंश इति भावः। न तु इत्यत्र बतेति पाठे एते यूयं चिरोढं निजाधिपत्यस्य चिह्नं परित्यजध्वं परित्यक्तवन्त इत्यर्थः अतीते लोटप्रयोग आत्मनेपदञ्च महाकविप्रयोगात् सोढव्यं बत खेदे एतद्दर्शनेन खेदमनुभवामीति भावः ॥ ३६ ॥

दिवौकसो ! देवगृहं विहाय मनुष्यसाधारणतामवाप्ताः ।
यूयं कुतः कारणतश्चरध्वं महीतले मानभृतो महान्तः ॥३७॥
अनन्यसाधारणसिद्धमुच्चैस्तद्दैवतं धाम निकामरम्यम् ।
कस्मादकस्मान्निरगाद्भवद्भ्यश्चिरार्जितं पुण्यमिवापचारात् ॥३८

दिवौकसो ! वो हृदयस्य कस्मात्
तथाविधं धैर्य्यमहार्य्यमार्य्याः ! ।
अगादगाधस्य जलाशयस्य
ग्रीष्मातितापादिवशादिवाम्भः ॥ ३९ ॥
सुराः ! सुराधीशपुरःसराणां
समीयुषां वः सममातुराणाम् ।

दिवौकस इति । हे दिवौकसः ! कुतः कारणतः कस्मात् हेतोः मानभृतः मानवन्तः महान्तः यूयं देवगृहं विहाय परित्यज्य मनुष्यसाधारणताम् अवाप्ताः सन्तः महीतले चरध्वं चरथ ? ॥ ३७ ॥

अनन्यसाधारणसिद्धमिति । अन्येषां साधारणं सत्सिद्धं न भवतीत्यनन्यसाधारणसिद्धं निकामरम्यम् अतिमनोहरं तत् उच्चैरुन्नतं चिरार्जितं दैवतं देवसम्बन्धि धाम स्थानं अपचारात् पापानुष्ठानात् पुण्यमिव भवद्भ्यः कस्मात् अकस्मात् सहसा निरगात् भ्रष्टमित्यर्थः ॥ ३८ ॥

दिवौकस इति । हे आर्य्या मान्या दिवौकसः ! वो युष्माकं तथाविधं अलोकसामान्यमिति यावत् अहार्य्यं हृदयस्य धैर्य्यम् अगाधस्य अतलस्पर्शस्य जलाशयस्य ग्रीष्मस्य अतितापादिवशात् अम्भ इव जलमिव कस्मात् अगात् विनष्टम् ? ॥ ३९ ॥

सुरा इति। हे सुराः ! सुराधीशः देवराजः पुरःसरो येषां तथोक्तानाम् अजय्यानामिति भावः समं युगवत् समीयुषां समागतानां

तद्ब्रूत लोकत्रयजित्वरात् किं
महासुरात्तारकतो विरुद्धम् ॥ ४० ॥
पराभवं तस्य महासुरस्य निषेद्धुमेकोऽहमलंभविष्णुः ।
दावानलप्लोषविपत्तिमन्यो महाम्बुदात् किं हरते वनानाम्॥४१
इतीरिते मन्मथमर्दनेन सुराः सुरेन्द्रप्रमुखा मुखेषु ।
सान्द्रप्रमोदाश्रुतरङ्गितेषु दधुः श्रियं सत्वरमाश्वसन्तः ॥४२॥
ततो गिरीशस्य गिरां विरामे जगाद लब्धेऽवसरे सुरेन्द्रः ।
भवन्ति वाचोऽवसरे प्रयुक्ता ध्रुवं फलाविष्टमहोदयाय ॥४३॥

आतुराणां विक्लवानां वः युष्माकं लोकत्रयस्य त्रिभुवनस्य जित्वरात् जेतुः महासुरात् तारकतः तारकात् विरुद्धं विरोधः किं? तत् ब्रूत कथयत ॥ ४० ॥

पराभवमिति। एकः केवलः अहं तस्य महासुरस्य पराभवं निषेद्धुं निवारयितुम् अलं भविष्णुः समर्थो भवामि । तथाहि महाम्बुदात् महामेघात् अन्यः अपरो जनः वनानां दावानलेन यः प्लोषः दाहः स एव विपत्तिः आपद् तां हरते किम्? हर्त्तुं शक्नोति किम्? नैवेत्यर्थः । प्रतिवस्तूपमालङ्कारः तदुक्तं प्रतिवस्तूपमा सा स्याद् वाक्ययोर्गम्यसाम्ययोः । एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगिति । महाम्बुदात् किं हरते वनानामित्यत्रारण्यस्य हर्त्तुं जलदात् प्रभुः किमिति पाठे जलदात् मेघादन्यः अरण्यस्य दावानलप्लोषविपत्तिं हर्त्तुं प्रभुः समर्थः किम्? नैवेत्यर्थः ॥ ४१ ॥

इतीति। मन्मथमर्दनेन कामशासनेन हरेण इति ईरिते कथिते सति सुरेन्द्रप्रमुखाः सुराः आश्वसन्तः आश्वासं लभमाना इत्यर्थः सान्द्रैः निविड़ैः प्रमोदाश्रुभिः हर्षवाष्पैस्तरङ्गितेषु आप्लुतेषु मुखेषु सत्वरं सद्यः श्रियं शोभाम् उल्लासमित्यर्थः दधुः धृतवन्तः ॥ ४२ ॥

तत इति। ततः अनन्तरं गिरीशस्य हरस्य गिरां वाचां

ज्ञानप्रदीपेन तमोपहेनाविनश्वरेणास्खलितप्रभेण ।
भूतं भवद्भावि च यच्च किञ्चित्सर्वज्ञ सर्वं तव गोचरं तत् ॥४४॥
दुर्वारदोरुद्यमदुःसहेन यत्तारकेणामरघस्मरेण ।
तदीशतामाप्नवता निरस्ता वयं दिवोऽमी वद किं न वेत्सि
॥ ४५ ॥

विरामे अवसाने लब्धे प्राप्ते अवसरे सुरेन्द्रः जगाद उक्तवान् । युक्तञ्चैतदित्याह अवसरे समये प्रयुक्ताः उक्ता वाचः फलाविष्टः फलपूर्णः यः महोदयः तस्मै ध्रुवं निश्चितं भवन्ति । फलं साधयन्ति खल्वित्यर्थः ॥ ४३ ॥

ज्ञानप्रदीपेनेति । हे सर्वज्ञ सर्वान्तर्यामिन् ! यत् किञ्चित् वस्तु भूतम् अतीतं भवत् वर्त्तमानं भावि भविष्यच्च, तत् सर्वं तमोपहेन मोहान्धकारध्वंसिना अविनश्वरेण अनन्तेन अस्खलिता अक्षीणा प्रभा यस्य तादृशेन ज्ञानप्रदीपेन तत्त्वज्ञानरूपालोकेन तव गोचरं विदितम् ॥ ४४ ॥

दुर्वारेति । दुर्वारेण निवारयितुमशक्येन दोष्णोर्बाह्वोरुद्यमेन बलविक्रमेणेत्यर्थः दुःसहः दुर्धर्षः तेन ईशतां त्रिलोकाधिपत्यम् आप्नवता प्राप्तेन अतएव अमराणां देवानां घस्मरेण भक्षकेण जेत्रेति भावः तारकेण अमी वयं दिवोऽपि स्वर्गादपि यत् निरस्ता निराकृताः, तत् किं न वेत्सि न जानासि वद अपितु जानास्येव सर्वज्ञत्वादिति भावः । दुर्वारदोरुद्यमदुःसहेनेत्यत्र दुर्वारदोर्दर्पदुःसहेनेति पाठे दुर्वारः यः दोष्णो दृप्तो मदः तेजः तेन दुःसहः तेन । तदीशतामाप्नवतेत्यत्र तदीश नत्वात्मपदादिति पाठे वदेत्यत्र वतेति च पाठे ननु सम्बोधने, ननु ईश ! अमी वयम् आत्मपदात् यत् निरस्ताः तत् किं न वेत्सि ? तव सर्वज्ञतया एतदु ज्ञाने अस्मदुपेक्षणं खेदकरमिति भावः ॥ ४५ ॥

विधेरमोघं स वरप्रसादमासाद्य सद्यस्त्रिजगज्जिगीषुः ।
सुरानशेषानहकप्रमुख्यान् दोर्दण्डचण्डो मनुते तृणाय ॥४६॥
स्तुत्वा पुरास्माभिरुपासितेन पितामहेनेति निरूपितं नः ।
सेनापतिः संयति दैत्यमेतं पुरः स्मराराति सुतो निहन्ति ॥४७॥
अहो ततोऽनन्तरमद्ययावत् सुदुःसहां तस्य पराभवार्त्तिम् ।
विषेहिरे हन्त हृदन्तशल्यमाज्ञानिवेशं त्रिदिवौकसोमी ॥४८॥

विधेरिति। स तारकः विधेः ब्रह्मणः सकाशात् अमोघम् अव्यर्थं वरप्रसादं प्रसन्नतया दत्तं वरमित्यर्थः आसाद्य प्राप्य सद्यः तत् त्रयं जगतां जिगीषुः जयाभिलाषी तथा दोष्णोर्बाह्वोर्दण्डेन प्रतापेन चण्डः अतितीक्ष्णः सन् अहं प्रमुखः प्रधानं येषां तथोक्तान् अहक-प्रमुख्यान् अशेषान् सर्वान् सुरान् तृणाय मनुते गणयति। स वर-प्रसादमित्यत्र सुवरप्रसादमिति पाठे सुवरप्रसादं शोभनं वरप्रसादमि-त्यर्थः। सुरानशेषानहकप्रमुख्यान् दोर्दण्डचण्ड इत्यत्र सुरान् स जम्भारिमुखान् प्रचण्डदोर्दण्डचण्ड इति पाठान्तरम् अर्थस्तु सुगम एव ॥ ४६ ॥

स्तुत्वेति। पुरा पूर्वम् अस्माभिः स्तुत्वा उपासितेन आराधितेन पितामहेन नः अस्माकम् इति निरूपितं निर्धारितं किं तदित्याह सेनापतिरिति स्मराराते: हरस्य सुतः संयति संग्रामे सेनापतिः सन् एतम् दैत्यं तारकं पुरा निहन्ति हनिष्यतीत्यर्थः निकटागामिके पुरेत्यमरः पुरा योगे भविष्यदर्थे लट्प्रयोगः ॥ ४७ ॥

अहो इति। अहो आश्चर्यं ततोऽनन्तरं ततः प्रभृति ब्रह्मणो वरदानादारभ्येति यावत् अद्य यावत् एतत्कालपर्यन्तम् अमी त्रि-दिवौकसः देवाः तस्य तारकस्य सुदुःसहां पराभवार्त्तिं पराजयपीड़ां तथा हृदन्तशल्यं हृदयान्तःशल्यरूपमित्यर्थः आज्ञानिवेशम् आज्ञादानं विषेहिरे सोढवन्तः। हन्तेति खेदसूचकम् एतत् तत्पीड़नमतिखेद-करमिति भावः ॥ ४८ ॥

निदाघधामक्लमविक्लवानां नवीनमम्भोदमिवौषधीनाम् ।
सुनन्दनं नन्दनमात्मनो नः सेनान्यमेतं स्वयमादिश त्वम् ॥४९॥

त्रैलोक्यलक्ष्मीहृदयैकशल्यं समूलमुत्खाय महासुरं तम् ।
अस्माकमेषां पुरतो भवन् सन् दुःखापहारं युधि यो विधत्ते
॥ ५० ॥

महाहवे नाथ ! तवास्य सूनोः शस्त्रैः शितैः कृत्तशिरोधराणाम् ।
महासुराणां रमणीविलापैर्दिशो दशैता मुखरीभवन्तु ॥५१॥

महारणक्षोणिपशूपहारीकृतेऽसुरे तत्र तवात्मजेन ।

निदाघेति । हे देव ! निदाघम् उष्णं धाम यस्य तस्य निदाघधाम्नः सूर्य्यस्य क्लमेन तापेन विक्लवानां क्लान्तानां शुष्कायामिति यावत् ओषधीनां लताविशेषाणाम् ओषध्यः फलपाकान्ता बहुपुष्पफलोपगा इति मनुः । नवीनम् अम्भोदमिव नः अस्माकं तापनिवृत्तये इति भावः आत्मनः स्वस्य सुनन्दनम् एतं नन्दनं कुमारं त्वं स्वयं सेनान्यं सेनापतिम् आदिश आज्ञापय ॥ ४९ ॥

त्रैलोक्येति । यः कुमारः एषामस्माकं पुरतः युधि अग्रगामी भवन् सेनापतिः भवन् सन्निति अर्थः त्रैलोक्यलक्ष्म्याः हृदयस्य एकमद्वितीयं शल्यं शल्यभूतं तं महासुरं समूलं यथा तथा उत्खाय उन्मूल्य दुःखापहारं तापशान्तिं विधत्ते करोति अविलम्बमेव विधास्यतीति वर्त्तमानसामीप्ये लट्प्रयोगः । एतं नन्दनमिति पूर्वेणान्वयः । भवन् सन्नित्यत्र भविष्णुरिति पाठान्तरम् ॥ ५० ॥

महाहवे इति । हे नाथ ! महाहवे महारणे अस्य तव सूनोः पुत्रस्य शितैः तीक्ष्णैः शस्त्रैः कृत्तशिरोधराणां छिन्नग्रीवाणां महासुराणां रमणीविलापैः एता दश दिशः मुखरीभवन्तु ध्वनिताः सन्तु ॥ ५१ ॥

महारणेति । तत्र असुरे तारके तव आत्मजेन सुतेन महती

वन्दिस्थितानां सुदृशां करोतु वेणिप्रमोचं सुरलोक एषः ॥५२॥
इत्थं सुरेन्द्रे वदति स्मरारिः सुरारिदुश्चेष्टितजातरोषः ।
कृतानुकम्पस्त्रिदशेषु तेषु भूयोऽपि भूताधिपतिर्बभाषे ॥५३॥
अहो अहो देवगणाः! सुरेन्द्रमुख्याः! शृणुध्वं वचनं ममेति ।
विचेष्टते शङ्कर एष देवः कार्य्याय सज्जो भवतां सुताद्यैः ॥५४॥
पुरा मयाकारि गिरीन्द्रपुत्त्र्याः प्रतिग्रहोऽयं नियतात्मनापि ।
तत्रैष हेतुः खलु तद्भवेन वीरेण यद्बध्यत एष शत्रुः ॥ ५५ ॥

या रणक्षौणी रणभूमिः तस्याः पशुवत् उपहारीकृते सति निहते सतीति भावः एष सुरलोकः देवगणः वन्दिस्थितानां बन्धनागारवर्त्तिनीनां सुदृशां सुराङ्गनानामिति यावत् वेणीप्रमोचं वेणीमोचनं करोतु । वेणीप्रमोचमित्यत्र वेणीप्रमोकमिति पाठे स एवार्थः ॥५२॥

इत्थमिति । सुरेन्द्रे इत्थं वदति सति स्मरारिः भूतानामधिपतिः सुरारेस्तारकस्य दुश्चेष्टितेन अत्याचारेण तच्छ्रवणेनेति भावः जातरोषः कुपित इत्यर्थः तथा तेषु त्रिदशेषु देवेषु कृतानुकम्पः सदयः सन् भूयोऽपि पुनरपि बभाषे उवाच ॥ ५३ ॥

अहो इति । अहो अहो इति सम्बोधनद्योतनकं हे सुरेन्द्रमुख्याः देवगणाः! एते यूयं मम वचनं शृणुध्वम् । एष शङ्करो देवः सुताद्यैः पुत्रादिभिः सार्द्धमित्यर्थः भवतां कार्य्याय सज्जः सन् विचेष्टते प्रवर्त्तते । अहं सान्वय एव भवतां कार्य्यार्थी विचरामीति भावः । देवः कार्य्यायेत्यत्र देवकार्य्यायेति भवतां सुताद्यैरित्यत्र सगणः शुभायेति पाठान्तरम् ॥ ५४ ॥

पुरेति । पुरा पूर्व्वं मया नियतात्मनापि वशिनापीत्यर्थः योगिनां दारपरिग्रहाकर्त्तव्यत्वेऽपीति भावः गिरीन्द्रपुत्त्र्याः गौर्य्याः अयं परिग्रहः स्वीकारः पाणिग्रहणमित्यर्थः अकारि कृतः तद्भवेन तस्यां जातेन वीरेण एष शत्रुस्तारकः यद् बध्यते, एष खलु एष एव तत्र गिरीन्द्रपुत्त्र्याः परिग्रहे हेतुः कारणम् । तत्रैष हेतुरित्यत्र तत्रैक-

अत्रोपपन्नं तदमी नियुज्य कुमारमेनं पृतनापतित्वे ।
निघ्नन्तु शत्रुं सुरलोकमेष भुनक्तु भूयोऽपि सुरैः सहेन्द्रः ॥५६॥
इत्युदीर्य भगवांस्तमात्मजं घोरसङ्गरमहोत्सवोत्सुकम् ।
नन्दनं हि जहि देवविद्विषं संयतीति निजगाद शङ्करः ॥५७॥
शासनं पशुपतेः स कुमारः स्वीचकार शिरसावनतेन ।
सर्वथैव पितृभक्तिरतानामेष एव परमः खलु धर्मः ॥ ५८ ॥

हेतुरिति पाठान्तरम् । यद्बध्यत इत्यत्र यद्बन्ध्यत इति पाठान्तरम् ॥ ५५ ॥

अत्रेति । अत्र विषये तत् युष्माकं मत्पुत्राभ्यर्थनमित्यर्थः उपपन्नं युक्तम् उचितमित्यर्थः अमी भवन्तः एनं कुमारं पृतनापतित्वे सैनापत्ये नियुज्य शत्रुं तारकं निघ्नन्तु नाशयन्तु । एष इन्द्रः सुरैः सह भूयोऽपि पुनरपि सुरलोकं स्वर्गं भुनक्तु पालयतु । तदमी इत्यत्र तदित इति पाठान्तरम् । निघ्नन्त्वित्यत्र निहन्त्विति पाठे एष सेनापतिः शत्रुं निहन्त्वित्यर्थः ॥ ५६ ॥

इतीति । भगवान् शङ्करः इति उदीर्य उक्त्वा घोरसङ्गरः महासंग्राम एव महोत्सवः तत्र उत्सुकं तं नन्दनम् आनन्दजनकम् आत्मजं कुमारं संयति युद्धे देवशत्रुं तारकं जहि नाशय इति निजगाद उवाच हिशब्दः पादपूरणार्थः । नन्दनं हि जहि देवविद्विषमित्यत्र नन्दने हि जय देवविद्विष इति पाठे हे नन्दन ! एहि आगच्छ देवविद्विषः देवशत्रून् जय इति निजगादेत्यन्वयः रथोद्धता वृत्तम् ॥ ५७ ॥

शासनमिति । सः कुमारः अवनतेन शिरसा पशुपतेः शासनम् आदेशं स्वीचकार जग्राह । तथाहि सर्वथैव सर्वेण प्रकारेण पितरि भक्तिमतां जनानाम् एष एव पित्राज्ञापालनमेव परमः महान् धर्मः खलु । शिरसावनतेनेत्यत्र शिरसा विनतेनेति पाठान्तरम् स्वागता वृत्तम् ॥ ५८ ॥

असुरयुद्धविधौ विबुधेश्वरे पशुपतौ वदतीति तमात्मजम् ।
गिरिजया मुमुदे सुतविक्रमे सति न नन्दति का खलु वीरसूः
॥ ५९ ॥

सुरपरिवृढः प्रौढं वीरं कुमारमुमापते-
र्बलवदमरारातिस्त्रीणां दृगञ्जनभञ्जनम् ।
जगदभयदं सद्यः प्राप्य प्रमोदपरोऽभवद्-
ध्रुवमभिमते पूर्णे को वा मुदा न हि माद्यति ॥६०॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
कुमारसेनापत्यवर्णनं नाम द्वादशः सर्गः ।

---

असुरेति । विबुधानां देवानामीश्वरे पशुपतौ असुरैः सह युद्ध-विधौ संग्रामव्यापारे आत्मजं पुत्रम् इति वदति नियुञ्जाने इत्यर्थः सति गिरिजया गौर्य्या मुमुदे हृष्टं तथाहि का वीरसूः वीरजननी सुतस्य विक्रमे तच्छ्रवणे इति यावत् सति न नन्दति न हृष्यति ? अपि तु सर्वैव नन्दतीत्यर्थः । पूर्वत्वात्र च सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः । वदतीति तमात्मजमित्यत्र वदति प्रियमात्मजमिति न नन्दति का खलु वीरसूरित्यत्र न किन्तु नन्दति संयति वीरसूरिति पाठान्तरम् द्रुतविलम्बितं वृत्तम् ॥ ५९ ॥

सुरेति । सुराणां परिवृढः प्रभुरिन्द्रः प्रौढं प्रकृष्टं वीरम् उमा-पतेः हरस्य कुमारं बलवताम् अमरारातीनाम् असुराणां याः स्त्रियः तासां दृशां नेत्राणाम् अञ्जनस्य कज्जलस्य भञ्जनं निराकरणमित्यर्थः असुरघातनमिति भावः अतएव जगताम् अभयदं परित्राणकरं प्राप्य सद्यस्तत्क्षणं प्रमोदपरः हर्षनिर्भरः अभवत् हि तथाहि अभिमते मनोरथे ध्रुवं निश्चयेन पूर्णे सति को वा जनः मुदा आनन्देन न

# त्रयोदशः सर्गः ।

प्रस्थानकालोचितचारुवेषः स स्वर्गिवर्गैरनुगम्यमानः ।
ततः कुमारः शिरसा नतेन त्रैलोक्यभर्तुः प्रणनाम पादौ ॥१॥
जहीन्द्रशत्रुं समरेऽमरेशपदं स्थिरत्वं नय वीर ! वत्स ! ।
इत्याशिषा तं प्रणमन्तमीशो मूर्धन्युपाघ्राय मुदाभ्यनन्दत् ॥२॥

माद्यति न उल्लसति ? सर्व एव माद्यतीत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । हरिणीवृत्तं, न समरसलागः षड्वेदैर्हयैर्हरिणीमतेति लक्षणात् ॥ ६० ॥

इति द्वादशः सर्गः ।

---

प्रस्थानेति । ततः अनन्तरं स कुमारः प्रस्थानं प्रयाणं युद्धयात्रेति यावत् तस्य काले उचितः चारुर्मनोहरः वेषः धनुःशरवर्मादिधारणरूप इति भावः यस्य तथाभूतः स्वर्गिणां देवानां वर्गैर्गणैः अनुगम्यमानः सन् नतेन शिरसा त्रैलोक्यस्य भर्तुः ईश्वरस्य पादौ प्रणनाम । अस्मिन् सर्गे उपजातिवृत्तम् ॥ १ ॥

जहीति । ईशः शम्भुः हे वत्स हे वीर ! समरे युद्धे इन्द्रस्य शत्रुं तारकं जहि नाशय, अमरेशस्य इन्द्रस्य पदम् इन्द्रत्वमित्यर्थः स्थिरत्वम् अक्षयत्वं नय प्रापय । इति इत्यम् आशिषा प्रणमन्तं तं सुतं मूर्द्धनि शिरसि उपाघ्राय मुदा हर्षेण अभ्यनन्दत् अभिनन्दयामास अन्तर्भूतण्यर्थोऽयं नन्दधातुः ॥ २ ॥

प्रह्वीभवन्नम्रतरेण मूर्ध्ना ननाम्र स मातुरङ्घ्रियुगं स्वमातुः ।
तस्याः प्रमोदाश्रुपयः प्रवृष्टिस्तस्याभवद्वीरवराभिषेकः ॥३॥

तमङ्कमारोप्य सुता हिमाद्रेराश्लिष्य गाढं सुतवत्सला सा ।
शिरस्युपाघ्राय जगाद शत्रुं जित्वा कृतार्थीकुरु वीरसूं माम् ॥४

उद्दामदैत्येशविपत्तिहेतुः
श्रद्धालुचेताः समरोत्सवस्य ।
आपृच्छ्य भक्त्या गिरिजागिरीशौ
ततः प्रतस्थेऽभि दिवं कुमारः ॥ ५ ॥

देवं महेशं गिरिजां च देवीं ततः प्रणम्य त्रिदिवौकसोऽपि ।

प्रह्वीभवन्निति । स कुमारः प्रह्वीभवन् नम्रः सन्नित्यर्थः नम्रतरेण अतिविनतेन मूर्ध्ना शिरसा मातुः जनन्या गौर्य्याः अङ्घ्रियुगं चरणयुगलं ननमस्कार । तस्याः मातुः प्रमोदाश्रुपयसाम् आनन्दवाष्पवारीणां प्रवृष्टिः प्रपूर इति पाठान्तरं प्रवाह इत्यर्थः तस्य कुमारस्य वीरवरस्य सेनापतेः सैनापत्यस्येत्यर्थः भावप्रधानो निर्देशः । अभिषेकः अभवत् ॥ ३ ॥

तमिति । सुतवत्सला सा हिमाद्रेः सुता पार्वती तं सुतम् अङ्कम् आरोप्य गाढम् आश्लिष्य आलिङ्ग्य शिरसि उपाघ्राय च जगाद उवाच हे वत्स ! शत्रुं जित्वा वीरसूं मां कृतार्थीकुरु अन्वर्थनाम्नीं कुरु । हिमाद्रेरित्यत्र महाद्रेरिति पाठान्तरम् ॥ ४ ॥

उद्दामेति । ततः पित्रोराशीर्वादानन्तरम् उद्दामस्य उद्धतस्य दैत्येशस्य तारकस्य विपत्तिहेतुः नाशकारणं तथा समरोत्सवस्य श्रद्धालु प्रियमिति यावत् चेतः यस्य तथाभूतः संग्रामोत्सवप्रिय इत्यर्थः कुमारः गिरिजागिरिशौ गौरीमहेश्वरौ भक्त्या आपृच्छ्य सम्भाष्य अभिदिवं स्वर्गम् अभिप्रतस्थे चचाल ॥ ५ ॥

देवमिति । ततः अनन्तरं नाकनाथः सुरपतिः पूर्वः प्रथमः येषां

प्रदक्षिणीकृत्य च नाकनाथपूर्वाः समस्तास्तमथानुजग्मुः ॥६॥
अथ व्रजद्भिस्त्रिदशैरशेषैः स्फुरत्प्रभाभासुरमण्डलैस्तैः ।
नभो बभासे परितो विकीर्णं दिवापि नक्षत्रगणैरिवोग्रैः ॥७॥
रराज तेषां व्रजतां सुराणां मध्ये कुमारोऽधिककान्तिकान्तः ।
नक्षत्रताराग्रहमण्डलानामिव त्रियामारमणो नभोऽन्ते ॥८॥
गिरीशगौरीतनयेन सार्धं पुलोमपुत्रीदयितादयस्ते ।
उत्तीर्य नक्षत्रपथं मुहूर्तात्प्रपेदिरे लोकमथात्मनीनम् ॥ ९ ॥

तथोक्ताः समस्ताः त्रिदिवौकस देवा अपि देवं महेशं देवीं गिरिजाञ्च प्रणम्य प्रदक्षिणीकृत्य च अथ अनन्तरं तं कुमारम् अनुजग्मुः अन्वगच्छन् ॥ ६ ॥

अथेति । अनन्तरं व्रजद्भिः गच्छद्भिः अशेषैः समस्तैः स्फुरद्भिः प्रभामण्डलैः कान्तिपुञ्जैः भासुराः उज्ज्वलाः तथोक्तैः तैः त्रिदशैः देवैः दिवापि दिवसेऽपि उग्रैः दीप्तैः नक्षत्रगणैरिव परितः समन्तात् विकीर्णं व्याप्तं नभः अन्तरीक्षं बभासे दिदीपे । उपमालङ्कारः ॥ ७ ॥

रराजेति । व्रजतां गच्छतां तेषां सुराणां मध्ये अधिकाभिः कान्तिभिः प्रभाभिः कान्तः समुज्ज्वलः कुमारः नभोऽन्ते गगनान्तरे नक्षत्रताराग्रहमण्डलानां मध्ये त्रियामारमण इव निशानाथ इव रराजे शुशुभे । त्रियामारमण इत्यत्र त्रियामादयित इति पाठान्तरम् । नभोऽन्ते इत्यत्र नभोऽन्तरिति पाठान्तरम् । उपमालङ्कारः ॥ ८ ॥

गिरीशेति । अथानन्तरं पुलोमपुत्रीदयितः शचीपतिरादिर्येषां तथोक्तास्ते देवाः गिरीशगौर्याः तनयेन कुमारेण सार्द्धं मुहूर्त्तात् क्षणात् नक्षत्रपथम् आकाशम् उत्तीर्य अतिक्रम्य आत्मनीनं स्वीयं लोकं स्वर्गमित्यर्थः प्रपेदिरे प्राप्ताः । लोकमथात्मनीनमित्यत्र लोकमथोत्तमीनामिति पाठान्तरम् ॥९॥

ते स्वर्गलोकं चिरकालदृष्टं महासुरत्रासवशंवदत्वात् ।
सद्यः प्रवेष्टुं न विषेहिरे तत्क्षणं व्यलम्बन्त सुराः समग्राः ॥१०
पुरो भव त्वं न पुरो भवामि नाहं पुरोगोऽस्मि पुरःसरस्त्वम् ।
इत्थं सुरास्तत् क्षणमेव भीताः स्वर्गं प्रवेष्टुं कलहं वितेनुः ॥११॥
सुरालयालोकनकौतुकेन मुदा शुचिस्मेरविलोचनास्ते ।
दधुः कुमारस्य मुखारविन्दे दृष्टिं द्विषत्साध्वसकातरान्ताम्
॥ १२ ॥

ते इति । ते समग्राः सुराः महासुराय यः त्रासः भयं तस्य वशंवदत्वात् अधीनत्वात् चिरकालात् बहुकालात् परं दृष्टं शत्रुणा अधिकृतत्वादिति भावः स्वर्गलोकं सद्यः सहसा प्रवेष्टुं न विषेहिरे न शेकुः, तत् तस्मात् क्षणं व्यलम्बन्त विलम्बं चक्रुः समग्रा इत्यत्र समस्ता इति पाठान्तरं पदार्थहेतुकं काव्यलिङ्गमलङ्कारः तदुक्तं हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यत इति ॥ १० ॥

पुर इति । सुराः देवा भीताः सन्तः तत्क्षण मेव त्वं पुरः अग्रतः भव गच्छेत्यर्थः न पुरः अग्रतः भवामि गच्छामि, अहं पुरोगः अग्रगामी नास्मि न भवामि त्वं पुरःसरः अग्रगामी इत्यम् अनेन प्रकारेण स्वर्गं प्रवेष्टुं कलहं विवादं परस्परमिति शेषः वितेनुः चक्रुः । सुरास्तत्क्षणमेव भीताः स्वर्गमित्यत्र द्विषा तेन कृते स्ववश्ये स्वर्गे इति पाठे तेन द्विषा शत्रुणा तारकेण स्वर्गे स्ववश्ये स्वाधीने कृते सतीत्यर्थः ॥ ११ ॥

सुरालयेति । ते देवाः सुरालयस्य स्वर्गस्य आलोकने दर्शने यत् कौतुकम् औत्सुक्यं बहुकालानधिकारेणादर्शनादिति भावः तेन हेतुना मुदा अधुना दर्शनं प्राप्यते इत्यानन्देनेति भावः । शुचिस्मेराणि विशुद्धविकासानीत्यर्थः विलोचनानि येषां तथाभूताः सन्तः कुमारस्य मुखारविन्दे द्विषद्भ्यः शत्रुभ्यः यत्साध्वसं भयं तेन कातरः

सहेलहासच्छुरिताननेन्दुस्ततः कुमारः पुरतो भविष्णुः ।
स तारकापातमपेक्षमाणो रणप्रवीरो हि सुरानवोचत् ॥१३॥
भीत्यालमद्य त्रिदिवौकसोऽमी स्वर्गं भवन्तः प्रविशन्तु सद्यः ।
अत्रैव मे दृक्पथमेतु शत्रुर्महासुरो वः खलु दृष्टपूर्वः ॥ १४॥
स्वर्लोकलक्ष्मीकचकर्षणाय दोर्मण्डलं वल्गति यस्य चण्डम् ।
इहैव तच्छोणितपानकेलिमङ्काय कुर्वन्तु शरा ममैते ॥ १५ ॥

अन्तः प्रान्तभागः यस्यास्तादृशीं दृष्टिं दधुः पातयामासुरित्यर्थः । अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । सुरालयालोकनकौतुकेन मुदा शुचिस्मेर विलोचनास्ते इत्यत्र सुरत्वरालोकनकौतुकेन मुदा शुचिस्मेर विलोचनस्येति पाठान्तरं द्विषत्साध्वसकातरान्तामित्यत्र द्विषत्साध्वसकातरास्ते इति पाठान्तरञ्च ॥ १२ ॥

सहेलेति । ततः अनन्तरं रणप्रवीरः सहेलेन सविलासेन हासेन छुरितः शोभितः आननमेव इन्दुश्चन्द्रो यस्य तथाभूतः स कुमारः पुरतः अग्रतः भविष्णुः अग्रगामी भवितुमिच्छुः तारकस्य आपातम् उपस्थितिम् अपेक्षमाणः सन् प्रतीक्षमाण इत्यर्थः सुरान् देवान् अवोचत् अब्रवीत् हि शब्दः पादपूरणार्थः ॥ १३ ॥

भीत्येति । भीत्या भयेन अलं भयं मा कुरुत, अमी त्रिदिवौकसः स्वर्गवासिनः भवन्तः सद्यः सत्वरं स्वर्गं प्रविशन्तु । वः युष्माकं दृष्टपूर्वः पूर्वदृष्टः शत्रुः महासुरस्तारकः अत्रैव अस्मिन्नेव स्थाने मे मम दृक्पथं नेत्रपथम् एतु आगच्छतु खलु । दृष्टपूर्व इत्यत्र कालदृष्ट इति पाठे कालेन दृष्टः अवलोकितः आसन्नकाल इत्यर्थः ॥ १४ ॥

स्वर्लोकेति । यस्य चण्डम् उग्रं दोर्मण्डलं बाहुमण्डलं स्वर्लोकस्य लक्ष्म्याः श्रियः कचानां केशानां कर्षणाय वल्गति चलति यः स्वर्गश्रियं जहारेति भावः । मम एते शराः इहैव अङ्काय झटिति तस्य शोणितपानं रक्तपानमेव केलिः क्रीड़ा तं कुर्वन्तु ॥ १५ ॥

शक्तिर्ममासावहतप्रचारा प्रभावसारा सुमहःप्रसारा ।
स्वर्लोकलक्ष्म्या विपदावहारेः शिरो हरन्ती दिशतान्मुदं वः
॥ १६ ॥

इत्यन्धकारातिसुतस्य दैत्यवधाय युद्धोत्सुकमानसस्य ।
सर्वं शुचिस्मेरमुखारविन्दं गीर्वाणवृन्दं वचसा ननन्द ॥१७॥

सान्द्रप्रमोदात्पुलकोपगूढः सर्वाङ्गसंफुल्लसहस्रनेत्रः ।
तस्योत्तरीयेण निजाम्बरेण निरुच्छनं चारु चकार शक्रः ॥१८॥

शक्तिरिति । असौ अहतः अव्याहतः प्रचारः गतिः यस्यास्तादृशी कुत्रचिदप्यस्खलितेति भावः प्रभावः सामर्थ्यं सारः स्थिरांशः यस्याः तथोक्ता सारो बले स्थिरांशे चेत्यमरः । सुष्ठु महसां तेजसां प्रसारः स्फुरणं यस्याः तथाभूता स्वर्लोकलक्ष्म्याः स्वर्गश्रियः विपदाम् आपदम् अवहन्तीति तथाविधा विपन्नाशिनीत्यर्थः शक्तिः अस्त्रविशेषः अरेः शत्रोः तारकस्य शिरः हरन्ती पातयन्ती सती वः युष्माकं मुदम् आनन्दं दिशतात् ददातु । विपदावहारेरित्यत्र विपदा सहारेरिति पाठे विपदा सह अरेः शिरः विपदम् अरिशिरश्चेत्यर्थः हरन्तीत्यन्वयः । दिशतान्मुदं दिशतां सुखमिति पाठान्तरम् ॥ १६ ॥

इतीति । सर्वं गीर्वाणवृन्दं देवगणः दैत्यवधाय युद्धोत्सुकं मानसं यस्य तथाभूतस्य अन्धकारिः शङ्करः तस्य सुतस्य इति एवं रूपेण वचसा शुचिस्मेराणि सुनिर्मलहसितानि मुखारविन्देषु यस्य तथाभूतं सत् ननन्द जहर्ष । युद्धोत्सवमानसस्येत्यत्र बद्धोत्सवमानसस्येति तथा शुचिस्मेरमुखारविन्दमित्यत्र सुविस्मेरमुखारविन्दमिति च पाठान्तरम् ॥ १७ ॥

सान्द्रेति । शक्रः इन्द्रः सान्द्रात् प्रमोदात् प्रहर्षात् पुलकेन रोमाञ्चेन उपगूढः व्याप्तशरीर इत्यर्थः सर्वेषु अङ्गेषु संफुल्लानि सहस्राणि नेत्राणि यस्य तथोक्तः सन् तस्य कुमारस्य उत्तरीयेण

घनप्रमोदाश्रुतरङ्गिताक्षैर्मुखैश्चतुर्भिः प्रचुरप्रसादैः ।
अथो अचुम्बद्विधिरादिवृद्धः षड़ाननं षट्सु शिरःसु चित्रम् ॥१९॥

तं साधु साध्वित्यभितः प्रशस्य मुदा कुमारं त्रिपुरासुरारेः ।
आनन्दयन्वीर! जयेति वाचा गन्धर्वविद्याधरसिद्धसङ्घाः ॥२०॥

दिव्यर्षयः शत्रुविजेष्यमाणं तमभ्यनन्दन् किल नारदाद्याः ।
निरुच्छनं चक्रुरथोत्तरीयैश्चामीकरीयैर्निजवल्कलैश्च ॥ २१ ॥

निजाम्बरेण निजवसनेन चारु मनोज्ञं यथा तथा निरुच्छनं वाससः परिवर्त्तनम् चकार । सान्द्रप्रमोदादित्यत्र सान्द्रप्रमोद इति सर्वाङ्गसंफुल्ल सहस्रनेत्र इत्यत्र सर्वाङ्गसंलग्नसहस्रनेत्र इति पाठान्तरम् ॥ १८ ॥

घनेति । अथो अनन्तरम् आदिवृद्धः वृद्धाग्रणीर्विधिः ब्रह्मा प्रचुरः समधिकः प्रसादः प्रसन्नता येषां तथोक्तः प्रसादस्तु प्रसन्नतेत्यमरः । घनेन सान्द्रेण प्रमोदेन प्रकृष्ट हर्षेण यानि अश्रूणि वाष्पाणि तैः तरङ्गितानि आप्लुतानि अक्षीणि नेत्राणि येषां तथाभूतैः चतुर्भिः मुखैः षड़ाननं कुमारं षट्सु शिरःसु आननेषु चित्रं मनोज्ञं यथा तथा अचुम्बत् । प्रचुरप्रसादैरित्यत्र प्रचुरप्रमोद इति अहो अचुम्बदित्यत्र क्रमाच्चुचुम्बे इति चित्रमित्यत्र हर्षादिति च पाठान्तरम् ॥ १९ ॥

तमिति । गन्धर्वविद्याधरसिद्धानां सङ्घाः गणाः मुदा हर्षेण तं त्रिपुरासुरारेः शम्भोः कुमारम् अभितः समन्ततः साधु साधु इति प्रशस्य हे वीर! जय इति वाचा आनन्दयन् हर्षयाञ्चक्रुः ॥ २० ॥

दिव्यर्षय इति । दिव्या ऋषयः नारदाद्याः शत्रुविजेष्यमाणं शत्रुं जेष्यन्तं तं कुमारम् अभ्यनन्दन् अभितः आनन्दयामासुः किल । अथ अभिनन्दनानन्तरम् चामीकरीयैः सौवर्णैः उत्तरीयैः कल्पतरूद्भवत्वादिति भावः निजवल्कलैः निरुच्छनं बन्धुतायै वासः परिवर्त्तनम् चक्रुश्च ॥ २१ ॥

ततः सराः शक्तिधरस्य तस्यावष्टम्भतः साध्वसमुत्सृजन्तः।
उत्सेहिरे स्वर्गमनन्तशक्तेर्गन्तुं वनं यूथपतेरिवेभाः॥ २२॥
अथाभिपृष्टं गिरिजासुतस्य पुरन्दरारातिवधं चिकीर्षोः।
सुरा निरीयुस्त्रिपुरं दिधक्षोरिव स्मरारेः प्रमथाः समन्तात्॥२३
सुराङ्गनानां जलकेलिभाजां प्रक्षालितैः सन्ततमङ्गरागैः।
प्रपेदिरे पिञ्जरवारिपूरां स्वर्गौकसः स्वर्गधुनीं पुरस्तात्॥२४॥
दिग्दन्तिनां वारिविहारभाजां
कराहतैर्भीमतरैस्तरङ्गैः।

तत इति। ततः अनन्तरं सुरा देवाः अनन्तशक्तेः असीमबलस्य तस्य शक्तिधरस्य कुमारस्य अवष्टम्भतः साहाय्यतः साध्वसं भयम् उत्सृजन्तः त्यजन्तः सन्तः यूथपतेर्गजेन्द्रस्य अवष्टम्भतः इभा हस्तिनः वनमिव स्वर्गं गन्तुम् उत्सेहिरे शेकुः। उपमालङ्कारः॥ २२॥

अथेति। अथ सुराः देवाः पुरन्दरस्य इन्द्रस्य अरिस्तारकः तस्य वधं चिकीर्षोः कर्तुमिच्छोः गिरिजासुतस्य कुमारस्य अभिपृष्ठं पश्चात् त्रिपुरं दिधक्षोः दग्धुमिच्छोः स्मरारेः हरस्य समन्तात् पश्चादिति यावत् प्रमथाः भूतगणाः इव निरीयुः निर्जग्मुः। अभिपृष्ठमित्यत्र अभिपृष्ठे इति पुरन्दरारातिवधमित्यत्र पुरन्दरारातिजयमिति पाठान्तरम्॥ २३॥

सुराङ्गनानामिति। स्वर्गौकसः सुराः पुरस्तात् अग्रतः प्रथममित्यर्थः जलकेलिभाजां जलेषु क्रीड़न्तीनां सुराङ्गनानां प्रक्षालितैः धौतैः अङ्गरागैः कुङ्कुमादिभिः सन्ततं सततं पिञ्जरः पीतः वारिपूरः जलप्रवाहः यस्याः तादृशीं स्वर्गधुनीं सुरनदीं मन्दाकिनीमित्यर्थः प्रपेदिरे प्रापुः॥ २४॥

इदानीं चतुर्भिः स्वर्गधुनीं विशिनष्टि दिग्दन्तिनामित्यादिभिः। वारिविहारभाजां जलक्रीड़ारतानां दिग्दन्तिनां दिग्गजानां करा-

आप्लावयन्तीं मुहुरालवाल-
श्रेणिं तरूणां निजतीरजानाम् ॥ २५ ॥
लीलारसाभिः सुरकन्यकाभिर्हिरण्मयीभिः सिकताभिरुच्चैः ।
माणिक्यगर्भाभिरुपाहिताभिः प्रकीर्णतीरां वरवेदिकाभिः २६
सौरभ्यलुब्धभ्रमरोपगीतैर्हिरण्यहंसावलिकेलिलोलैः ।
चामीकरीयैः कमलैर्विनिद्रैश्च्युतैः परागैः परिपिङ्गतोयाम् २७
कुतूहलाद्द्रष्टुमुपागताभि-
स्तीरस्थिताभिः सुरसुन्दरीभिः ।

च्छतैः गुण्डाद्गण्डप्रक्षिप्तैः भीमतरैः भीषणैः तरङ्गैः निजतीरजानां तरूणाम् आलवालश्रेणिं मूलदेशेषु जलाधारवेष्टनपङ्क्तिं मुहुः पुनः पुनः आप्लावयन्तीं पूरयन्तीम् ॥ २५ ॥

लीलेति । लीलायां क्रीड़ायां रसः अनुरागः यासां तथाभूताभिः क्रीड़न्तीभिरित्यर्थः सुरकन्यकाभिः हिरण्मयीभिः स्वर्णमयीभिः माणिक्यानि गर्भेषु अभ्यन्तरेषु यासां तथाविधाभिः माणिक्यरत्नखचिताभिरिति यावत् सिकताभिर्वालुकाभिः उपाहिताभिः कल्पिताभिः उच्चैः महतीभिः वरवेदिकाभिः उत्कृष्टवेदिभिः प्रकीर्णानि व्याप्तानि तीराणि यस्यास्तथोक्ताम् ॥ २६ ॥

सौरभ्येति । सौरभ्येण सौगन्ध्येन लुब्धा ये भ्रमराः तैः उपगीतैः मुखरितैः तथा हिरण्यहंसावलीनां सौवर्णहंसराजीनां केलिभिः क्रीड़ाभिः लोलैः चञ्चलैः चामीकरीयैः सौवर्णैः विनिद्रैः विकसितैः कमलैः पद्मैः च्युतैः निर्गलितैः परागैः रजोभिश्च तेषामिति शेषः परिपिङ्गानि परितः पिञ्जराणि तोयानि जलानि यस्या स्तथाभूताम् ॥ २७ ॥

कुतूहलादिति । कुतूहलात् कौतुकात् द्रष्टुम् उपागताभिः उपस्थिताभिः तीरस्थिताभिः सुरसुन्दरीभिः अभ्यूर्मिराजि ऊर्मिरा-

अभ्यूर्मिराजि प्रतिबिम्बिताभि-
र्मुदं दिशन्तीं व्रजतां जनानाम् ॥ २८ ॥

ननन्द सद्यश्चिरकालदृष्टां विलोक्य शक्रः सुरदीर्घिकां ताम् ।
अदर्शयत्सादरमद्रिपुत्रीमहेशपुत्राय ततः पुरोगः ॥ २९ ॥

स कार्तिकेयः पुरतः परीतः
सुरैः समस्तैः सुरनिम्नगां ताम् ।
अपूर्वदृष्टामवलोकमानः
सविस्मयः स्मेरविलोचनोऽभूत् ॥ ३० ॥

उपेत्य तां तत्र किरीटकोटिन्यस्ताञ्जलिर्भक्तिपरः कुमारः ।
गीर्वाणवृन्दैः प्रणुतां प्रणुत्य नम्रेण मूर्ध्ना मुदितो ववन्दे॥३१॥

र्मिषु विभक्त्यर्थे अव्ययीभावः । तरङ्गमालास्वित्यर्थः प्रतिबिम्बिताभिः सतीभिः करणैः व्रजतां गच्छतां जनानां दृष्टृणामिति भावः मुदम् आनन्दं दिशन्तीं जनयन्तीम् ॥ २८ ॥

ननन्देति । शक्र इन्द्रः चिरकालात् परं दृष्टां तां सुरदीर्घिकां देववापीं दृष्ट्वा सद्यः तत्क्षणं ननन्द जहर्ष । ततः स्वयं दर्शनानन्तरं पुरोगः अग्रगामी सन् अद्रिपुत्रीमहेशपुत्राय कुमाराय सादरम् अदर्शयत् तामिति शेषः ॥ २९ ॥

स इति । स कृत्तिकानाम् अपत्यं कार्त्तिकेयः तासां गर्भेषु धारणादिति भावः कुमारः समस्तैः सुरैः परीतः परिवृतः सन् पुरतः अग्रतः तां सुरनिम्नगाम् अदृष्टपूर्वां पूर्वमदृष्टाम् अवलोकमानः पश्यन् सविस्मयः तथा स्मेरे सोल्लासे विलोचने यस्य तथाभूतः अभूत् विस्मयं समुल्लासञ्च प्रापेति भावः ॥ ३० ॥

उपेत्येति । कुमारः तां गङ्गाम् उपेत्य प्राप्य तत्र गङ्गायां भक्तिपरः भक्तिमान् अतएव किरीटकोटिषु मुकुटाग्रेषु न्यस्तः अर्पितः अञ्जलिर्येन तथाभूतः तथा मुदितः हृष्टः सन् नम्रेण विन-

प्रणर्तितस्मेरसरोजराजिः पुरः परीरम्भमिलन्महोर्मिः ।
कपोलपालिश्रमवारिहारी भेजे गुहं तं सरितः समीरः ॥३२॥
ततो व्रजन्नन्दननामधेयं लीलावनं जम्भजितः पुरस्तात् ।
विभिन्नभग्नोद्धृतशालसङ्घं प्रेक्षाञ्चकार स्मरशत्रुसूनुः ॥३३॥

सुरद्विषोपप्लुतमेवमेत-
द्वनं बलस्य द्विषतो गतश्रि ।
इत्थं विचिन्त्यारुणलोचनोऽभूद्
भ्रूभङ्गदुष्प्रेक्ष्यमुखः स कोपात् ॥ ३४ ॥

तेन मूर्द्धा शिरसा गीर्वाणवृन्दैः देवगणैः प्रणुतां प्रशंसितां तां प्रणुत्य स्तुत्वा ववन्दे प्रणनाम ॥ ३१ ॥

प्रणर्त्तितेति । प्रणर्त्तिताः प्रकम्पिताः स्मेराः विकस्वराः सरोजानां पद्मानां राजयः समूहा येन एतेन सौगन्ध्योक्तिः । परीरम्भेण संश्लेषेण मिलन्त्यः महोर्मयः महातरङ्गा यस्य तथाभूतः एतेन शैत्योक्तिः । तथा कपोलपालिषु गण्डदेशेषु यानि श्रमवारीणि घर्मोदबिन्दवः तेषां हारी शमयितेत्यर्थः एतेन मान्द्योक्तिः एवंभूतः त्रिविधगुणयुक्त इत्यर्थः सरितः नद्याः समीरः मन्दाकिनीवायुः परितः अग्रतः स्थितमिति शेषः तं गुहं भेजे सिषेवे ॥ ३२ ॥

तत इति । ततः अनन्तरं स्मरशत्रोः हरस्य सूनुः कुमारः व्रजन् गच्छन् पुरस्तात् अग्रतः नन्दननामधेयं नन्दयतीति तथोक्तं नामधेयं यस्य तादृशं जम्भजितः जम्भासुरशत्रोः इन्द्रस्य लीलावनं क्रीड़ोद्यानं विभिन्नः चूर्णितः भग्नः खण्डितः उद्धृत उत्पाटितश्च शालसङ्घः शालतरुनिचयः यस्य तथाभूतं प्रेक्षाञ्चकार ददर्श ॥ ३३ ॥

सुरद्विषेति । स कुमारः बलस्य द्विषतः बलारातेः इन्द्रस्य एतत् वनं सुरद्विषा असुरेण एवम् उपप्लुतं विध्वस्तम् अतएव गता विनष्टा श्रीर्यस्य तथाभूतं जातमिति शेषः इत्थं विचिन्त्य कोपात् अरुणे

निर्लूनलीलोपवनामपश्यद् :सञ्चरीभूतविमानमार्गाम्।
विध्वस्तसौधप्रचयां कुमारो विश्वैकसाराममरावतीं सः ॥३५॥
गतश्रियं वैरिवराभिभूतां दशां सुदीनामभितो दधानाम्।
नारीमवीरामिव तामवेक्ष्य स बाढमन्तः करुणापरोऽभूत्॥३६
दुश्चेष्टिते देवरिपौ सरोषस्तस्याविषस्रः समराय चोत्कः।
तथाविधां तां स विवेश पश्यन् सुरैः सुराधीश्वरराजधानीम्
॥३७॥

रक्ते लोचने यस्य तथोक्तः तथा भ्रूभङ्गेन दुष्प्रेक्ष्यं दुर्दर्शं मुखं यस्य तादृशः अभूत् ॥ ३४ ॥

निर्लूनेति। स कुमारः निर्लूनं निःशेषेण छिन्नं लीलोपवनं क्रीड़ोद्यानं यस्यास्तां दुःसञ्चरीभूतः दुर्गम इत्यर्थः भयादिति भावः विमानमार्गः देवयानपथो यस्याः तादृशीं विध्वस्ता विपर्य्यासिता नाशिता इत्यर्थः सौधानां राजभवनानां सौधोऽस्त्री राजसदनमित्यमरः। प्रचयाः समूहा यस्यास्तथाविधां विश्वेषु त्रिभुवनेषु एकः अद्वितीयः सारः उत्कर्षः यस्यास्तादृशीम् अमरावतीम् अमराः सन्ति अस्यामिति अमरावतीं देवनगरीम् अपश्यत् ॥ ३५ ॥

गतश्रियमिति। स कुमारः गता श्रीः शोभा यस्या स्तां वैरिवरैः शत्रुश्रेष्ठैः अभिभूतां विध्वस्ताम् अभितः समन्तात् सुदीनां दशां दधानाम् अतएव अवीरां पतिपुत्रविहीनाम् अवीरा निष्पतिसुतेत्यमरः नारीमिव तां अमरावतीम् अवेक्ष्य दृष्ट्वा बाढम् अतिशयेन अन्तः करुणापरः कृपार्द्रचेता इत्यर्थः अभूत् ॥ ३६ ॥

दुश्चेष्टित इति। स कुमारः दुष्टं चेष्टितं यस्य तादृशे देवरिपौ तारके सरोषः सक्रोधः तथा तस्य समराय तेन सह समरं कर्त्तुमित्यर्थः उत्कः उत्सुकः तथा अविषस्रः निर्भीक इति यावत् सुरैः सार्द्धं तथाविधां तां सुराधीश्वरस्य देवेन्द्रस्य राजधानीम् अमरावतीं पश्यन् विवेश ॥ ३७ ॥

दैतेयदन्त्यावलिदन्तघातैः
क्षुण्णान्तराः स्फाटिकहर्म्यपङ्क्तीः ।
महाहिनिर्मोकपिनद्धजालाः
स वीक्ष्य तस्यां विषसाद सद्यः ॥ ३८ ॥

उत्कीर्णचामीकरपङ्कजानां दिग्दन्तिदानद्रवदूषितानाम् ।
हिरण्यहंसव्रजवर्जितानां विदीर्णवैदूर्यमहाशिलानाम् ॥३९॥
आविर्भवद्बालतृणाञ्चितानां तदीयलीलागृहदीर्घिकाणाम् ।
स दुर्दशां वीक्ष्य विरोधिजातां विषादवैलक्ष्यभरं बभार ॥४०॥

दैतेयेति । स कुमारः तस्याम् अमरावत्यां दैतेयानां दितिसुतानां दन्त्यावलयः हस्तिसङ्घाः तासां दन्तघातैः दशनप्रहारैः क्षुण्णं दलितम् अन्तरम् अवकाशो यासां ताः तथा महाहीनां महासर्पाणां निर्मोकैः परित्यक्तगात्रत्वग्भिः पिनद्धानि पूर्णानि जालानि गवाक्षाः यासां तथोक्ताः स्फाटिकहर्म्यपङ्क्तीः स्फटिकनिर्मितसौधनिचयान् वीक्ष्य सद्यः तत्क्षणं विषसाद अतिदुःखं प्रापेत्यर्थः ॥ ३८ ॥

उत्कीर्णेति । आविर्भवदिति च । उत्कीर्णानि उपरि विच्छिन्नानि चामीकरपङ्कजानि सौवर्णकमलानि यासां तथोक्तानां दिग्दन्तिनां दिग्गजानां दानद्रवेण मदजलक्षरणेन दूषितानां कलुषितानां हिरण्यैः सौवर्णैः हंसव्रजैः राजहंसचयैः वर्जितानां विहीनानां शत्रुभिर्नीतत्वादिति भावः । विदीर्णाः पाटिताः वैदूर्याणां मणिविशेषाणां महाशिलाः यासु तथाविधानाम् आविर्भवद्भिः जायमानैः बालतृणैः अञ्चितानां युक्तानां तदीयलीलागृहदीर्घिकाणाम् अमरावतीयक्रीड़ाभवनवापीनां विरोधिभिः शत्रुभिर्जातां दुर्दशां दुरवस्थां वीक्ष्य विषादस्य वैलक्ष्यं लज्जा च तयोर्भरमतिशयं बभार प्राप । युग्मकम् ॥ ३९ ॥ ४० ॥

तद्दन्तिदन्तक्षतहेमभित्ति
सुतन्तुजालाकुलरत्नजालम् ।
निन्ये सुरेन्द्रेण पुरोगतेन
स वैजयन्ताभिधमात्मसौधम् ॥ ४१ ॥

निर्दिष्टवर्त्मा विबुधेश्वरेण
सुरैः समग्रैरनुगम्यमानः ।
स प्राविशत्तं विविधाश्मरश्मि-
च्छिन्नेन सोपानपथेन सौधम् ॥ ४२ ॥

निसर्गकल्पद्रुमतोरणं तं स पारिजातप्रसवस्रगाढ्यम् ।
दिव्यैः कृतस्वस्त्ययनं मुनीन्द्रैरन्तःप्रविष्टप्रमदं प्रपेदे ॥ ४३ ॥

तद्दिति । पुरोगतेन अग्रगामिना सुरेन्द्रेण स कुमारः तस्य तारकस्य दन्तिनां दन्तैः क्षता दलिता हेमभित्तयः काञ्चन कुड्यानि यस्य तादृशं सुतन्तवः लूतानां शोभनसूत्राणि तेषां जालैः समूहैः आकुलानि व्याप्तानि रत्नजालानि मणिमयगवाक्षा यस्य तथोक्तं वैजयन्तम् अभिधा आख्या यस्य तथाविधम् आत्मनः स्वस्य सौधं प्रासादं निन्ये नीतः ॥ ४१ ॥

निर्दिष्टेति । सः कुमारः विबुधानां देवानाम् ईश्वरेण इन्द्रेण निर्दिष्टं प्रदर्शितं वर्त्म पन्था यस्य तथाभूतः तथा समग्रैः सुरैः देवैः अनुगम्यमानः सन् विविधानां विचित्राणां अश्मनां मणीनां रश्मिभिः किरणैः छिन्नेन छुरितेन सोपानपथेन अधिरोहणीमार्गेण तं सौधं राजसदनं प्राविशत् ॥ ४२ ॥

निसर्गेति । स कुमारः निसर्गेण स्वभावेन कल्पद्रुमा एव तोरणाः यस्य तथोक्तं पारिजातानां प्रसवस्रग्भिः पुष्पमालाभिः आढ्यं रञ्जितमित्यर्थः दिव्यैः मुनीन्द्रैः नारदादिभिः कृतं स्वस्त्ययनं मङ्गलपाठो

पादौ महर्षेः किल कश्यपस्य
कुलादिवृद्धस्य सुरासुराणाम्।
प्रदक्षिणीकृत्य कृताञ्जलिःसन्
षड्भिः शिरोभिः स नतैर्ववन्दे ॥ ४४ ॥

स देवमातुर्जगदेकवन्द्यौ
पादौ तथैव प्रणनाम कामम्।
मुनेः कलत्रस्य च तस्य भक्त्या
प्रह्वीभवन् शैलसुतातनूजः ॥ ४५ ॥

स कश्यपः सा जननी सुराणां तमेधयामासतुराशिषा द्वौ।
तया यया नैकजगज्जिगीषुं जेता मृधे तारकमुग्रवीर्यम् ॥४६॥

यस्मिन् तथोक्तम् अन्तः अभ्यन्तरे प्रविष्टाः कुमारदर्शनार्थमिति भावः प्रमदाः देवाङ्गना यस्य तादृशं तं सौधं प्रपेदे प्राप ॥ ४३ ॥

पादाविति। स कुमारः सुरासुराणां कुलस्य वंशस्य आदिवृद्धः स्रष्टेति यावत् तस्य कश्यपस्य महर्षेः पादौ प्रदक्षिणीकृत्य कृताञ्जलिः सन् षड्भिः नतैः शिरोभिः ववन्दे प्रणनाम ॥ ४४ ॥

स इति। स शैलसुतातनूजः पार्वतीनन्दनः देवानां मातुः तस्य मुनेः कश्यपस्य कलत्रस्य पत्न्याः अदितेरित्यर्थः जगताम् एकवन्द्यौ पादौ तथैव पूर्ववदेक भक्त्या प्रह्वीभवन् अवनतः सन् कामं सम्यक् प्रणनाम ॥ ४५ ॥

स इति। स कश्यपः सा च सुराणां जननी द्वौ यया मृधे युद्धे नैकजगतां त्रिजगतामित्यर्थः जिगीषुं जेतारम् उग्रवीर्यं तारकं जेता जेष्यति कुमार इति शेषः तया आशिषा आशीर्वादेन तं कुमारम् एधयामासतुः वर्द्धयाञ्चक्रतुः ॥ ४६ ॥

स्वदर्शनार्थं समुपेयुषीणां सुदेवतानामदितिश्रितानाम् ।
पादौ ववन्दे पतिदेवतास्तमाशीर्वचोभिः पुनरभ्यनन्दन्॥४७॥

पुलोमपुत्रीं विबुधाधिभर्तुस्ततः शचीं नाम कलत्रमेषः ।
नमश्चकार स्मरशत्रुसूनुस्तमाशिषा सा समुपाचरच्च ॥४८॥

अथादितीन्द्रप्रमदाः समेताः
ता मातरः सप्त घनप्रमोदाः ।
उपेत्य भक्त्या नमते महेश-
पुत्राय तस्मै ददुराशिषः प्राक् ॥ ४९ ॥

समेत्य सर्वेऽपि मुदं दधाना महेन्द्रमुख्यास्त्रिदिवौकसोऽथ ।
आनन्दकल्लोलितमानसं तं समभ्यषिञ्चन् पृतनाधिपत्ये ॥५०॥

स्वदर्शनेति । स कुमारः स्वस्य आत्मनः दर्शनार्थं समुपेयुषीणां समागतानाम् अदितिश्रितानाम् अदित्यनुगतानां सुदेवतानां प्रकृष्टदेवीनां पादौ ववन्दे । ताश्च पतिदेवताः पतिव्रताः पुनः तं कुमारम् आशीर्वचोभिः आशीर्वादैः अभ्यनन्दन् आनन्दयामासुः ॥ ४७ ॥

पुलोमेति । ततः अनन्तरञ्च एषः स्मरशत्रोः हरस्य सूनुः विबुधाधिभर्तुः देवेन्द्रस्य कलत्रं पत्नीं शचीं नाम पुलोमपुत्रीं नमश्चकार । सा च आशिषा तं कुमारं समुपाचरत् समवर्द्धयत् ॥४८॥

अथेति । अथानन्तरम् अदितीन्द्रस्य अदितिपतेः कश्यपस्य प्रमदाः अपराः पत्न्य इत्यर्थः दित्यादय इति भावः ताः प्रसिद्धाः सप्त मातरः ब्राह्मीप्रभृतयः घनप्रमोदाः अतीव हर्षान्विताः समेताः सङ्गताः सत्यः उपेत्य उपगम्य भक्त्या नमते तस्मै महेशस्य पुत्राय कुमाराय प्राक् पूर्वम् आशिषः आशीर्वादान् ददुः ॥ ४९ ॥

समेत्येति । अथानन्तरं मुदम् आनन्दं दधानाः सर्वे महेन्द्रमुख्याः इन्द्रादयः त्रिदिवौकसः देवाः आनन्देन कल्लोलितं तरङ्गितम्

सकलविबुधलोकः स्रस्तनिःशेषशोकः
कृतरिपुविजयाशः प्राप्तयुद्धावकाशः ।
अजनि हरसुतेनानन्तवीर्येण तेना-
खिलविबुधचमूनां प्राप्य लक्ष्मीमनूनाम् ॥ ५१ ॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
कुमारसैनापत्याभिषेको नाम
त्रयोदशः सर्गः ।

---

उच्छ्वसितमित्यर्थः मानसं यस्य तादृशं तं कुमारं पृतनापतित्वे सैनापत्ये समभ्यषिञ्चन् अभिषिक्तवन्तः ॥ ५० ॥

सकलेति । अनन्तवीर्य्येण असीमशक्तिना तेन हरसुतेन कुमारेण अखिलानां समस्तानां विबुधचमूनां देवसेनानाम् अनूनां सम्पूर्णां लक्ष्मीं श्रियं प्राप्य स्थितेनेति शेषः सेनापतिना सतेति भावः सकलविबुधलोकः समस्तदेवगणः कृता रिपोः तारकस्य विजयाशा येन तथाविधः तथा प्राप्तः युद्धाय अवकाशः अवसरः येन तथाभूतः अतएव स्रस्तः गतः निःशेषः शोकः शत्रुपराजयजनित इति भावः । यस्य तादृशः अजनि कृतः ॥ ५१ ॥

इति त्रयोदशः सर्गः ।

---

# चतुर्दशः सर्गः ।

रणोत्सुकेनान्धकशत्रुसूनुना समं प्रयुक्तैस्त्रिदशैर्जिगीषुणा ।
महासुरं तारकसंज्ञकं द्विषं प्रसह्य हन्तुं समनह्यत द्रुतम्॥१॥
स दुर्निवारं मनसोऽतिवेगिनं जयश्रियः सन्नयनं सुदुःसहम् ।
विजित्वरं नाम तदा महारथं धनुर्धरः शक्तिधरोऽध्यरोहत॥२

सुरालयश्रीविपदां निवारणं
सुरारिसम्पत्परितापकारणम् ।

रणोत्सुकेनेति । रणे संग्रामे उत्सुकः कौतुकी तेन जिगीषुणा जयार्थिना जयैषिणेति पाठे स एवार्थः । अन्धकशत्रोः शङ्करस्य सूनुना कुमारेण प्रयुक्तैः प्रवर्त्तितैः त्रिदशैः देवैः इन्द्रादिभिः समं युगपत् तारकसंज्ञकं तारकाख्यं महासुरं द्विषं शत्रुं प्रसह्य बलात् हन्तुं नाशयितुं द्रुतं शीघ्रं समनह्यत सन्नद्धम् उद्युक्तं भावे लङ् । सर्गेऽस्मिन् वंशस्थविलं वृत्तम् ॥ १ ॥

स इति । तदा तस्मिन् समये स कुमारः धनुर्धरः शक्तिर्नाम अस्त्रविशेषः तस्य धरतीति धरः सन् दुर्निवारं वारयितुमशक्यं मनसः अतिवेगिनं चित्तादपि अधिकवेगमित्यर्थः जयश्रियः जयलक्ष्म्याः संनयनं सम्यक् प्रापणं सुदुःसहं सोढुमशक्यवेगमिति भावः विजित्वरं विशेषेण जैत्रं जयसाधनमित्यर्थः नाम महारथं महान्तं स्यन्दनम् अध्यरोहत अधितष्ठौ । सन्नयनमित्यत्र सङ्गमनमिति पाठे स एवार्थः । अध्यरोहयदिति पाठे स्वार्थे णिजन्तप्रयोगः ॥ २ ॥

सुरालयेति । केनापि देवेनेति शेषः अस्य कुमारस्य शिरसीति शेषः सुरालयस्य स्वर्गस्य श्रीः तस्याः विपदां शत्रुकृतानामिति भावः

केनापि दध्रेऽस्य विरोधिदारणं
सुचारु चामीकरवर्मवारणम् ॥ ३ ॥

शरच्चरच्चन्द्रमरीचिपाण्डुरैः स वीज्यमानो वरचारुचामरैः ।
पुरःसरैः किन्नरसिद्धचारणै रणेच्छुरस्तूयत वाग्भिरुल्वणैः ॥४॥

प्रयाणकालोचितचारुवेषभृद्
वज्रं वहन् पर्वतपक्षदारणम् ।
ऐरावतं स्फाटिकशैलसोदरं
ततोऽधिरुह्य द्युपतिस्तमन्वगात् ॥ ५ ॥

निवारयतीति निवारणं विपन्नाशनं सुरारेः तारकस्य सम्पदः श्रियः परितापस्य नाशस्येति भावः कारणम् अतएव विरोधिनां शत्रूणां दारयतीति दारणं ध्वंसनं सुचारु सुन्दरं चामीकरघर्मवारणं सौवर्णमातपत्रं दध्रे धृतं विरागदारणमिति पाठे विरागस्य सन्तापस्य दारणं नाशनमित्यर्थः ॥ ३ ॥

शरच्चरदिति । शरदि चरन् उद्यन् यश्चन्द्रः तस्य मरीचय इव पाण्डुराः धवलाः तैः वरैः श्रेष्ठैः चारुभिःमनोज्ञैः चामरैः वीज्यमानः रणेच्छुः संग्रामार्थी स कुमारः पुरःसरैः अग्रगामिभिः किन्नरैः सिद्धैश्चारणैश्च देवयोनिविशेषैः उल्वणैः उच्चस्वरैरित्यर्थः सद्भिः वाग्भिः अस्तूयत स्तुतः । शरद्दलच्चन्द्र मरीचिरोचिभिरिति पाठे स एवार्थः ॥ ४ ॥

प्रयाणेति । ततः अनन्तरं दिवः पतिः द्युपतिरिन्द्रः प्रयाणकाले युद्धयात्रासमये उचितः यश्चारुर्मनोज्ञः वेशः तं बिभर्त्तीति तथोक्तः तथा पर्वतानां पक्षदारणं पक्षच्छिदं वज्रं वहन् स्फाटिकशैलस्य कैलासगिरेः सोदरं सदृशमित्यर्थः ऐरावतम् अधिरुह्य तं कुमारम् अन्वगात् अनुससार । अन्वगादित्यत्राभ्यगादिति पाठान्तरम् ॥ ५ ॥

तमन्वगच्छद्गिरिशृङ्गसोदरं
मदोद्धतं मेषमधिष्ठितः शिखी ।
विरोधिविद्वेषरुषाधिकं ज्वलन्
महोमहीयस्तरमायुधं दधत् ॥ ६ ॥

अथेन्द्रनीलाचलचण्डविग्रहं
विषाणविध्वस्तमहापयोधरम् ।
अधिष्ठितः कासरमुद्धरं मुदा
वैवस्वतो दण्डधरस्तमन्वगात् ॥ ७ ॥

तमिति । शिखी अग्निः गिरिशृङ्गसोदरं पर्वतशृङ्गसदृशं मदोद्धतं मेषं स्ववाहनम् अधिष्ठितः, विरोधिषु शत्रुषु यः विद्वेषः तेन या रुट् रोषः तया अधिकं ज्वलन् तथा महसा तेजसा महीयस्तरम् अतिमहत् आयुधम् अस्त्रम् आग्नेयमित्यर्थः दधत् दधानः सन् तं द्युपतिं कुमारं वा अन्वगच्छत् । मदोद्धतमित्यत्र मदोद्धुरमिति पाठे स एवार्थः । महोमहीयस्तरमायुधं दधदित्यत्र महामहौजस्तरसा युधे दधे इति पाठे युधे युद्धार्थं तरसा बलेन महामहौजः अतिमहत् तेजः दधे दधार चेत्यर्थः ॥ ६ ॥

अथेति । अथानन्तरं वैवस्वतः विवस्वतः सूर्यस्य अपत्यं पुमान् वैवस्वतः यमः इन्द्रनीलाचलः नीलगिरिः तद्वत् चण्डः भीषणः विग्रहो यस्य तादृशं विषाणाभ्यां शृङ्गाभ्यां विध्वस्ताश्चूर्णिताः महान्तः पयोधरा मेघा येन तथोक्तं उद्धुरम् उद्भटं कासरं महिषं लुलायो महिषोवाहद्विषत् कासर सैरिभा इत्यमरः । अधिष्ठितः आरूढ़ः तथा दण्डं स्वमस्त्रं तस्य धरः सन् तं कुमारम् अन्वगात् । नवेन्द्रनीलाचलचण्डविग्रहे विषाणविध्वस्तमहाशिलोच्चये स्थितोऽतिमत्ते महिषेऽतिभीषणो रणोत्सुको दण्डधरस्तमन्वगादिति पाठे नवेन्द्रनीलाचलवत् भीषणाकृतौ विषाणाभ्यां विध्वस्तचूर्णितः महान्

मदोद्धतं प्रेतमथाधिरूढवां-
स्तमन्धकद्वेषितनूजमन्वगात् ।
महासुरद्वेषविशेषभीषणः
सुरोषणश्चण्डरणाय नैर्ऋतः ॥ ८ ॥

नवोद्यदम्भोधरघोरदर्शने
युद्धाय रूढो मकरे महत्तरे ।
दुर्वारपाशो वरुणो रणोल्बण-
स्तमन्वियाय त्रिपुरान्तकात्मजम् ॥ ९ ॥

शिलोच्चयः पर्वतः येन तादृशे अतिमत्ते महिषे स्थितः अतुभीषणः प्राणान्तकः दण्डधरः यमः रणोत्सुकः सन् तं कुमारमन्वगादित्यन्वयः ॥ ७ ॥

मदोद्धतमिति । अथानन्तरं नैर्ऋतः राक्षसः दक्षिणपश्चिमकोणाधिपतिरिति यावत् महासुरे तारके यः द्वेषविशेषः तेन भीषणः भयङ्करः तथा सुरोषणः अतिक्रुद्धः मदोद्धतं प्रेतं कौणपं स्ववाहनमिति शेषः अधिष्ठितवान् आरूढ़ः सन् चण्डरणाय भीषणसंग्रामाय तम् अन्धकद्वेषितनूजं कुमारम् अन्वगात् । मदोद्धतः प्रेतवराधिरोहणस्तमन्धकद्वेषितनूजमभ्यगादिति पाठे मदोद्धतः मद्यपानेन उन्मत्तः तथा प्रेतवरं महाप्रेतम् अधिरोहतीति तथोक्तः । अभ्यगात् अनुससारेत्यर्थः ॥ ८ ॥

नवेति । नव उद्यन् उदयमानः यः अम्भोधरः मेघः तस्येव घोरं भीषणं दर्शनं यस्य तादृशे महत्तरे अतिमहति मकरे रूढ़ः दुर्वारः दुर्धर्षः पाशः अस्त्रं यस्य तथाविधः रणोल्बणः युद्धदुर्मदः वरुणः पश्चिमदिक्पाल इत्यर्थः युद्धाय तं त्रिपुरान्तकस्य शम्भोरात्मजं तनयम् अन्वियाय अनुससार । नवोदयस्तोयदघोरदर्शनं युधेऽधिरूढ़ो मकरं महत्तरमिति पाठे नव उदयो यस्य तथोक्तः युधे

दिगम्बराधिक्रमणोल्बणं क्षणा-
न्मृगं महीयांसमरुद्धविक्रमम्।
अधिष्ठितः सङ्गरकेलिलालसो
मरुन्महेशात्मजमन्वगाद् द्रुतम्॥ १०॥

विरोधिनां शोणितपारणैषिणीं
गदामनूनां नरवाहनो वहन्।
महाहवाम्भोधिविगाहनोद्यतं
यियासुमन्वागमदीशनन्दनम्॥ ११॥

युद्धाय तोरणवत् घोरं भीषणं दर्शनं यस्य तथाभूतं बहुत्तरं विशालं मकरमधिरूढ़ इत्यन्वयः। अन्यत् समानम्॥ ९॥

दिगम्बरेति। मरुत् वायुः पश्चिमोत्तरदिगधीश इत्यर्थः दिशाम् अम्बरस्य आकाशस्य च अधिक्रमणे आक्रमणे उल्वणम् उत्कटम् अरुद्धः दुर्वारः विक्रमो यस्य तथाभूतं महीयांसम् अतिमहान्तं मृगम् अधिष्ठितः सङ्गरः संग्राम एव केलिः क्रीड़ा तत्र लालसः उत्सुकः सन् क्षणात् महेशस्य आत्मजं कुमारं द्रुतम् अन्वगात् अनुससार। दिगम्बराद्रिक्रमणोल्बणमिति पाठे दिशाम् अम्बरस्य अद्रेः पर्वतस्य च क्रमणे आक्रमणे उल्वणः उद्भटः तम्। इत्यन्वयः॥१०॥

विरोधिनामिति। नरवाहनः कुवेरः पौलस्त्योनरवाहन इत्यमरः। विरोधिनां शत्रूणां शोणितपारणा रक्तपानम् इच्छतीति तथाभूताम् अनूनां महतीं गदां वहन् दधानः सन् महान् आहवः संग्राम एव अम्भोधिः समुद्रः तस्मिन् विगाहनाय उद्यतं यियासुं शत्रून् प्रतीति शेषः ईशनन्दनं कुमारम् अन्वागमत् अनुजगाम। नरवाहन इत्यस्य नरा वाहनानि यस्येति व्युत्पत्त्या तस्मात नरयानेनागमनं सूचितम्। अन्वागमदित्यत्राभ्यगमदिति पाठान्तरम्॥११॥

महाहिनिर्बद्धजटाकलापिनो
ज्वलत्त्रिशूलप्रबलायुधा युधे।
रुद्रास्तुषाराद्रिसखं महावृषं
ततोऽधिरूढास्तमयुः पिनाकिनः ॥ १२ ॥
अन्येऽपि सन्नह्य महारणोत्सव-
श्रद्धालवः स्वर्गिगणास्तमन्वयुः।
स्ववाहनानि प्रबलान्यधिष्ठिताः
प्रमोदविस्मेरमुखाम्बुजश्रियः ॥ १३ ॥
उद्दण्डहेमध्वजदण्डसङ्कुला-
स्वच्छविचित्रातपवारणोज्ज्वलाः।

महाहीति। ततः अनन्तरं महद्भिः अहिभिः भुजगैः निर्बद्धाः संयता ये जटाकलापाः ते सन्त्येषामिति तथोक्ताः ज्वलत् त्रिशूलमेव प्रबलं भीषणम् आयुधम् अस्त्रं येषां तथाभूताः पिनाकिनः पिनाकाख्यधनुष्पाणयः रुद्राः एकादशसंख्यका तदाख्यदेवाः तुषाराद्रिसखं हिमाद्रिसदृशं महावृषम् अधिरूढाः सन्तः युधे युद्धाय तं कुमारं अयुः अनुजग्मुरित्यर्थः। रुद्रा इत्यत्र रुषेति पाठे रुषा क्रोधेनेत्यर्थः। युधे इत्यत्र युधीति पाठे युधि युद्धे ॥ १२ ॥

अन्येऽपीति। अन्येऽपि स्वर्गिगणाः देवगणाः महान् रण एव उत्सवः आनन्दजनकव्यापारः तस्मिन् श्रद्धालवः अनुरागिण इत्यर्थः अतएव प्रमोदेन भाविसंग्रामोल्लासेन विस्मेरा विशेषेण स्फुरन्ती मुखाम्बुजानां वदनारविन्दानां श्रीर्येषां तथोक्ताः सन्नह्य समुद्यम्य प्रबलानि महान्ति स्ववाहनानि अधिष्ठिताः सन्तः तं कुमारम् अन्वयुः अनुयुयुः। प्रबलानीत्यत्र प्रवराणीति पाठान्तरम् ॥ १३ ॥

अथ युग्मेनाह उद्दण्डेति। ततः अनन्तरं स पिनाकपाणेर्हरस्य तनयः दिवौकसां देवानां महाचमूः महान्ति सैनिकानि अनु-

चलद्घनस्यन्दनघोषभीषणाः
करीन्द्रघण्टारवचण्डचीत्कृताः ॥ १४ ॥
स्फुरद्विचित्रायुधकान्तिमण्डलै-
रुद्द्योतिताशावलयाम्बरान्तराः ।
दिवौकसां सोऽनुवहन्महाचमूः
पिनाकपाणेस्तनयस्ततो ययौ ॥ १५ ॥
कोलाहलेनोच्चलतां दिवौकसां
महाचमूनां गुरुभिर्ध्वजव्रजैः
घनैर्निरुच्छासमभूदनन्तरं
दिङ्मण्डलं व्योमतलं महीतलम् ॥ १६ ॥

वहन् ययौ संग्राममिति शेषः। महाचमूर्विशिनष्टि उद्दण्डेत्यादिभिः षट्चरणैः। उद्दण्डैः उद्गतदण्डैः हेमध्वजदण्डैः सौवर्णध्वजयष्टिभिः सङ्कुलाः आकीर्णाः। चलद्भिः स्फुरद्भिः विचित्रैः विविधाकारैः आतपवारणैः आतपत्रैः उज्ज्वलाः उद्भासमानाः। चलतां गच्छतां घनानामिव स्यन्दनानां रथानां घोषेण निनादेन भीषणाः भयानकाः। करीन्द्राणां गजपतीनां घण्टारवेण चण्डानि श्रुतिकटूनि चीत्कृतानि कोलाहलानि यासां तास्तथोक्ताः। स्फुरद्भिः दीप्यमानैः विचित्राणां विविधानाम् आयुधानाम् अस्त्राणां कान्तिमण्डलैः प्रभापुञ्जैः उद्द्योतितम् उद्भासितम् आशावलं दिङ्मण्डलम् अम्बरान्तरं गगनावकाशश्च यासां तास्तथाविधाः। चलद्विचित्रातपवारणोज्ज्वला इत्यत्र चलद्विचित्रातपवारणोल्बणा इति पाठे तथैवार्थः। चलद्घनस्यन्दनघोषभीषणा इत्यत्र घनाघनाः स्यन्दनघोषभीषणा इति पाठान्तरम् ॥ १४ ॥ १५ ॥

कोलाहलेति। कोलाहलेन उच्चलतां दिवौकसां देवानां महाचमूनां महाभटानां गुरुभिर्महद्भिः घनैः सान्द्रैः ध्वजानां व्रजैः

सुरारिलक्ष्मीपरिकम्पहेतवो
दिक्‌ चक्रवालप्रतिनादमेदुराः ।
नभोऽन्तकुक्षिम्भरयो घनाः स्वना
निहन्यमानैः पटहैर्वितेनिरे ॥ १७ ॥

प्रमथ्यमानाम्बुधिगर्जितर्जनैः
सुरारिनारीगणगर्भपातनैः ।
नभश्चमूधूलिकुलैरिवाकुलं
ररास गाढं पटहप्रतिस्वनैः ॥ १८ ॥

समूहैः अनन्तरं निरवकाशं दिङ्मण्डलं व्योमतलम् आकाशं महीतलं भूतलञ्च निरुच्छ्वासं निरुद्धप्राणम् अभूत् प्रतीयमानोत्प्रेक्षा । अनन्तरमित्यत्र अनन्तरामिति पाठे अनन्तरामतिशयेनेत्यर्थः ॥ १६ ॥

सुरारीति । सुरारीणाम् असुराणां या लक्ष्मीः श्रीः तस्याः परिकम्पहेतवः चापल्यकारणानि दिक्‌चक्रवालेषु दिङ्मण्डलेषु प्रतिनादेन प्रतिध्वनिना मेदुराः स्निग्धाः पुष्टा इत्यर्थः नभोऽन्तकुक्षिम्भरयः गगनोदरव्यापिन इत्यर्थः घनाः सान्द्राः स्वनाः नादाः सेनाकलरवा इत्यर्थः निहन्यमानैः ताड्यमानैः पटहैः वाद्यभेदैः आनकः पटहोऽस्त्रीस्यादित्यमरः । वितेनिरे विस्तारिताः । घनाः स्वना इत्यत्र घनस्वना इति समस्तः पाठश्च दृश्यते ॥ १७ ॥

प्रमथ्यमानेति । नभः अन्तरीक्षं चमूनां सेनानां धूलिकुलैः रजःसङ्घातैः आकुलमिव प्रमथ्यमानस्य मन्दरेणालोड्यमानस्य अम्बुधेः समुद्रस्य गर्जिर्गर्जनं तस्य तर्जनैः जेतृभिः गर्जतर्जनैरित्यपि पाठः । सुरारीणां ये नारीगणाः तेषां गर्भपातनैः गर्भपातकरैः पटहानां रणवाद्यविशेषाणां प्रतिस्वनैः प्रतिनादैः गाढं ररास दध्वान । उत्प्रेक्षालङ्कारः । गर्जितर्जनैरित्यत्र गर्जितस्वनैरिति सुरारीत्यत्र वरारीति च पाठान्तरम् ॥ १८ ॥

क्षुण्णं रथैर्वाजिभिराहतं खुरैः
करीन्द्रकर्णैः परितः प्रसारितम् ।
धुतं ध्वजैः काञ्चनशैलजं रजो
वातैर्हृतं व्योम समारुहत् क्रमात् ॥ १९ ॥

खातं खुरै रथ्यतुरङ्गपुङ्गवै-
रुपत्यकाहाटकमेदिनीरजः ।
गतं दिगन्तान् सुखरैः समीरणैः
सुविभ्रमं भूरि बभार भूयसा ॥ २० ॥

अधस्तथोर्ध्वं पुरतोऽथ पृष्ठतो-
ऽभितोऽपि चामीकररेणुरुच्चकैः ।

क्षुण्णमिति । काञ्चनशैलः सुमेरुः तस्मात् जायत इति तथोक्तं रजः रथैः क्षुण्णं चूर्णितं वाजिभिः अश्वैः खुरैः आहतं कुट्टितं करीन्द्राणां गजपतीनां कर्णैः परितः समन्तात् प्रसारितं विस्तारितं ध्वजैः धुतं कम्पितं तथा वातैः वायुभिः हृतं चालितं सत् क्रमात् व्योम आकाशं समारुहत् आचक्राम । समारुहदित्यत्र ययार तदिति पाठान्तरम् ॥ १९ ॥

खातमिति । रथ्या रथयोजिता ये तुरङ्गपुङ्गवाः महाश्वाः तैः खुरैः खातं दलितम् उपत्यका पर्वतासन्ना या हाटकमेदिनी काञ्चनभूमिः तस्या रजः सुखरैः शब्दायमानैः समीरणैः वायुभिः दिगन्तान् गतं प्रसारितम् अतएव भूरि बहुलं सत् भूयसा बाहुल्येन सुविभ्रमं सुष्ठु भ्रान्तिं बभार दधार । उपत्यकाहाटकमेदिनीरज इत्यत्र उपत्यकानां कनकस्थलीरज इति पाठान्तरम् । सुखरैरित्यत्र प्रखरैरिति पाठान्तरम् । सुविभ्रममित्यत्र दाहभ्रममिति पाठान्तरम् ॥ २० ॥

अध इति । उच्चकैर्महान् चामीकररेणुः मरुता वायुना आहतः चालितः सन् चमूषु सेनासु अधः ऊर्द्ध्वं पुरतः अग्रतः

चमूषु सर्पन्मरुदाहतोऽहरत्
नवीनसूर्यस्य च कान्तिवैभवम् ॥ २१ ॥

बलोद्धृतं काञ्चनभूमिजं रजो
बभौ दिगन्तेषु नभस्तले स्थितम् ।
अकालसन्ध्याघनरागपिङ्गलं
घनं घनानामिव वृन्दमुद्यतम् ॥ २२ ॥

हैमावनीषु प्रतिबिम्बमात्मनो
मुहुर्विलोक्याभिमुखं महागजाः ।
रसातलोत्तीर्णगजभ्रमात् क्रुधा
दन्तप्रकाण्डप्रहृतानि तेनिरे ॥ २३ ॥

पुष्टतः तथा अभितः समन्तात् सर्पन् विस्तारं गच्छन् नवीनसूर्यस्य नवोदितस्य ताम्रवर्णस्येति भावः सूर्यस्य कान्तिवैभवं शोभासम्पदम् अहरत् जहार । नवीनसूर्यस्य च कान्तिवैभवमित्यत्र तत्कालबाला-तपवैभवमिति पाठान्तरम् । निदर्शनालङ्कारः । तदुक्तं दर्पणे । सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शनेति ॥ २१ ॥

बलोद्धृतमिति । बलैः देवसैन्यैः उद्धृतं काञ्चनभूमिजं सौवर्णक्षि-तिजं रजः नभस आकाशस्य तले दिगन्तेषु दिशामन्तेषु प्रान्तभागेषु स्थितं सत् अकाले असमये या सन्ध्या तस्याः घनेन गाढ़ेन रागेण लौहित्येन पिङ्गलं पिञ्जरं घनं सान्द्रम् उद्यतम् उत्थितं घनानां मेघानां वृन्दमिव सङ्घातमिव बभौ रराज । पिङ्गलमित्यत्र पिञ्जित-मिति पाठान्तरम् । उपमालङ्कारः ॥ २२ ॥

हैमावनीष्विति । महागजाः सेनाकरीन्द्राः हैमावनीषु काञ्चन-भूमिषु अभिमुखं सम्मुखपतितम् आत्मनः स्वस्य प्रतिबिम्बं प्रतिकृतिं विलोक्य दृष्ट्वा रसातलात् पातालात् उत्तीर्णाः उत्थिताः गजाः तेषां

सुजातसिन्दूरपरागपिञ्जरैः
कलं चलद्भिः सुरसैन्यसिन्धुरैः ।
शुद्धासु चामीकरशैलभूमिषु
नादृश्यत स्वं प्रतिबिम्बमग्रतः ॥ २४ ॥

इति क्रमेणामरराजवाहिनी
महाहवाम्भोधिविलासलालसा ।
अवातरत्काञ्चनशैलतो द्रुतं
कोलाहलाक्रान्तविधूतकन्दरा ॥ २५ ॥

भ्रमात् भ्रान्त्या क्रुधा कोपेन सद्भः पुनः पुनः दन्तैः प्रकाण्डं प्रशस्तम् उत्कटमित्यर्थः यथा तथा प्रहृतानि प्रहारान् तेषु प्रतिबिम्बेष्विति शेषः मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ । प्रशस्तवाचकान्यमूनीत्यमरः तेनिरे विस्तारयामासुः चक्रुरित्यर्थः । भ्रमात् क्रुधेत्यत्र भ्रमेण ते इति दन्तप्रकाण्डप्रहृतानीत्यत्र दन्तप्रकाण्डप्रहृतानीति पाठान्तरम् । भ्रान्तिमानलङ्कारः तदुक्तं दर्पणे । साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितेति ॥ २३ ॥

सुजातेति । सुजातेन शोभनेन सिन्दूरपरागेण रक्तचूर्णकविशेषरजसा सिन्दूरस्तरुभेदे स्यात् सिन्दूरे रक्तचूर्णके इति मेदिनी । पिञ्जराः पीतरक्ताः तैः कलं मन्दं चलद्भिः गच्छद्भिः सुरसैन्यसिन्धुरैः देवसेनागजैः शुद्धासु निर्मलासु चामीकरशैलभूमिषु सुमेरुगिरिभूमिषु अग्रतः समक्षं स्वं प्रतिबिम्बं पतितमिति शेषः न अदृश्यत न दृष्टं तुल्यवर्णत्वेनाधाराधेययोः पृथगनवभासमानत्वादिति भावः । नादृश्यतेत्यत्र व्यदृश्यतेति पाठान्तरम् ॥ २४ ॥

इतीति । महाहवः महारण एव अम्भोधिः समुद्रः तस्य विलासे व्यापारे लालसा समुत्सुका अमरराजवाहिनी देवराजसेना इति इत्थं क्रमेण कोलाहलेन आक्रान्ता अभिभूता विधूता कम्पिता

महाचमूस्यन्दनचण्डचीत्कृतै-
र्विलोलघण्टेभपतेश्च बृंहितैः ।
सुरेन्द्रशैलेन्द्रमहागुहाशयाः
सिंहा महत् स्वप्नसुखं न तत्यजुः ॥ २६ ॥

गम्भीरभेरीध्वनितैर्भयङ्करै-
र्महागुहान्तप्रतिनादमेदुरैः ।
महारथानां गुरुनेमिनिःस्वनै-
रनाकुलैस्तैर्मृगराजताजनि ॥ २७ ॥

कन्दरा सुमेरुगुहा यया तथाभूता सती द्रुतं सत्वरं काञ्चनशैलतः सुमेरुपर्वतात् अवातरत् । महाहवाम्भोधिविलासलालसेत्यत्र महाहवारम्भविलासलालसेति कोलाहलाक्रान्तविधूतकन्दरेत्यत्र कोलाहलाहत्तिविभूतकन्दरेति च पाठान्तरम् ॥ २५ ॥

महेति । सुरेन्द्रस्य देवराजस्य यः शैलेन्द्रः सुमेरुरित्यर्थः तस्य महत्यः गुहाः गह्वराणि तासु शेरते इति तथोक्ताः सिंहाः महाचमूनां महासेनानां ये स्यन्दनाः रथाः तेषां चण्डानि कठोराणि यानि चीत्कृतानि रवविशेषाः तैः विलोलाश्चञ्चला घण्टा यत्र तस्य इभपतेः गजराजस्य ऐरावतस्येति यावत् बृंहितैश्च महत् अत्यन्तं स्वप्नसुखं निद्रासुखं न तत्यजुः । महासत्त्वा न केनापि विचलन्तीति भावः । महाचमूस्यन्दन चण्डचीत्कृतैरित्यत्र महाचमूनां करिचण्डचीत्कृतैरिति विलोलघण्टेभपतेश्च बृंहितैरित्यत्र विलोलघण्टाकणितोपबृंहितैरिति महत् स्वप्नसुखमित्यत्र महास्वप्नसुखमिति च पाठान्तरम् । अत्र निद्राभङ्गकारणे सत्यपि तदभावात् विशेषोक्तिरलङ्कारः । तदुक्तं दर्पणे । सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधेति ॥ २६ ॥

गम्भीरेति । महत्यः या गुहाः तासाम् अन्तः अभ्यन्तरे प्रतिनादेन प्रतिध्वनिना मेदुरैः परिपुष्टैः गम्भीराभिर्भेरीभिर्वाद्यभेदैः

समुत्थितेन त्रिदिवौकसां महा-
चमूरवेणाद्रितटान्तदारिणा।
प्रपेदिरे केसरिणोऽधिकं मदं
स्ववीर्यलक्ष्मीमृगराजतावशात् ॥ २८ ॥
भिया सुरानीकविमर्दजन्मना
विदुद्रुवुर्दूरतरं द्रुतं मृगाः।
गुहागृहान्ताद्बहिरेत्य हेलया
तस्थुर्विशङ्कं नितरां मृगाधिपाः ॥ २९ ॥

ध्वनितैः पूरितैरिति शेषः अतएव भयङ्करैः महारथानां महतां स्यन्दनानां गुरुभिर्महद्भिः नेमिनिस्वनैः चक्रप्रान्तध्वनिभिः अपिरत्ना-ध्याहार्य्यः अनाकुलैः अव्यथितैः तैः सिंहैः मृगराजता मृगाधिपतित्वम् अजनि जनिता अन्वर्थेति भावः। शत्रुभ्यः सकाशादभीतिरेव महासत्त्वानां राज्ञां स्वभाव इति भावः। अत्रापि भयहेतौ सत्यपि भयानुत्पत्तेर्विशेषोक्तिरलङ्कारः ॥ २७ ॥

समुत्थितेनेति। त्रिदिवौकसां देवानाम् अद्रितटान्तदारिणा पर्वततटप्रदेशविदारकेण समुत्थितेन समुद्गतेन महाचमूनां रवेण कोलाहलेन केशरिणः सिंहाः स्वस्य वीर्य्यं पराक्रमः तस्य श्रीः शोभा यत्र तादृशी या मृगराजता मृगाधिपतित्वं तद्वशात् तद्धेतोः अधिकं मदं गर्वं प्रपेदिरे प्रापुः गर्ववशात् भयं न चक्रुरिति भावः। समुत्थितेनेत्यत्र समुच्छ्रितेनेति महाचमूरवेणेत्यत्र चमूरवेण तेनेति च पाठान्तरम् ॥ २८ ॥

भयेति। मृगाः हरिणादयः सुरानीकानां देवसेनानां विमर्दः सङ्घर्षः तेन जन्म यस्याः तथाभूतया भिया भयेन हेतुना द्रुतं शीघ्रं दूरतरम् अतिदूरं विदुद्रुवुः पलायाञ्चक्रुः। मृगाधिपाः सिंहा गुहा एव गृहं तस्य अन्तात् मध्यात् हेलया अवलीलया बहिः वहि-

विलोकिताः कौतुकिनामरावती-
जनेन जुष्टप्रमदेन दूरतः ।
सुराचलप्रान्तभुवः प्रपेदिरे
सुविस्तृतायाः प्रसरं सुसैनिकाः ॥ ३० ॥

पीतासितारक्तसितैः सुराचल-
प्रान्तस्थितैर्धातुरजोभिरम्बरम् ।
अयत्नगन्धर्वपुरोदयभ्रमं
बभार भूम्नोत्पतितैरितस्ततः ॥ ३१ ॥

देशे एत्य आगत्य नितराम् अत्यर्थं निःशङ्कं निर्भयं यथा तथा तस्थुः । गुहागृहान्ताद् बहिरेत्येत्यत्र गुहागृहान्तानभिसृत्येति पाठे गुहागृहस्य अन्तान् उपरिभागान् अभिसृत्य आगत्येत्यर्थः । विशङ्कं नितरामित्यत्र विनिःशङ्कतरा इति पाठान्तरम् ॥ २९ ॥

विलोकिता इति । सुसैनिकाः शोभनाः सेनाः कौतुकिना दर्शनौत्सुक्यवता जुष्टः सेवितः प्रमदः प्रकृष्टानन्दः येन तथाभूतेन सानन्देनेत्यर्थः अमरावतीजनेन दिव्यजनेनेत्यर्थः दूरतः दूरात् विलोकिताः दृष्टाः सत्यः सुविस्तृतायाः विशालायाः सुराचलस्य सुमेरोः प्रान्तभुवः पर्य्यन्तभूमेः प्रसरं प्रदेशं प्रपेदिरे प्रापुः । अन्ये तु द्वितीयार्द्धं सुराचलप्रान्तभुवि प्रपेदिरे सुविस्तृतायां प्रसरं न सैनिका इति पठन्ति । अस्यार्थः सुराचलस्य सुविस्तृतायां सुराचलप्रान्तभुवि प्रसरं स्थानमित्यर्थः न प्रपेदिरे न प्रापुः सैनिकानामति प्रभूतत्वादिति भावः ॥ ३० ॥

पीतेति । अम्बरम् आकाशं पीतानि असितानि कृष्णानि आरक्तानि सितानि शुभ्राणि च तैः सुराचलस्य सुमेरोः प्रान्तस्थितैः उपरिवर्त्तिभिः धातूनां गैरिकादीनां रजोभिः रेणुभिः इतस्ततः चतुर्दिक्षु भूम्ना बाहुल्येन उत्पतितैः उड्डीनैः सद्भिः अयत्नेन

महास्वनः सैन्यविमर्दसम्भवः
कर्णान्तकूलङ्कषतामुपेयिवान् ।
पयोनिधेः क्षुब्धतरस्य वर्द्धनो
बभूव भूम्ना भुवनोदरम्भरिः ॥ ३२ ॥

अनायासेन गन्धर्वपुरस्य यः उदयः आविर्भावः तस्य भ्रमं भ्रान्तिं बभार दधार । अत्र अनेकवर्णमण्डितत्वसाम्यात् अम्बरस्य गन्धर्वपुरेण या उपमा तया भ्रान्तिमानलङ्कारः सञ्जीवित इति बोध्यम् भुवं विगाह्य प्रययौ महाचमूः क्वचिन्न मान्ती दिवमभ्यगात्ततः । अखर्वगन्धर्वपुरोदयभ्रमं बभार भूम्ना सुतरामितस्तत इति पाठान्तरे ततः महाचमूः महती देवसेना भुवं भूमिं विगाह्य क्वचित् कुत्रापि न मान्ती न पर्य्याप्नुवती दिवं स्वर्गम् अभ्यगात् । तथा इतस्ततः समन्तात् अखर्वम् अन्यूनं यत् गन्धर्वपुरं तस्य उदयभ्रमं स्वस्य विविधवर्णत्वादिति भावः भूम्ना बाहुल्येन सुतराम् अत्यर्थं बभार धृतवतीत्यर्थः ॥ ३१ ॥

महास्वन इति । सैन्यानां विमर्दात् सङ्घर्षात् सम्भवः उत्पत्तिर्यस्य तथाभूतः महास्वनः कर्णान्तस्य श्रोत्रमूलस्य कूलङ्कषतां कूलभेदित्वम् । उपेयिवान् प्राप्तवान् कर्णविवरं स्फोटयन्निति भावः भूतलमापूरयन् क्षुब्धतरस्य अतिशयेनालोड़ितस्येत्यर्थः पयोनिधेः समुद्रस्य सम्बन्धविवक्षयास् अपेक्षायां पञ्चमीस्थाने षष्ठी । क्षुब्धतरात् पयोनिधेरित्यर्थः पयोनिधिमपेक्ष्य वृद्धिं गच्छन्नित्यर्थः भुवनोदरं भरति पूरयतीति तथाभूतः बभूव । महास्वनः सैन्यविमर्दसम्भवः इत्यत्र रवः प्रगल्भाहतभेरिसम्भवः इति पाठान्तरम् कर्णान्तकूलङ्कषतामित्यत्र कर्णान्तमूलङ्कषतामिति वर्द्धन इत्यत्र मन्थन इति च पाठान्तरम् । अत्रोपमानात् समुद्रात् सैन्यस्वनस्याधिक्यात् व्यतिरेकालङ्कारः । उक्तञ्च दर्पणे । आधिक्यमुपमेयस्योपमानान्न्यूनताथवा । व्यतिरेक इति ॥३२॥

महागजानां गुरुबृंहितैस्ततैः
सुहेषितैर्घोरतरैश्च वाजिनाम्।
घनै रथानां गुरुचण्डचीत्कृतै-
स्तिरोहितोऽभूत्पटहस्य निःस्वनः॥ ३३॥

महासुराणामवरोधयोषितां कचाचिपक्ष्मस्तनमण्डलेषु च।
ध्वजेषु नागेषु रथेषु वाजिषु क्षणेन तस्थौ सुरसैन्यजं रजः॥३४

घनैर्विलोक्य स्थगितार्कमण्डलैस्तमूरजोभिर्निचितं नभःस्थलम्।
अयायि हंसैरभिमानसं घनभ्रमेण सानन्दमनर्ति केकिभिः
॥ ३५॥

महागजानामिति। पटहस्य वाद्यभेदस्य निस्वनः ततैः विस्तृतैः महागजानां गुरुभिर्महद्भिः बृंहितैः शब्दैः वाजिनाम् अश्वानां घोरतरैः अतिभीषणैः सुहेषितैः सुष्ठु हेषारवैः रथानां घनैः गम्भीरैः गुरुभिर्महद्भि चण्डैर्भीषणैः चीत्कृतैश्च तिरोहितः अन्तर्हितः विलुप्त इत्यर्थः अभूत्। ततैरित्यत्र शतैरिति गुर्वित्यत्र पवेति च पाठान्तरम्॥ ३३॥

महासुराणामिति। सुरसैन्यजं देवसैनोत्थापितमित्यर्थः रजः रेणुः क्षणेन महासुराणाम् अवरोधयोषिताम् अन्तःपुरनारीणां कचाचिपक्ष्मस्तनमण्डलेषु कचेषु केशेषु अचिपक्ष्मसु नेत्रलोमसु स्तनमण्डलेषु च तथा ध्वजेषु पताकासु नागेषु हस्तिषु रथेषु वाजिषु च तस्थौ स्थितिं प्राप॥ ३४॥

घनैरिति। घनैः सान्द्रैः स्थगितं तिरोहितम् अर्कमण्डलं यैः तथाभूतैस्तमूनां रजोभिः रेणुभिः निचितं व्याप्तं नभःस्थलम् अन्तरीक्षं विलोक्य हंसैः घनभ्रमेण मेघोदयभ्रान्त्या अभिमानसं मानसं सरः अभिलक्ष्य अयायि गतं जलधरसमये मानसं यान्ति हंसा इति कविसमयप्रसिद्धेः। तथा केकिभिः मयूरैः सानन्दं यथा तथा

सान्द्रैः सुरानीकरजोभिरम्बरे
नवाम्बुदानीकनिभैरभिश्रिते ।
चकासिरे स्वर्णमया महाध्वजाः
परिस्फुरन्तस्तडितां गणा इव ॥ २६ ॥

विलोक्य धूलीपटलैर्भृशं भृतं
द्यावापृथिव्योरलमन्तरं महत् ।
किमूर्ध्वतोऽधः किमधस्त ऊर्द्ध्वतो
रजोऽभ्युपैतीति जनैरतर्क्यत ॥ २७ ॥

नोर्ध्वं न चाधो न पुरो न पृष्ठतो
न पार्श्वतोऽभूत् खलु चक्षुषोर्गतिः ।

अनर्त्ति न्हत्यं कृतम् । घनैरित्यत्र चलैरिति अयायीत्यत्र अवापीति च पाठान्तरम् । भ्रान्तिमानलङ्कारः ॥ २५ ॥

सान्द्रैरिति । सान्द्रैः घनैः नवाम्बुदानीकनिभैः नवमेघचयसदृशैः सुरानीकानां रजोभिः अम्बरे आकाशे अभिश्रिते आवृते सति स्वर्णमया महान्तः ध्वजाः पताकाः परिस्फुरन्तः परितो विकसन्तः तडितां विद्युतां गणा इव चकाशिरे शुशुभिरे । नवाम्बुदानीकनिभैरभिश्रिते इत्यत्र नवाम्बुदानीकविलासिभिः श्रिते इति स्वर्णमया महाध्वजा इत्यत्र स्वर्णमयध्वजव्रजा इति च पाठान्तरम् । उपमालङ्कारः ॥ २६ ॥

विलोक्येति । धूलीपटलैः रजःसङ्घातैः भृशम् अत्यर्थं भृतं पूरितं द्यावापृथिव्योः महत् अन्तरम् अभ्यन्तरम् विलोक्य जनैः लोकैः रजः अलम् अतिशयेन ऊर्द्ध्वतः ऊर्द्ध्वदेशात् अधः अधोदेशे किम् ? वा अधस्तः अधोदेशात् ऊर्द्ध्वतः ऊर्द्ध्वदेशे किम् ? अभ्युपैति अभिगच्छतीति अतर्क्यत तर्कितम् ॥ २७ ॥

नोर्द्ध्वमिति । सर्वतः समन्तात् सूच्यग्रभेद्यैः पृतनानां सेनानां

सूच्यग्रभेद्यैः पृतनारजश्चयै-
राच्छादिता प्राणिगणस्य सर्वतः ॥ ३८ ॥
दिगन्तदन्त्यावलिदानहारिभि-
र्विमानरन्ध्रप्रतिनादमेदुरैः ।
अनेकवाद्यध्वनितैरनारतै-
र्जगर्ज गाढं गुरुभिर्नभस्तलम् ॥ ३९ ॥
भुवं विगाह्य प्रययौ महाचमूः
क्वचिन्न मान्ती महतीं दिवं खलु ।
सुसङ्कुलायामपि तत्र निर्भरात्
किं कान्दिशीकत्वमवाप नाकुला ॥ ४० ॥

रजसां चयैः सङ्घातैः आच्छादिता प्राणिगणस्य चक्षुषोर्गतिः ऊर्द्ध्वं न, अधश्च न, पुरः अग्रतः न, पृष्ठतः न, पार्श्वतश्च न खलु अभूत् । सूच्यग्रभेद्यैरित्यत्र सूच्यग्रभिन्नैरिति पृतनारजश्चयैरित्यत्र पृतनारजोभरैरिति आच्छादितेत्यत्र सुनिर्भरमिति च पाठान्तरम् ॥ ३८ ॥

दिगन्तेति । नभस्तलम् आकाशं दिगन्तदन्त्यावलीनां दिग्गजानां दानहारिभिः मदशोषकैः विमानरन्ध्रेषु देवयानविवरेषु प्रतिनादेन प्रतिध्वनिना मेदुरैः पूरितैरिति भावः अनारतैः अनवरतैः गुरुभिर्महद्भिः अनेकवाद्यानां विविधवादित्राणां ध्वनितैः निर्घोषैः गाढम् अत्यर्थं जगर्ज दध्वान । दिगन्तदन्त्यावलिदानहारिभिरित्यत्र दिगन्तदन्त्यावलदानहारिभिरिति अनेकवाद्यध्वनितैरित्यत्र अनेकवाद्यध्वनितैरिति नभस्तलमित्यत्र नभःस्थलमिति च पाठान्तरम् ॥ ३९ ॥

भुवमिति । महाचमूः महती सेना भुवं पृथिवीं विगाह्य सङ्कुलीकृत्येत्यर्थः क्वचिदपि न मान्ती खलु न पर्य्याप्नुवती वेत्यर्थः खलु उत्प्रेक्षायाम् । महतीम् अतिविशालां मानक्षमामिति भावः दिवं स्वर्गं प्रययौ प्रचचाल । तत्रापि दिव्यपि निर्भरात् सङ्कुलाति-

उद्दामदानद्विपवृन्दबृंहितै-
र्नितान्तमुत्तुङ्गतुरङ्गहेषितैः ।
चलद्घनस्यन्दननेमिनिस्वनै-
रभून्निरुच्छ्वासमिवाकुलं जगत् ॥ ४१ ॥

महागजानां गुरुभिस्तु गर्जितै-
र्विलोलघण्टारणितै रणोल्वणैः ।
वीरप्रणादैः प्रमदप्रभेदुरै-
र्वाचालतामादधिरेतरां दिशः ॥ ४२ ॥

रेकादिति भावः सुसंकुलायां सुसंकीर्णायां सत्याम् आकुला कथमत्र एवं सङ्कीर्णतायां स्थातव्यमिति व्याकुला सती किं कान्दिशीकत्वं भयद्रुतत्वं कान्दिशीको भयद्रुत इत्यमरः । किं न अवाप न प्राप अपितु प्रापैव क्लेशभयेन द्रवणेच्छां चकार व्याप्तेः प्रतिबाधकत्वेन द्रवणासम्भवादिति भावः उत्प्रेक्षालङ्कारः ॥ ४० ॥

उद्दामेति । जगत् उद्दामदानानाम् उच्छृङ्खलानां द्विपवृन्दानां गजसमूहानां बृंहितैः उत्तुङ्गानाम् उन्नतानां तुरङ्गाणाम् अश्वानां हेषितैः हेषारवैः तथा चलतां घनानामिव मेघानामिव स्यन्दनानां रथानां नेमिनिस्वनैः चक्रप्रान्तनिर्घोषैः नितान्तम् अतीव निरुच्छ्वासमिव निरुद्धप्राणमिव आकुलम् अभूत् । उद्दामदानद्विपवृन्दबृंहितैरित्यत्र उद्दामदानद्विपबृंहितैः शतैरिति चलद्घनस्यन्दननेमिनिस्वनैरित्यत्र चलद्ध्वजस्यन्दननेमिनिस्वनैरिति निरुच्छ्वासमिवाकुलमित्यत्र निरुच्छ्वासमथाकुलमिति पाठान्तरम् ॥ ४१ ॥

महागजानामिति । महागजानां गुरुभिर्महद्भिः गर्जितैः तथा विलोलानां चञ्चलानां घण्टानां रणितैः रणेषु उल्वणैः उत्कटैः प्रमदानां हर्षाणां यत्र जयस्येति भावः प्रभेदुरैः प्रणाशिभिः वीराणां भटानां प्रणादैः कोलाहलैः दिशः वाचालतां मुखरताम् आदधिरे-

दन्तीन्द्रदानद्रववारिवीचिभिः
सद्योऽपि नद्यो बहुधा पुपूरिरे ।
धारा रजोभिस्तुरगैः क्षतैर्भृता
याः पङ्कतामेत्य रथैः स्थलीकृताः ॥ ४३ ॥

निम्नाः प्रदेशाः स्थलतामुपागम-
न्निम्नत्वमुच्चैरपि सर्वतश्च ते ।
तुरङ्गमाणां व्रजतां खुरैः क्षता
रथैर्गजेन्द्रैः परितः समीकृताः ॥ ४४ ॥

तरां ह्यतिशयेन दधुरित्यर्थः । रणोल्बणैरित्यत्र रणोज्ज्वलैरिति वीरप्रणादैरित्यत्र वीरप्रभेदैरिति च पाठान्तरम् ॥ ४२ ॥

दन्तीन्द्रेति । दन्तीन्द्राणां दानद्रवाः मदस्रुतय एव वारीणि तेषां वीचिभिस्तरङ्गैः नद्यः सद्यस्तत्क्षणात् बहुधा विविधप्रकारेण पुपूरिरे पूरिताः । याः पूरिता नद्यः तुरगैरश्वैः क्षतैः उत्थापितैरित्यर्थः धारारजोभिः प्रान्तरेणुभिः भृताः व्याप्ताः सत्यः पङ्कतां पङ्कीभावम् एत्य प्राप्य रथैः स्थलीकृताः स्थलतामापादिताः । प्रथमं मदवारिभिः पूरणं ततो रजसां चयैर्व्याप्तत्वेन पङ्कीभावप्रापणं ततो रथैस्तदुपरिगमनात् स्थलतापादनमिति हस्त्यश्वरथानामतीतसङ्ख्यत्वमिति भावः । दन्तीन्द्रदानद्रववारिवीचिभिरित्यत्र दन्तीन्द्रदानाम्बुधिवारिवीचिभिरिति बहुधेत्यत्र बहु ता इति क्षतैर्भृता इत्यत्र क्षितिभृतेति च पाठान्तरम् ॥ ४३ ॥

निम्ना इति । व्रजतां चलतां तुरङ्गमाणां खुरैः क्षताः कुट्टिताः तथा रथैः गजेन्द्रैश्च परितः समन्तात् समीकृताः समतामापादिताः निम्नाः प्रदेशाः स्थलतां समभूमित्वं तथा सर्वतः उच्चैरपि उन्नता अपि ते प्रदेशाः निम्नत्वम् उपागमन् प्रापुः । निम्नाः प्रदेशा इत्यत्र निम्नप्रदेशा इति सर्वतश्च ते इत्यत्र सर्वतः स्थलमिति क्षतेत्यत्र क्षितो इति च पाठान्तरम् ॥ ४४ ॥

नभोदिगन्तप्रतिघोषभीषणै-
र्महामहीभृत्तटदारणोल्वणैः ।
पयोधिनिर्धूननकेलिभिर्जगद्
बभूव भेरीध्वनितैः समाकुलम् ॥ ४५ ॥

इतस्ततो वातविधूतचञ्चलै-
र्नीरन्ध्रिताशागमनैर्ध्वजांशुकैः ।
लचैः क्वणत्काञ्चनकिङ्किणीकुलै-
रमज्जि धूलीजलधौ नभोगते ॥ ४६ ॥

घण्टारवै रौद्रतरैर्निरन्तरं
विसृत्वरैर्गर्जरवैः सुभैरवैः ।

नभ इति । नभसि आकाशे दिगन्तेषु च प्रतिघोषेण प्रतिध्वनिना भीषणैः महान्तः ये महीभृतः पर्वताः तेषां तटदारणे तटविदारणे उल्वणैः उद्भटैः समर्थैरिति यावत् पयोधीनां समुद्राणां निर्धूननं कम्पनं केलिः क्रीड़ा येषां तैः सागरकम्पनकरैरिति यावत् भेरीध्वनितैः वाद्यशब्दैः जगत् समाकुलं सम्पूरितमिति भावः बभूव । भेरीध्वनितैरित्यत्र भेरीस्वनितैरिति पाठान्तरम् ॥ ४५ ॥

इतस्तत इति । इतस्ततः समन्तात् वातेन विधूतानि कम्पितानि अतएव चञ्चलानि तैः नीरन्ध्रितं सान्द्रं यथा तथा आशासु दिक्षु गमनं सञ्चारो येषां तैः क्वणन्ति शब्दायमानानि काञ्चनकिङ्किणीनां सौवर्णघण्टिकानां कुलानि सङ्घाताः येषां तथोक्तैः लचैः लक्षपरिमाणैः असङ्ख्यैरिति भावः ध्वजांशुकैः नभोगते आकाशसञ्चारिणि धूलिजलधौ रजःसमुद्रे अमज्जि निमग्नम् अवस्थितमिति भावः । नीरन्ध्रिताशागमनैरित्यत्राराधिताशागमनैरिति लचैरित्यत्र वाञ्छिति नभोगते इत्यत्र नभोगतैरिति च पाठान्तरम् ॥ ४६ ॥

घण्टारवैरिति । वाहिनीनां सैन्यानां पटहस्य वाद्यभेदस्य

मत्तद्विपानां प्रथयाम्बभूविरे
न वाहिनीनां पटहस्य निःस्वनाः ॥ ४७ ॥
करालवाचालमुखाश्चमूस्वनै-
र्ध्वस्ताम्बरा वीक्ष्य दिशो रजस्वलाः ।
तिरोबभूवे गहनैर्दिनेश्वरो
रजोऽन्धकारैः परितः कुतोऽप्यसौ ॥ ४८ ॥

निस्वनाः निर्घोषाः मत्तद्विपानां मदस्राविणां गजानां रौद्रतरैः अतिभीषणैः घण्टारवैः तथा निरन्तरम् अनारतं विस्तृतैः व्याप्नुवद्भिः सुभैरवैः अतिभीषणैः गर्जरवैः बृंहितैरित्यर्थः न प्रथयाम्बभूविरे न प्रकटीचक्रिरे श्रोत्रपथं न प्रापिता इति भावः । निरन्तरमित्यत्र निरन्तरैरिति पाठान्तरम् ॥ ४७ ॥

करालेति । असौ दिनेश्वरः सूर्य्यः चमूनां सेनानां स्वनैः कोलाहलैः करालानि भीषणानि अदर्शनीयानीति भावः वाचालानि ध्वनितानि मुखानि अन्ता यासां ताः ध्वस्तं रजसापूरितमिति भावः अम्बरम् आकाशं वस्त्रञ्चेति ध्वनिः यासां तथाविधाः रजस्वलाः रेणुपूर्णाः ऋतुमतीश्चेति ध्वनिः दिशः वीक्ष्य दृष्ट्वा परितः समन्तात् गहनैर्निविड़ैः रजांसि एव अन्धकाराः तैः कुतोऽपि तिरोबभूवे अन्तर्हितः अदृश्यो बभूवेति यावत् । रजस्वलाया नार्य्या दर्शनस्याशास्त्रीयत्वात् दैवाद्दर्शनेऽपि तत्क्षणात् तिरोधानमुचितं सत्पुरुषाणामिति सूर्य्ये सत्पुरुषव्यवहारसमारोपात् समासोक्तिरलङ्कारः । तदुक्तं दर्पणे । समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः । व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुन इति । करालवाचालमुखा इत्यत्र करालवाचालरवैरिति चमूस्वनैरित्यत्र चमूरवैरिति ध्वस्ताम्बरा इत्यत्र ध्वस्ताम्बरा इति गहनैरित्यत्र गहने रजोन्धकारैरित्यत्र रजोन्धकारे इति च पाठान्तरम् ॥ ४८ ॥

आक्रान्तपूर्वा रभसेन सैनिकै-
र्दिगङ्गना व्योम रजोऽभिदूषिता ।
भेरीरवाणां प्रतिशब्दितैर्घनै-
र्जगर्ज गाढं घनमत्सरादिव ॥ ४९ ॥

गुरुसमीरसमीरितभूधरा
इव गजा गगनं विजगाहिरे ।
गुरुतरा इव वारिधरा रथा
भुवमितीह विवर्त इवाभवत् ॥ ५० ॥

बलवदसुरलोकानल्पकल्पान्तकाले
निरवधय इवाम्भोराशयो घोरघोषाः ।

आक्रान्तेति । सैनिकैः रभसेन वेगेन बलादिति यावत् रभसो-वेगहर्षयोरित्यमरः आक्रान्तपूर्वा पूर्वमाक्रान्ता धर्षिता व्योमरजोभिः अम्बररेणुभिरभिदूषिता दिगेव अङ्गना स्त्री घनैः गम्भीरैः भेरीरवाणां प्रतिशब्दितैः प्रतिनादैः घनमत्सरादिव अति क्रोधादिव गाढं अत्यन्तं जगर्ज गर्जितवती । दिगङ्गनेति रूपकेणोत्थापिता घनमत्-सरादिवेत्युत्प्रेक्षा । घनमत्सरादिवेत्यत्र गुरुमत्सरादिवेति पाठा-न्तरम् ॥ ४९ ॥

गुर्विति । गजा हस्तिनः गुरुणा महता समीरेण वायुना समीरिताः सञ्चालिता भूधरा इव पर्वता इव गगनं तथा रथा गुरुतरा अतिमहान्तः वारिधराः मेघा इव भुवं पृथिवीं विजगा-हिरे अवगाहितवन्तः इति इत्थम् इह प्रयाणे विवर्त्त इव विप-र्यास इव अभवत् । उत्प्रेक्षालङ्कारः । इव वारिधरा रथा इत्यत्र बहुवारिभवाद्‌ घना इति भुवमितीह विवर्त्त इवाभवदित्यत्र भुवमतीव नमन्त इवाभवन्निति च पाठान्तरम् । द्रुतविलम्बितं वृत्तं द्रुतविलम्बितमाह न भौभराविति तल्लक्षणात् ॥ ५० ॥

गुरुतरपरिमज्जद्भूभृतो देवसेना
वव्रधुरपि सुपूर्णा व्योमभूम्यन्तराले ॥ ५१ ॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
देवसेनाप्रयाणं नाम चतुर्दशः सर्गः ।

---

## पञ्चदशः सर्गः ।

---

सेनापतिं नन्दनमन्धकद्विषो
युधे पुरस्कृत्य बलस्य शात्रवः ।
सैन्यैरुपैतीति सुरद्विषां पुरोऽ-
भूक्ति वदन्ती हृदयप्रकम्पिनी ॥ १ ॥

बलवदिति । बलवताम् असुरलोकानाम् अनले महति कल्पान्तकाले प्रलयसमये निरवधयः अशेषाः अपारा इत्यर्थः घोरघोषा विकटस्वनाः गुरुतरा अतिमहान्तः परिमज्जन्तः भूभृतः पर्वता येषु तथाभूताः अम्भोराशय इव समुद्रा इव देवसेनाः व्योमभूम्यन्तराले आकाशपृथिवीमध्यभागे सुपूर्णाः प्रभूता अपि वव्रधुः वृद्धिं जग्मुः । उपमालङ्कारः । बलवदसुरलोकानलकल्पान्तकाले इत्यत्र वरतरसुरलोकानलसंहारकाले इति वव्रधुरपि सुपूर्णा व्योमभूम्यन्तराले इत्यत्र वव्रधुरपि सुपूर्णव्योमभूम्यन्तराला इति पाठान्तरम् । मालिनी वृत्तं न न म ययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥ ५१ ॥

इति चतुर्दशः सर्गः ।

—*—

सेनापतिमिति । बलस्य असुरभेदस्य शात्रवः निहन्ता शत्रु-

चमूप्रभुं मन्मथमर्दनात्मजं
विजित्वरीभिर्विजयश्रिया श्रितम् ।
श्रुत्वा सुराणां पृतनाभिरागतं
चित्ते चिरं चुक्षुभिरे महासुराः ॥ २ ॥

समेत्य दैत्याधिपतेः पुरः स्थिताः
किरीटबद्धाञ्जलयः प्रणम्य ते ।
न्यवेदयन्मन्मथशत्रुसूनुना
युयुत्सुना जम्भजितं सहागतम् ॥ ३ ॥

रेव शालवः प्रज्ञादित्वात् स्वार्थे अण् । इन्द्रः अन्धकद्विषः हरस्य नन्दनं कुमारं सेनापतिं पुरस्कृत्य युधे युद्धार्थं सैन्यैः सह उपैति उपागच्छति इति हृदयप्रकम्पिनी किंवदन्ती जनश्रुतिः सुरद्विषाम् असुराणां पुरः अग्रतः अभूत् चचारेत्यर्थः । युधे इत्यत्र युद्धे इति हृदयप्रकम्पिनीत्यत्र हृदयस्य कम्पिनीति पाठान्तरम् । सर्गेऽस्मिन् इन्द्रवंशा वंशस्थविलयो रुपजाति वृत्तं तत्रेन्द्रवंशा प्रथमाचरे गुराविति वदन्ति वंशस्थमुदीरितं जराविति च तल्लक्षणम् ॥ १ ॥

चमूप्रभुमिति । महासुराः मन्मथमर्दनस्य हरस्य आत्मजं कुमारं चमूनां सेनानां प्रभुम् अधिपं विजित्वरीभिः विशेषेण जयशालिनीभिः सुराणां पृतनाभिर्देवसेनाभिः सह विजयश्रिया जयलक्ष्म्या युतम् आगतं श्रुत्वा चित्ते मनसि चिरं चुक्षुभिरे क्षोभं प्राप्ताः भयमाजग्मुरिति यावत् । विजित्वरीभिरित्यत्र विजित्वराभिरिति युतमित्यत्र श्रितमिति चित्ते इत्यत्र चित्तैरिति पाठान्तरम् ॥ २ ॥

समेत्येति । ते महासुराः समेत्य समागत्य दैत्याधिपतेस्तारकस्य पुरः अग्रतः स्थिताः किरीटेषु बद्धा अञ्जलयः यैः तथाभूताः सन्तः प्रणम्य युयुत्सुना युद्धार्थिना मन्मथशत्रोः शम्भोः सूनुना कुमारेण सहागतं जम्भजितम् इन्द्रं न्यवेदयन् व्यज्ञापयन् । पुरः इत्यत्र पुरे इति पाठान्तरम् ॥ ३ ॥

दासीकृताशेषजगत्त्रयं न मां
जिगाय युद्धे कतिशः शचीपतिः ।
गिरीशपुत्रस्य बलेन साम्प्रतं
ध्रुवं विजेतेति स काकुतोऽहसत् ॥ ४ ॥
ततः क्रुधा विस्फुरिताधराधरः
स तारको दर्पितदोर्बलोद्धतान् ।
युधे त्रिलोकीजयकेलिलालसः
सेनापतीन् सन्नहनार्थमादिशत् ॥ ५ ॥
महाचमूनामधिपाः समन्ततः
सन्नह्य सद्यः सुतरामुदायुधाः ।

दासीकृतेति । स तारकः शचीपतिरिन्द्रः कतिशः बहुनीत्यर्थः युद्धे दासीकृताशेषजगत्त्रयं किङ्करीकृत त्रिभुवनं मां न जिगाय न जितवान्, साम्प्रतं गिरीशपुत्रस्य कुमारस्य बलेन ध्रुवं निश्चितं विजेता विजेष्यते इति काकुतः काका भिन्नकण्ठध्वनिविशेषेणेत्यर्थः भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते इति दर्पणः । अहसत् हास्यं चकार नैव विजेतेति भङ्ग्या उक्तवानिति भावः । नेत्यत्र तु इति । सकाकुतोऽहसदित्यत्र सकाकु सोऽहसदिति पाठान्तरम् ॥ ४ ॥

तत इति । ततः अनन्तरं त्रिलोक्या जयकेलौ जयक्रीड़ायां जयव्यापारे इत्यर्थः लालसः लुब्धः जितत्रिभुवन इति भावः स तारकः क्रुधा क्रोधेन विस्फुरितः विकम्पितः अधराधरः निम्नाधरः यस्य तथाभूतः सन् युधे युद्धार्थं दर्पितेन दोष्णां बाहूनां बलेन उद्धतान् सेनापतीन् सन्नहनार्थं सन्नद्धीभवनार्थं समुद्योगार्थमिति यावत् आदिशत् आज्ञापयामास । दर्पितदोर्बलोद्धतानित्यत्र दर्पित दोर्बलो बलादिति युधे इत्यत्र युद्धे इति च पाठान्तरम् ॥ ५ ॥

महाचमूनामिति । महाचमूनां महतीनां सेनानाम् अधिपाः सद्यः

तस्थु र्विनम्रक्षितिपालसङ्कुले
तदङ्गनद्वारवरप्रकोष्ठके ॥ ६ ॥
स द्वारपालेन पुरः प्रदर्शितान्
कृतानतीन् बाहुवरानधिष्ठितान्।
महाहवाम्भोधिविधूननोद्धता-
न्ददर्श राजा पृतनाधिपान् बहून् ॥ ७ ॥
बली बलारातिबलातिशातनं
दिग्दन्तिनादद्रवनाशनस्वनम्।

तदृच्छयात् आदेशमात्रेणेति भावः समन्ततः सर्वतः सन्नह्य सन्नद्धा भूत्वा सुतराम् अत्यर्थम् उदायुधाः उद्धृतशस्त्राः सन्तः विनम्रैः विनतैः क्षितिपालैः पराजितनृपतिभिरित्यर्थः सङ्कुले सङ्कीर्णे तस्य तारकस्य अङ्गनद्वारं चत्वरप्रवेशद्वारं तस्य वरे श्रेष्ठे प्रकोष्ठके अवकाशे तस्थुः प्रभुप्रतीक्षया स्थितवन्त इत्यर्थः। तदङ्गनद्वारवरप्रकोष्ठके इत्यत्र तदङ्गनद्वारि वहिःप्रकोष्ठके इति पाठान्तरम् ॥ ६ ॥

स इति। स राजा तारकः द्वारपालेन पुरः अग्रतः प्रदर्शितान् अयमयमिति प्रत्येकं दर्शितान् कृतानतीन् दर्शनमात्रेण कृतप्रणामान् बाहुवरान् महाबाहून् श्रेष्ठबाहुबलानिति भावः महाहवः महा-संग्राम एव अम्भोधिः तस्मिन् विधूननेन विलोड़नेन उद्धतान् प्राप्त-गर्वान् महायुद्धजयेन दर्पितानिति भावः बहून् पृतनापतीन् सेना-नायकान् अधिष्ठितान् दण्डायमानान् ददर्श। बाहुवरानित्यत्र वाहवरानिति पाठे श्रेष्टतमानि हस्त्यादीनि अधिष्ठितान् आरूढ़ा-नित्यर्थः। ददर्श राजेत्यत्र ननन्द पश्यन्निति पाठान्तरम् ॥ ७ ॥

बलीति। अथानन्तरं बली महाबलः स तारकः बलारातेः बलासुरनिसूदनस्य इन्द्रस्य बलातिशातनं बलनाशनं दिग्दन्तिनाम् ऐरावतानां नादस्य बृंहणस्य द्रवस्य मदस्रावस्य च नाशनः स्वनः

महीधराम्भोधिनिवारितक्रमं
ययौ रथं घोरमथाधिरुह्य सः ॥ ८ ॥
युगक्षयक्षुब्धपयोधिनिःस्वना-
श्चलत्पताकाकुलवारितातपाः ।
धरारजोग्रस्तदिगन्तभास्कराः
पतिं प्रयान्तं पृतनास्तमन्वयुः ॥ ९ ॥
चमूरजः प्राप दिगन्तदन्तिनां
महासुरस्याभिसुरं प्रसर्पिणः ।

निर्घोषः यस्य तथाभूतं महीधरैः पर्वतैः अम्भोधिभिः सागरैश्च न वारितः निवारयितुमशक्य इत्यर्थः क्रमः गतिर्यस्य तादृशं घोरं भीषणं रथम् अधिरुह्य ययौ चचाल । दिग्दन्तिनादद्रवनाशनस्वनमित्यत्र दिग्दन्तिदानद्रवतानिस्वनमिति । महीधराम्भोधि निवारितक्रममिति च पाठे दिग्दन्तिनां दानद्रवस्य मदस्य तैः तानः विस्तारकः बर्द्धक इत्यर्थः निस्वनो यस्य तथोक्तमित्यर्थः । महीधराणाम् अम्भोधीनाञ्च निवारितः क्रमः सामर्थ्यं गतिप्रतिरोध इति भावः येन तथाभूतमित्यर्थः ॥ ८ ॥

युगेति । पृतनाः असुरसेनाः युगक्षये कल्पान्ते क्षुब्धः विचलितः यः पयोधिः समुद्रः तद्वत् निस्वनः निर्घोषो यासां तथोक्ताः चलन्तीभिः पताकाभिः आकुलं यथा तथा वारिता आतपाः सौरमयूखा याभिः तथाभूताः तथा धरारजोभिः पार्थिवरेणुभिः ग्रस्ता आच्छादिता दिगन्ता दिगवकाशा भास्करश्च यैः तादृश्यः सत्यः प्रयान्तं पतिं तं तारकम् अन्वयुः अनुजग्मुः । पतिं प्रयान्तमित्यत्र मतिं प्रयातुमिति पाठान्तरम् ॥ ९ ॥

चमूरज इति । अभिसुरं सुरान् अभि देवान् प्रतीत्यर्थः प्रसर्पिणः प्रयाणं कुर्वतः महासुरस्य तारकस्य चमूनां सेनानां रजः धूलिः

दन्तप्रकाण्डेषु सितेषु शुभ्रतां
कुम्भेषु दानाम्बुघनेषु पङ्कताम् ॥ १० ॥

महीभृतां कन्दरदारणोल्बणै-
स्तद्वाहिनीनां पटहस्वनैर्घनैः ।
उद्वेलिताश्चुक्षुभिरे महार्णवा
नभःस्रवन्ती सहसाभ्यवर्द्धत ॥ ११ ॥

सुरारिनाथस्य महाचमूस्वनै-
र्विगाह्यमाना तुमुलैः सुरापगा ।
अभ्युच्छ्रितैरूर्मिशतैः सवारिजै-
रचालयन्नाकनिकेतनावलीम् ॥ १२ ॥

दिगन्तदन्तिनाम् ऐरावतानां सितेषु शुभ्रेषु दन्तप्रकाण्डेषु दशनशाखासु शुभ्रतां तथा दानाम्बुघनेषु मदजलसान्द्रेषु कुम्भेषु पङ्कतां कर्दमत्वं प्राप ॥ १० ॥

महीभृतामिति । महीभृतां पर्वतानां कन्दरदारणा गुहाविदारिणः अतएव उल्बणाः उत्कटाः तैः तद्वाहिनीनां तस्य तारकस्य वाहिनीनां सेनानां घनैः गम्भीरैः पटहस्वनैः वाद्यध्वनिभिः महार्णवाः महासमुद्राः उद्वेलिताः वेलामतिक्रान्ताः सन्तः चुक्षुभिरे क्षोभं गताः सञ्चेलुरित्यर्थः । नभःस्रवन्ती आकाशगङ्गा च सहसा अभ्यवर्द्धत वृद्धिं प्राप ॥ ११ ॥

सुरारीति । सुरारिनाथस्य तारकस्य तुमुलैः महाचमूनां स्वनैः विगाह्यमाना सञ्चाल्यमाना सुरापगा स्वर्गनदी सवारिजैः सपद्मैः अभ्युच्छ्रितैः उत्पतितैः वेलामिति शेषः ऊर्मीणां तरङ्गाणां शतैः नाकनिकेतनावलीं स्वर्गभवनश्रेणीम् अचालयत् चालितवती । सवारिजैरित्यत्र अवारितैरिति नाकनिकेतनावलीमित्यत्र नाकनिकेतनावलीरिति च पाठान्तरम् ॥ १२ ॥

अथ प्रयाणाभिमुखस्य नाकिनां
द्विषः पुरस्तादशुभोपदेशिनी।
अगाधदुःखाम्बुधिमध्यमज्जनं
बभूव चोत्पातपरम्परा वत ॥ १३ ॥
आगामिदैत्याशनकेलिकाङ्क्षिणी
क्षुपक्षिणां घोरतरा परम्परा।
दधौ पदं व्योम्नि सुरारिवाहिनी-
रुपर्युपर्येत्यनिवारितातपा ॥ १४ ॥
मुहुर्विभग्नातपवारणध्वज-
स्खलद्धराधूलिकुलाकुलेक्षणः।

अथेति। अथानन्तरं प्रयाणाभिमुखस्य युद्धार्थं प्रस्थितस्य नाकिनां देवानां द्विषस्तारकस्य पुरस्तात् अशुभोपदेशिनी अमङ्गलशंसिनी अगाधदुःखाम्बुधौ अतलस्पर्शदुःखसमुद्रे मज्जनं मज्जनकारणम् उत्पातपरम्परा उत्पातश्रेणी बभूव च। वतेति खेदसूचकमव्ययम्। अशुभोपदेशिनीत्यत्राशुभौघदायिनीति अगाधदुःखाम्बुधिमध्यमज्जनं बभूव चोत्पातपरम्परा वतेत्यत्र मुहुर्महारिष्टपरम्परा परा परापतन्त्यमहापताकिनीति पाठान्तरम् ॥ १३ ॥

आगामीति। घोरतरा अतिभीषणा क्षुपक्षिणां परम्परा श्रेणी आगामिनः भविष्यतः दैत्यानाम् अशनकेलेः मांसभोजनव्यापारस्य काङ्क्षिणी अभिलाषिणी सुरारीणां दैत्यानां वाहिनीः सेनाः उपरि उपरि एत्य आगत्य निवारितः आतपः यया तादृशी सती व्योम्नि आकाशे पदं दधौ चचारेत्यर्थः। आगामिदैत्याशनकेलिकाङ्क्षिणी क्षुपक्षिणामित्यत्र भविष्यदैत्याशनकेलिकामिनी क्षुपक्षिणामिति पाठान्तरम् ॥ १४ ॥

मुहुरिति। प्रभञ्जनः वायुः प्रसभं सहसा विभग्ना विशेषेण

धूताश्वमातङ्गमहारथाकरा-
नवेक्षणोऽभूत्प्रसभं प्रभञ्जनः ॥ १५ ॥
सद्योविभिन्नाञ्जनपुञ्जतेजसो
मुखैर्विषाग्निं विकिरन्त उच्चकैः ।
पुरः पथोऽतीत्य महाभुजङ्गमा
भयङ्कराकारभृतो भृशं ययुः ॥ १६ ॥
मिलन्महाभीमभुजङ्गभीषणं
प्रभुर्दिनानां परिवेषमादधौ ।
महासुरस्य द्विषतोऽतिमत्सरा-
दिवान्तमासूचयितुं भयङ्करः ॥ १७ ॥

भग्ना आतपवारणा आतपत्राः ध्वजाश्च येन तथोक्तः चलद्भिर्धराधूलिकुलैः पार्थिवरजश्चयैः आकुलानि ईक्षणानि नेत्राणि येन तथाभूतः तथा धूतस्य कम्पितस्य अश्वानां मातङ्गानां महतां रथानाम् आकरस्य अनवेक्षणः अदर्शनः अदर्शनकर इत्यर्थः अभूत् । विभग्नेत्यत्र विभिन्नेति धूताश्वमातङ्गमहारथाकरानवेक्षण इत्यत्र जनाश्वमातङ्गमहारथव्रजानवेक्षण इति पाठान्तरम् ॥ १५ ॥

सद्य इति । विभिन्नं मर्दितं यत् अञ्जनपुञ्जं तद्वत् तेजो येषां ते मुखैः उच्चकैः महान्तं विषाग्निं विषरूपमनलं विकिरन्तः उद्वमन्तः भयङ्कराकारभृतः भीषणभोगिनः महाभुजङ्गमाः पुरः अग्रतः पथः मार्गान् अतीत्य अतिक्रम्य भृशं त्वरितं ययुः गच्छन्ति स्म । विभिन्नाञ्जनपुञ्जतेजस इत्यत्र विभिन्नाञ्जनपुञ्जसन्निभा इति पथोऽतीत्येत्यत्र परोत्पतेति पाठान्तरम् ॥ १६ ॥

मिलदिति । दिनानां प्रभुः दिनेश्वरः द्विषतः शत्रोर्महासुरस्य अतिमत्सरादिव अतिविद्वेषादिव अन्तं विनाशम् आसूचयितुं प्रकट-

त्विषामधीशस्य पुरोऽधिमण्डलं
शिवाः समेताः परुषं ववासिरे ।
सुरारिराजस्य रणान्तशोणितं
प्रसह्य पातुं द्रुतमुत्सुका इव ॥ १८ ॥

दिवापि तारास्तरलास्तरस्विनीः
परापतन्तीः परितोऽथ वाहिनीः ।
विलोक्य लोको मनसा व्यचिन्तयत्
प्राणव्ययान्तं व्यसनं सुरद्विषः ॥ १९ ॥

ज्वलद्भिरुच्चैरभितः प्रभाभरै-
रुद्भासिताशेषदिगन्तराम्बरम् ।

यितुं भयङ्करः सन् मिलन् सङ्गच्छन् कुण्डलीभवन् महाभीमः यः भुजङ्गः तद्वत् भीषणः तं परिवेषं परिधिम् आदधौ दधार ॥ १७ ॥

त्विषामिति । त्विषाम् अधीशस्य तेजोनिधेः सूर्य्यस्य पुरः अग्रतः अधिमण्डलं मण्डलाकारेण समेताः मिलिताः शिवाः शृगाल्यः सुरारिराजस्य तारकस्य रणान्तशोणितं संग्रामान्ते रुधिरं प्रसह्य बलात् पातुं द्रुतम् उत्सुका इव त्वरावन्त इव परुषं कठोरं यथा तथा ववासिरे चुक्रुशुः । अधिमण्डलमित्यत्राभिमण्डलमिति पाठान्तरम् ॥ १८ ॥

दिवेति । अथानन्तरं लोकः दिवापि तरलाः चपलाः तरस्विनीः वेगवतीः ताराः नक्षत्राणि वाहिनीः सेनाः परितः सेनानां समन्तात् परापतन्तीः सम्पतन्तीः विलोक्य दृष्ट्वा मनसा सुरद्विषः तारकस्य प्राणव्ययान्तं विनाशावसानं व्यसनम् उत्पातं व्यचिन्तयत् विशेषेण चिन्तितवान् । तरस्विनीरित्यत्र तदानिशमिति अथ वाहिनीरित्यत्र अभिवाहिनीरिति प्राणव्ययान्तमित्यत्र प्राणात्ययान्तमिति च पाठान्तरम् ॥ १९ ॥

रवेण रौद्रेण हृदन्तदारणं
पपात वज्रं नभसो निरम्बुदात् ॥ २० ॥
ज्वलद्भिरङ्गारचयैर्नभस्तलं
ववर्ष गाढं सह शोणितास्थिभिः।
धूमं ज्वलन्त्यो व्यसृजन्मुखै रजो
दधुर्दिशो रासभकण्ठधूसरम् ॥ २१ ॥
निर्घातघोषो गिरिशृङ्गशातनो
वनोऽम्बराशाकुहरोदरम्भरिः।
बभूव भूम्ना श्रुतिभित्तिभेदनः
प्रकोपिकालार्जितगर्जितर्जनः ॥ २२ ॥

ज्वलद्भिरिति। अभितः समन्तात् उच्चैः अतिशयेन ज्वलद्भिः प्रभाभरैः तेजःपटलैः उद्भासितम् उद्दीपितम् अशेषं समस्तं दिगन्तरं दिशामवसरः अम्बरमाकाशञ्च यस्य तथोक्तं तथा रौद्रेण दारुणेन रवेण हृदन्तदारणं हृदयविदारणं वज्रं निरम्बुदात् मेघशून्यात् नभसः आकाशात् प्रपात। ज्वलद्भिरित्यत्र चलद्भिरिति पाठान्तरम् ॥ २० ॥

ज्वलद्भिरिति। नभस्तलम् अन्तरीक्षं शोणितास्थिभिः रुधिरैः कङ्कालैश्च तथा ज्वलद्भिः अङ्गारचयैः सह गाढं यथा तथा ववर्ष रक्तास्थिमिश्रमङ्गारचयम् अवर्षदित्यर्थः। तथा दिशः ज्वलन्त्यः सत्यः मुखैः धूमं व्यसृजन् तथा रासभस्य कण्ठवत् धूसरं धूसरवर्णं रजः रेणुं दधुः ॥ २१ ॥

निर्घातेति। निर्घातः अन्तरीक्षात् पतन् शब्दविशेषः तथाचोक्तं यदन्तरीक्षे बलवान् मारुतो मरुताहतः। पतत्यधः स निर्घातो जायते वायुसम्भव इति। तद्वत् घोषो यस्य तथाभूतः गिरिशृङ्गशातनः पर्वतशृङ्गभेदी अम्बरस्य आकाशस्य आशानां दिशां कुहरं

स्खलन्महेभं प्रपतत्तुरङ्गमं
परस्पराश्लिष्टजनं समन्ततः ।
प्रक्षुभ्यदम्भोधिविभिन्नभूधरा-
द्बलं द्विषोऽभूदवनिप्रकम्पात् ॥ २३ ॥
ऊर्ध्वीकृतास्या रविदत्तदृष्टयः
समेत्य सर्वे सुरविद्विषः पुरः ।

रन्ध्रस्येव उदरं बिभर्तीति पूरयतीति तथोक्तः आकाशदिङ्मण्डलव्यापीत्यर्थः घनः मेघः भूम्ना बाहुल्येन श्रुतिः कर्णशष्कुली एव भित्तिः कुड्यं तद्भेदनः तद्विदारणः प्रकोपिणा अतिक्रुद्धेन कालेन यमेन अर्जिता कृता या गर्जिः गर्जनं सकोपनिनाद इत्यर्थः तं तर्जयति भर्त्सयति जयतीत्यर्थः तथाभूतः बभूव उदियाय । गिरिशृङ्गशातन इत्यत्र गिरिशृङ्गघातन इति घनोऽम्बराशाकुहरोदरम्भरिरित्यत्र धराम्बराशाकुहरोदरम्भरिरिति प्रकोपिकालार्जितगर्जतर्जन इत्यत्र प्रकोपिकालार्जितगर्जितस्वन इति च पाठान्तरम् । अथवा गिरिशृङ्गशातनः घनः निविड़ः अम्बराशाकुहरोदरम्भरिः भूम्ना श्रुतिभित्ति भेदनः प्रकोपिकालार्जितगर्जितर्जनः निर्घात एव घोषः बभूवेत्यन्वयः ॥२२॥

स्खलदिति । प्रक्षुभ्यन् प्रकर्षेण क्षोभं सञ्चालनं गच्छन् अम्भोधिः समुद्रः तथा विभिन्नः विश्लिष्टः भूधरः पर्वतः यस्मात् तथाविधात् अवनिप्रकम्पात् भूकम्परूपा दुत्पातात् द्विषः शत्रोस्तारकस्य बलं सैन्यं स्खलन्तः पतन्तः महेभाः महागजा यस्य तथोक्तं प्रपतन्तः तुरङ्गमा अश्वा यस्य तादृशं तथा समन्ततः सर्वतः परस्परम् आश्लिष्टा उपर्युपरि पतिता इति भावः जनाः पदातय इति यावत् यस्य तथाभूतम् अभूत् । चलन्महेभं प्रपतत्तुरङ्गमं परस्पराश्लिष्ट जनं समन्ततः । संक्षुभ्यदम्भोधि विभिन्नभूधरं पुरोद्विषोऽभूदवनिप्रकम्पनमिति पाठे द्विषः शत्रोः पुरः अवनिप्रकम्पनम् अभूत् । चलन्महेभमित्यादि तद्विशेषणं बोध्यम् ॥ २३ ॥

श्वानः स्वरेण श्रवणान्तशातिना
मिथो रुदन्तः करुणेन निर्ययुः ॥ २४ ॥
अपीति पश्यन् परिणामदारुणां
महत्तमां गाढमरिष्टसन्ततिम् ।
दुर्दैवदष्टो न खलु न्यवर्तत
क्रुधा प्रयाणव्यवसायतोऽसुरः ॥ २५ ॥
अरिष्टमाशङ्क्य विपाकदारुणं
निवार्यमाणोऽपि बुधैर्महासुरः ।
पुरः प्रतस्थे महतां वृथा भवे-
दसद्ग्रहान्धस्य हितोपदेशनम् ॥ २६ ॥

ऊर्द्धीकृतास्या इति । सुरविद्विषः तारकस्य पुरः सर्वे वहय इति यावत् श्वानः कुक्कुराः समेत्य मिलित्वा ऊर्द्धीकृतानि उन्नमितानि आस्यानि मुखानि यैः तथोक्ताः रवौ सूर्ये तदभिमुखमिति भावः दत्ता अर्पिता दृष्टिर्यैः तथाभूताः तथा करुणेन कातरेण अतएव श्रवणान्तशातिना श्रुतिकटुनेति भावः स्वरेण मिथः परस्परं रुदन्तः क्रोशन्तः सन्तः निर्ययुः गच्छन्ति स्म ॥ २४ ॥

अपीति । दुर्दैवेन प्रतिकूलदैवेन दष्टः कवलित इति यावत् असुरः तारकः इति उक्तरूपां परिणामदारुणाम् अन्तभीषणां महत्तमाम् अतिमहतीम् अरिष्टसन्ततिम् अशुभपरम्पराम् अरिष्टन्तु शुभाशुभे इत्यमरः । गाढम् अत्यर्थं पश्यन्नपि क्रुधा कोपेन हेतुना प्रयाणव्यवसायतः युद्धयात्रोद्यमात् न खलु नैव न्यवर्त्तत निवृत्तोऽभूत् । अपीति पश्यन्नित्यत्र इति प्रपश्यन्निति महत्तमामित्यत्र महत्तरामिति खल्वित्यत्र खल इति न्यवर्त्ततेत्यत्र निवर्त्तते इति च पाठान्तरम् ॥ २५ ॥

अरिष्टमिति । विपाकदारुणं परिणामभीषणम् अरिष्टम् अम-

क्षितौ निरस्तं प्रतिकूलवायुना
तदीयचामीकरघर्मवारणम् ।
रराज मृत्योरिव पारणाविधौ
प्रकल्पितं हाटकभाजनं महत् ॥ २७ ॥
विजानता भावि शिरोनिकृन्तनं
प्रभ्रेन शोकादिव तस्य मौलिना ।
मुहुर्गलद्भिस्तरलैरलन्तरा-
मरोदि मुक्ताफलबाष्पबिन्दुभिः ॥ २८ ॥

कुलम् आशङ्क्य मत्वा बुधैर्विद्वद्भिर्मन्त्रिभिरिति शेषः निवार्य्यमाणोऽपि प्रयातुमिति शेषः महासुरः तारकः पुरः अग्रतः शत्रूणामिति भावः नगराद्वा प्रतस्थे प्रचचाल । असद्ग्रहेण दुर्ग्रहेण अस्य कार्य्याकार्य्यमजानत इति भावः जनस्य महतां हितोपदेशनं शुभपरामर्शदानं वृथा भवेत् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । निवार्य्यमाणोऽपि बुधैर्महासुर इत्यत्र निवार्य्यमाणो विविधैर्महासुरैरिति हितोपदेशनमित्यत्र हितोपदेशनेति च पाठान्तरम् ॥२६॥

पुनश्च पञ्च महोत्पातान् वर्णयति क्षितावित्यादिना । प्रतिकूलवायुना प्रतीपपवनेन क्षितौ भूमौ निरस्तं निपातितं तस्य इदं तदीयं तारकीयं चामीकरघर्मवारणं काञ्चनातपत्रं मृत्योः यमस्य पारणाविधौ अभ्यवहारव्यापारे प्रकल्पितं स्थापितं महत् हाटकभाजनमिव सौवर्णपात्रमिव रराज शुशुभे । उपमालङ्कारः। हाटकभाजनं महदित्यत्र राजतपानभाजनमिति पाठान्तरम् ॥ २७ ॥

विजानतेति । भावि भविष्यत् शिरोनिकृन्तनं शीर्षच्छेदनं विजानता विशेषेण जनाता निश्चिन्वतेत्यर्थः अतएव प्रभ्रेन प्रकृष्टम्लानवता तस्य तारकस्य मौलिना किरीटेन मौलिः किरीटधम्मिल्लावित्यमरः । शोकादिव तरलैः प्रयाणवेगात् चञ्चलैः अतएव मुहुः गलद्भिः

निवार्य्यमाणैरभितोऽनुयायिभि-
र्गृहीतुकामैरिव तं मुहुर्मुहुः ।
अपाति गृध्रैरभि मौलिमाकुलै-
र्भविष्यदेतन्मरणोपदेशिभिः ॥ २९ ॥

सद्योनिकृत्ताञ्जनसोदरद्युतिं
फणामणिप्रज्वलदंशुमण्डलम् ।
निर्यद्विषोल्कानलगर्भफूत्कृतं
ध्वजे जनस्तस्य महाहिमैक्षत ॥ ३० ॥

स्रवद्भिः मुक्ताफलान्येव वाष्पबिन्दवः अश्रुलेशाः तैः तद्व्याजेनेति भावः अनन्तराम् अतिशयेन अरोदि रुदितम् । रूपकानुप्राणितोत्प्रेक्षालङ्कारः । शिरोनिकृन्तनमित्यत्र शिरोविकर्त्तनमिति प्रश्नेनेत्यत्र सस्नेनेति च पाठान्तरम् ॥ २८ ॥

निवार्य्यमाणैरिति । आकुलैः सम्भ्रान्तैः अनुयायिभिः अनुचरैः असुरराजस्येति शेषः अभितः सर्वतः निवार्य्यमाणैरपि ताड्यमानैरपि गृध्रैः पक्षिविशेषैः भविष्यत् एतस्य तारकस्य मरणम् उपदिशन्ति शंसन्तीति तथाभूतैः सद्भिः तं तारकं गृहीतुं धर्त्तुम् आहारार्थमिति भावः कामो येषां तादृशैरिव मौलिं किरीटम् अभि उपरीत्यर्थः अपाति पतितम् अभिमौलिमाकुलैरित्यत्राभिमौलिव्याकुलैरिति भविभविष्यदेतन्मरणोपदेशिभिरित्यत्र तस्याननूत्थानविनाशदर्शिभिरिति च पाठान्तरम् ॥ २९ ॥

सद्य इति । जनो लोकः तस्य तारकस्य ध्वजे सद्यः तत्क्षणं निकृत्तं छेदितं यत् अञ्जनं कज्जलं तस्य सोदरा सदृशी द्युतिर्यस्य तथोक्तं फणामणौ फणरत्ने प्रज्वलत् प्रस्फुरत् अंशुमण्डलं मयूखचयः यस्य तादृशं निर्यन् निर्गच्छन् विषमेव उल्कानलः गर्भे अभ्यन्तरे यस्य तादृशं फूत्कृतं फूत्कारः निश्वास इत्यर्थः यस्य तथाभूतं महाहिं

रथाश्वकेशावलिकर्णचामरं
ददाह बाणासनबाणबाणधीन् ।
अकाण्डतश्चण्डतरो हुताशन-
स्तस्यातनुस्यन्दनधूर्यगोचरः ॥ २१ ॥
इत्याद्यरिष्टैरशुभोपदेशिभि-
र्विहन्यमानोऽप्यसुरः पुनः पुनः ।
यदा मदान्धो न गतान्न्यवर्तता-
म्बरात्तदाभून्मरुतां सरस्वती ॥ २२ ॥

महाभुजङ्गम् ऐक्षत दृष्टवान् । सद्योनिकृत्ताञ्जनसोदरद्युमित्यत्र सद्योनिकृत्ताञ्जनसोदरं क्वचिदिति निर्यद्विषोल्कानलगर्भफूत्कृतमित्यत्र निर्य्यद्विषोल्काततगर्भफूत्कृतमिति च पाठान्तरम् ॥ २० ॥

रथाश्वेति । अकाण्डतः सहसा तस्य तारकस्य अतनुर्महान् यः स्यन्दनः रथः तस्य धूर्य्यः अग्रभागः तद्गोचरः तत्र लग्न इति भावः चण्डतरः अतिभीषणः हुताशनः अग्निः रथस्य अश्वानां केशावलि कर्णचामरं लोमराजिं कर्णस्थितचामरञ्च तथा बाणासनबाणबाणधीन् धनुर्बाणतूणान् ददाह भस्मीचकार । रथाश्वेत्यत्र रथस्येति केशावलि कर्णचामरमित्यत्र केशावलि कर्णचामरानिति बाणासनबाणबाणधीनित्यत्र बाणासनबाणबाणधीनिति अकाण्डत इत्यत्राखण्डन इति धूर्य्यगोचर इत्यत्र धूर्य्यगोद्गत इति च पाठान्तरम् ॥ २१ ॥

इतीति । इत्यादिभिः अशुभोपदेशिभिः अमङ्गलशंसिभिः अरिष्टैः उत्पातैः पुनः पुनः विहन्यमानः प्रतिषिध्यमानोऽपि असुरः यदा मदेन अहङ्कारेण अन्धः हिताहितविवेकशून्यः सन् गतात् प्रयाणात् न न्यवर्त्तत न परावृत्ते, तदा अम्बरात् आकाशात् मरुतां देवानां मरुतौ पवनामरावित्यमरः । सरस्वती आकाशवाणीत्यर्थः

मदान्ध ! मा गा भुजदण्डचण्डिमा-
वलेपतो मन्मथहन्तृसूनुना ।
सुरैः सनाथेन पुरन्दरादिभिः
समं समन्तात्समरं विजित्वरैः ॥ ३३ ॥
गुहोऽसुरैः षड्दिनजातमात्रको
निदाघधामेव निशातमोभरैः ।
विषह्यते नाभिमुखोहि सङ्गरे
कुतस्त्वया तस्य समं विरोधिता ॥ ३४ ॥

अभूत् उच्चचार । इत्याद्यरिष्टैरित्यत्र इत्याद्यनिष्टैरिति न गता-न्यवर्त्ततेत्यत्र नच विन्यवर्त्ततेति अम्बरादित्यत्राम्बरे इति च पाठा-न्तरम् ॥ ३२ ॥

मदान्धेति । रे मदान्ध ! ऐश्वर्यमदमत्त ! भुजदण्डयोः बाहु-दण्डयोश्चण्डिमा प्रचण्डत्वं तेन यः अवलेपः गर्वः तस्मात् हेतोः सम॰न्तात् सर्वतः विजित्वरैः विजयिभिः पुरन्दरादिभिः इन्द्रादिभिः सुरैः देवैः सनाथेन सहायेन मन्मथहन्तुः शङ्करस्य सूनुना कुमारेण समं सह समरं संग्रामं मा गाः न गच्छ । मन्मथहन्तृसूनुनेत्यत्र मन्मथ-शत्रुसूनुनेति सनाथेनेत्यत्र सनाथैरिति पुरन्दरादिभिरित्यत्र त्रिदिवे-श्वरादिभिरिति समरमित्यत्र समरे इति च पाठान्तरम् ॥ ३३ ॥

गुह इति । षड्दिनजातमात्रकः गुहः कुमारः पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुह इत्यमरः । सङ्गरे युद्धे अभिमुखः निशा-तमोभरैः रजनीतिमिरनिचयैः निदाघधामेव उष्णरश्मिरिव असुरैः न हि नैव विषह्यते सोढुं शक्यते । त्वया समं सह तस्य गुहस्य विरोधिता कुतः कथं नैव विरोधः सम्भवेदित्यर्थः । गुहोऽसुरैरित्यत्र महासुरैरिति विषह्यते नाभिमुखोहि इत्यत्र विसह्यते सोऽभिमुखं नेति कुतस्त्वया तस्येत्यत्र कुतस्त्वियं तेनेति पाठान्तरम् । उपमाल-ङ्कारः ॥ ३४ ॥

अभ्रंलिहैः शृङ्गशतैः समन्ततो
दिक् चक्रवालैः स्थगितस्य भूभृतः ।
क्रौञ्चस्य रन्ध्रं विशिखेन निर्ममे
येनाहवस्तस्य सह त्वया कुतः ॥ ३५ ॥

लब्ध्वा धनुर्वेदमनङ्गविद्विष-
स्त्रिःसप्तकृत्वः समरे महीभुजाम् ।
कृत्वाभिषेकं रुधिराम्बुभिर्घनैः
स्वक्रोधवह्निं शमयाम्बभूव यः ॥ ३६ ॥

न जामदग्न्यः क्षयकालरात्रिकृत्
स क्षत्रियाणां समराय वल्गति ।

अभ्रंलिहैरिति । येन गुहेन अभ्रंलिहैः गगनस्पर्शिभिः शृङ्गशतैः शिखरनिचयैः तथा दिशां चक्रवालैः मण्डलैः समन्ततः सर्वतः स्थगितस्य आच्छादितस्य आच्छादितदिङ्मण्डलस्येति भावः क्रौञ्चस्य तदाख्यस्य भूभृतः पर्वतस्य रन्ध्रं छिद्रं विशिखेन एकेन शरेणेत्यर्थः निर्ममे चक्रे त्वया सह तस्य गुहस्य आहवः संग्रामः कुतः ? न सम्भवतीति भावः । दिक्चक्रवालैः स्थगितस्येत्यत्र दिक्चक्रवालस्थगितस्येति विशिखेन निर्ममे इत्यत्र स्वशरैर्विनिर्ममे इति तस्य सह त्वया कुत इत्यत्र तेन कृतः समोभवानिति च पाठान्तरम् ॥ ३५ ॥

अथ युष्मेनाह लब्ध्वेति यः अनङ्गविद्विषः कामशत्रोः सकाशात् धनुर्वेदं युद्धविद्यामित्यर्थः लब्ध्वा प्राप्य त्रिःसप्तकृत्वः एकविंशतिवारं समरे युद्धे महीभुजां राज्ञां घनैः रुधिराम्बुभिः शोणितजलैः अभिषेकं स्नानम् उपलक्षणमेतत् पितृतर्पणञ्चेति भावः कृत्वा स्वस्य आत्मनः क्रोधवह्निं पितृनिधनजनितं कोपानलं शमयाम्बभूव निर्वापयामास । कृत्वाभिषेकमित्यत्र कृताभिषेक इति पाठान्तरम् ॥३६॥

नेति । क्षत्रियाणां क्षयकालरात्रिकृत् प्रलयकर इत्यर्थः स

येन त्रिलोकीसुभटेन तेन ते
कुतोऽवकाशः सह विग्रहग्रहे ॥ ३७ ॥
त्यजाशु गर्वं मदमूढ़ ! मा स्म गाः
स्मरारिसूनोर्वरशक्तिगोचरम् ।
तमेव नूनं शरणं व्रजाधुना
जगत्सुवीरं स चिराय जीव तत् ॥ ३८ ॥
श्रुत्वेति वाचं वियतो गरीयसीं
क्रोधादहङ्कारपरो महासुरः ।
प्रकम्पिताशेषजगत्त्रयोऽपि सन्
अकम्पतोच्चैर्दिवमभ्यधाच्च सः ॥ ३९ ॥

जामदग्न्यः परशुरामः येन कुमारेण सह समराय संग्रामाय न कल्पते न चलति न समर्थो भवतीत्यर्थः त्रिलोकीसुभटेन त्रिभुवनैकवीरेण तेन गुहेन सह ते तव विग्रहग्रहे संग्रामनिर्बन्धे अवकाशः उद्योगः कुतः ? नैव सम्भवतीति भावः । त्रिलोकीसुभटेनेत्यत्र त्रिलोकीतिलकेनेति कुतोऽवकाशः सह विग्रहग्रहे इत्यत्र कुतोऽवकाशो सह विग्रहग्रहे इति पाठान्तरम् ॥ ॥ ३७ ॥

त्यजेति । रे मदमूढ़ ! आशु शीघ्रं गर्वम् अहङ्कारं त्यज स्मरारेः कामशत्रोः हरस्य सूनोः पुत्रस्य वरा महती या शक्तिः तद्गोचरं तस्या विषयं मा स्म गाः न गच्छ, अधुना तमेव जगत्सुवीरं भुवनैकवीरं नूनं निश्चितं शरणं व्रज, तत् तदा स तस्य शरणागतस्त्वं चिराय जीव चिरजीवी भव । जगत्सुवीरमित्यत्र जगत्प्रवीरमिति स चिरायेत्यत्र सुचिरायेति च पाठान्तरम् ॥ ३८ ॥

श्रुत्वेति । अहङ्कारपरः दर्पोद्धतः स महासुरः तारकः इति पूर्वोक्तां वियतः आकाशस्य गरीयसीं महतीं वाचं श्रुत्वा प्रकम्पितम् अशेषं समग्रं जगतां त्रयं येन तथाभूतोऽपि सन् क्रोधात् अकम्पत

किं ब्रूथ रे व्योमचरा ! महासुराः !
स्मरारिसूनुप्रतिपक्षवर्तिनः ।
मदीयबाणव्रणवेदना हि सा-
धुना कथं विस्मृतिगोचरीकृता ॥ ४० ॥
कटुस्वरैः प्रालपथाम्बरस्थिताः !
शिशोर्बलात्षड्दिनजातकस्य किम् ।
श्वानः प्रमत्ता इव कार्तिके निशि
स्वैरं वनान्ते मृगधूर्तका इव ॥ ४१ ॥

कम्पितवान् दिवमाकाशम् उच्चैः अभ्यधाच्च अब्रवीच्च । सम्रकम्पतोच्चैर्दिवमभ्यधाच्च स इत्यत्र स नाकम्पतोच्चैर्दिवमभ्यधात्तत इति पाठान्तरम् ॥ ३९ ॥

किमिति । रे व्योमचरा अन्तरीक्षचारिणः ! किं ब्रूथ वदथ, महासुराः महान्तः असुराः स्मरारिसूनोः गुहस्य प्रतिपक्षवर्त्तिनः विरोधिनः वर्त्तन्ते इति शेषः । एतान् स्मरारिसुतो नैव विमर्हिष्यते इति भावः । अथवा रे स्मरारिसूनोः प्रतिपक्षवर्त्तिनः आनुकूल्यकारिण इत्यर्थः व्योमचरा महासुराः महान्तः सुराः देवाः ! किं ब्रुथेत्यन्वयः । अधुना साम्प्रतं सा अनेकशः अनुभूतेति भावः मदीयबाणव्रणवेदना मच्छरक्षतज्वाला कथं हि विस्मृतिगोचरीकृता विस्मृतेत्यर्थः युष्माभिरिति शेषः । रे इत्यत्र हे इति स्मरारीत्यत्र मखारीति मदीयबाणव्रणवेदना हि साधुना कथं विस्मृतगोचरीकृतेत्यत्र मदीयबाणव्रणवेदनामहोऽधुनैव विस्मृत्य गताः स्वपृष्ठत इति च पाठे मदीयबाणव्रणवेदनां विस्मृत्य अधुना एव स्वपृष्ठतः गताः यूयमिति शेषः अहो आश्चर्यमित्यर्थः ॥ ४० ॥

कटुस्वरैरिति । रे अम्बरस्थिताः ! आकाशचारिणः ! कार्त्तिके मासि प्रमत्ताः मदोद्धताः श्वान इव कुकुरा इव शुनां कार्त्तिके मासि

सङ्गेन वो भर्गतपस्विनः शिशु-
र्वराक एषोऽन्तमवाप्स्यति ध्रुवम् ।
अतस्करस्तस्करसङ्गतो यथा
तद्वो निहन्मि प्रथमं ततोऽप्यमुम् ॥ ४२ ॥

इतीरयत्युग्रतरं महासुरे
महाकृपाणं कलयत्यलं क्रुधा ।
परस्परोत्पीड़ितजानवो भयात्
नभश्चरा दूरतरं विदुद्रुवुः ॥ ४३ ॥

मदौद्धत्यं प्रसिद्धम् । तथा निशि रात्रौ वनान्ते अरण्यसीमायां मृगधूर्त्तका इव शृगाला इव यूयं षड्दिनजातकस्य शिशोः कुमारस्य बलात् बलमाश्रित्येत्यर्थः यवर्ये पश्यतो । किं कथं कटुस्वरैः कठोरनादैः प्रालपथ प्रलापं कुरुथ ? । प्रलापोऽनर्थकं वच इत्यमरः । प्रालपथेत्यत्र ईरयथेति कार्त्तिके निशीत्यत्र कार्त्तिकीनिशीति च पाठान्तरम् ॥ ४१ ॥

सङ्गेनेति । भर्गतपस्विनः तपस्विनो भर्गस्य हरस्य एष वराकः निर्दोष इत्यर्थः शिशुः तस्कराणां चौराणां सङ्गतः संसर्गात् अतस्करः अचौरः साधुरित्यर्थः यथा वः युष्माकं दुर्जनानामिति भावः सङ्गेन ध्रुवं निश्चितम् अन्तं नाशम् अवाप्स्यति प्राप्स्यति । तत् तस्मात् प्रथमम् आदौ वः युष्मान्, ततः युष्मन्निधनानन्तरमित्यर्थः अमुमपि शिशुमपि निहन्मि नाशयामि । ततोऽप्यमुमित्यत्र ततस्त्वमिति पाठान्तरम् ॥ ४२ ॥

इतीति । महासुरे तारके इति इत्थम् ईरयति कथयति तथा उग्रतरम् अतिभीषणं महाकृपाणं महान्तमसिं क्रुधा कोपेन अलमत्यर्थं कलयति गृह्णति सति नभश्चराः आकाशचारिणः देवाः परस्परम् उत्पीड़िता उद्घर्षिता जानवः जरुपर्वाणि यैः तथोक्ताः

ततोऽवलेपाद्विकटं विहस्य स
व्यधत्त कोशादसिमुत्तमं बहिः ।
रथं द्रुतं प्रापय वासवान्तिकं
नन्वित्यवोचन्निजसारथिं रथी ॥ ४४ ॥

मनोऽतिवेगेन रथेन सारथिप्रणोदितेन प्रचलन्महासुरः ।
ततः प्रपेदे सुरसैन्यसागरं भयङ्कराकारमपारमग्रतः ॥ ४५ ॥

पुरः सुराणां पृतनां प्रथीयसीं
विलोक्य वीरः पुलकं प्रमोदजम् ।

जङ्घाल प्रसृता जानूरुपर्वाष्ठीवदस्त्रियामित्यमरः । सन्तः भयात् दूरतरम् अतिदूरम् विदुद्रुवुः पलायाञ्चक्रिरे । क्रुधेवत प्रुवमिति पाठान्तरम् ॥ ४२ ॥

तत इति । ततः अनन्तरं रथी रथारूढः स तारकः अवलेपात् गर्वात् विकटं यथा तथा विहस्य उच्चैर्हासं कृत्वेत्यर्थः उत्तमं महान्तम् असिं कोशात् आवरणविशेषात् बहिः व्यधत्त कृतवान् ननु भोः द्रुतं शीघ्रं रथं वासवस्य इन्द्रस्य अन्तिकं समीपं प्रापय इति निजसारथिं स्वसूतम् अवोचत् उक्तवान् । व्यधत्त कोशादसिमुत्तमं बहिरित्यत्राभिकोशमाधाद्दसिमंशुभासुरमिति नन्वित्यवोचन्निजसारथिं रथीत्यत्र वदेत्यवोचत् प्रति सारथिं द्रुतमिति च पाठान्तरम् । अंशुभिः प्रभाभिः भासुरं समुज्ज्वलम् असिम् अभिकोशं कोशे विभक्त्यर्थे अव्ययीभावः । आधात् निहितवानिति विशेषः ॥ ४४ ॥

मन इति । ततः अनन्तरं मनोऽतिवेगेन मनसाऽपि अधिकजवेन सारथिना प्रणोदितेन चालितेन रथेन प्रचलन् महासुरः अग्रतः अपारम् अशेषं भयङ्कराकारं सुरसैन्यसागरं प्रपेदे प्राप ॥ ४५ ॥

पुर इति । अथ सुरसैन्यसागरप्राप्त्यनन्तरं स वीरः तारकः पुरः सम्मुखतः प्रथीयसीम् अतिमहतीं सुराणां पृतनां सेनां विलोक्य

बभार भूम्नाथ स बाहुदण्डयोः
प्रचण्डयोः सङ्गरकेलिकौतुकी ॥ ४६ ॥

ततो महेन्द्रस्य चराश्चमूचरा
रणान्तलीलारभसेन भूयसा ।
पुरः प्रचेलुर्मनसोऽतिवेगिनो
युयुत्सुभिः किं समरे विलम्ब्यते ॥ ४७ ॥

पुरःस्थितं देवरिपोश्चमूचरा
बलद्विषः सैन्यसमुद्रमभ्ययुः ।
भुजं समुत्क्षिप्य परेभ्य आत्मनो-
ऽभिधानमुच्चैरभितो न्यवेदयन् ॥ ४८ ॥

इष्टा सङ्गरः संग्राम एव केलिः क्रीड़ा तत्र कौतुकी उल्लासी सन् प्रमोदजम् आनन्दजं प्रचण्डयोः बाहुदण्डयोः पुलकं लोमहर्षं भूम्ना अतिशयेन बभार दधार । भूम्नाथ स बाहुदण्डयोरित्यत्र भूम्ना बहुबाहुदण्डयोरिति पाठान्तरम् ॥ ४६ ॥

तत इति । ततः अनन्तरं महेन्द्रस्य देवराजस्य चमूषु चरन्तीति चमूचराः सैन्यवर्त्तिनः मनसः अतिवेगिनः अतिवेगवन्तः अतिद्रुतगामिन इत्यर्थः चराः स्पशाः अपसर्पश्चरः स्पश इत्यमरः भूयसा समधिकेन रणान्तलीलारभसेन सङ्गरसीमासु विलासहर्षेण रभसो वेगहर्षयोरित्यमरः । पुरः अग्रतः प्रचेलुः प्रचलन्ति स्म । तथाहि समरे युयुत्सुभिः योद्धुमिच्छुभिः किं विलम्ब्यते ? विलम्बः क्रियते ? नैवेत्यर्थः । ततो महेन्द्रस्य चरा इत्यत्र ततोऽसुरेन्द्रानुचरा इति पाठे असुरेन्द्रस्य तारकस्य अनुचराः अनुगामिनः चमूचराः सैनिका इत्यर्थः ॥ ४७ ॥

पुर इति । देवरिपोः देवानां शत्रोः तारकस्य चमूचराः सैनिकाः पुरः अग्रतः स्थितं बलद्विषः इन्द्रस्य सैन्यसमुद्रम् अभ्ययुः अभिगच्छ-

पुरोगतं दैत्यचमूमहार्णवं दृष्ट्वा परं चुक्षुभिरे महासुराः ।
पुरारिसूनोर्नयनैककोणके ममुर्भटास्तस्य रणेऽवहेलया ॥४९॥
द्विषद्बलत्रासविभीषिताश्चमूर्दिवौकसामन्धकशत्रुनन्दनः ।
अपश्यदुद्दिश्य महारणोत्सवं प्रसादपीयूषधरेण चक्षुषा ॥५०॥

न्ति स्म । तथा अभितः समन्तात् भुजं बाहुं समुत्क्षिप्य समुद्यम्य परेभ्यः शत्रुभ्यः आत्मनः स्वस्य अभिधानं नामधेयम् अयमहमुपधन्वेत्येवंविधमिति भावः उच्चैर्यथास्यात्तथा न्यवेदयन् व्यज्ञापयन् । पुरःस्थितमित्यत्र पुरःसरा इति बलद्विष इत्यत्र सुरद्विष इति परेभ्य इत्यत्र सहेलमिति च पाठान्तरम् ॥ ४८ ॥

पुरोगतमिति । महान्तः सुरा देवाः पुरोगतं सम्मुखवर्त्तिनं दैत्यचमूमहार्णवम् असुरसैन्यसागरं दृष्ट्वा परम् अत्यर्थं चुक्षुभिरे चकम्पिरे । तस्य पुरारिसूनो कुमारस्य रणे संग्रामे अवहेलया अवलीलया विसारिते इति शेषः नयनस्य एककोणके एकस्मिन् अंशे इत्यर्थः भटाः असुरवीरा इत्यर्थः ममुः मान्ति स्म अवकाशं प्रापुरित्यर्थः । कुमारस्तान् न गणयामासेति भावः । दृष्ट्वा परं चुक्षुभिरे महासुरा इत्यत्र दृष्ट्वाभितश्चुक्षुभिरेऽखिलाः सुरा इति ममुर्भटास्तस्य रणेऽवहेलयेत्यत्र ममौ पुरोभावि रणे हि हेलयेति च पाठान्तरे ममौ दैत्यचमूमहार्णव इति कर्त्तृपदेनान्वयः ॥ ४९ ॥

द्विषदिति । अन्धकशत्रुनन्दनः कुमारः महारणोत्सवं उद्दिश्य लक्षयित्वा प्रसादः अनुग्रह एव पीयूषः अमृतं तस्य धरतीति धरः तेन प्रसादामृतवर्षिणेत्यर्थः चक्षुषा द्विषतां शत्रूणां बलेभ्यः सैन्येभ्यः यस्त्रासः तेन विभीषिताः विशेषेण भयं प्राप्ताः दिवौकसां देवानां चमूः सेनाः अपश्यत् अवलोकयामास तासु कृपादृष्टिमकरोदिति भावः । द्विषद्बलत्रासविभीषिताश्चमूरित्यत्र द्विषद्बलत्रासविसङ्कुलां चमूमिति महारणोत्सव मित्यत्र महाहवे बलमिति च पाठान्तरम् ॥ ५० ॥

उत्साहिताः शक्तिधरस्य दर्शनात्
मृधे महेन्द्रप्रमुखा मखाशनाः।
अहं मृधे जेतुमरीनरीरमन्
न कस्य वीर्याय वरस्य सङ्गतिः॥ ५१ ॥

परस्परं वज्रधरस्य सैनिका द्विषोऽपि योद्धुं स्वकरोद्धृतायुधाः।
वैतालिकश्रावितताराविक्रमाभिधानमीयुर्विजयैषिणो रणे ५२

उत्साहिता इति। शक्तिधरस्य कुमारस्य मृधे युद्धे दर्शनात् कृपावलोकनात् उत्साहिता सञ्जातोत्साहाः महेन्द्रप्रमुखाः इन्द्रादयः मखाशनाः यज्ञभोजिनः देवा इत्यर्थः अहं मृधे युद्धे अरीन् शत्रून् जेतुम् अलमिति शेषः इत्येवम् अरीरमन् परस्परं स्पर्द्धया रमन्ते-स्मेत्यर्थः। वरस्य श्रेष्ठस्य सङ्गतिः समागमः साहाय्यमिति भावः कस्य जनस्य वीर्य्याय पराक्रमाय न? सर्वस्यैव वीर्य्याय भवतीत्यर्थः महत्सहायः कार्य्यान्तं क्षोदीयानपि गच्छतीति भावः सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। मखाशना इत्यत्र सुधाशिन इति अहं मृधे इत्यत्र अहंयुष इति च पाठान्तरे सुधाशिन अमृतभोजिनः देवा इति तथैवार्थः। अहंयुषः अहमित्यव्ययम् अहमहमिकामित्यर्थं जुषन्ति सेवन्ते आश्र-यन्तीत्यर्थः तथोक्ताः सन्तः अरीन् जेतुम् अरीरमन् उद्यमं चक्रुरित्यर्थः॥ ५१ ॥

परस्परमिति। वज्रधरस्य इन्द्रस्य द्विषोऽपि शत्रोरपि तार-कस्य चेत्यर्थः सैनिकाः स्वकरैः निजबाहुभिः उद्धृतानि आयुधानि अस्त्राणि यैः तथाभूताः विजयैषिणः विजिगीषवः सन्तः परस्परम् अन्योन्यं योद्धुं वैतालिकैः स्तुतिपाठकैः श्रावितं तारस्य महतः विक्रमस्य पराक्रमस्य अभिधानं कीर्त्तनं यस्मिन् तद् यथा तथा रणे संग्रामभूमौ ईयुः समाजग्मुः। स्वकरोद्धृतायुधा इत्यत्र प्रवरोद्धृता-

सङ्ग्रामं प्रलयाय सन्निपततो वेलामतिक्रामतो
वृन्दारासुरसैन्यसागरयुगस्याशेषदिग्व्यापिनः ।
कालातिथ्यभुजो बभूव बहलः कोलाहलः क्रोशनः
शैलोत्तालतटीविघट्टनपटुर्ब्रह्माण्डकुक्षिम्भरिः ॥ ५३ ॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
सुरासुरसैन्यसंघट्टो नाम पञ्चदशः सर्गः ।

---

युधा इति वैतालिकश्रावित तारविक्रमाभिधानमित्यत्र वैमानिकैः श्रावितमानसत्क्रमाभिधानमिति च पाठान्तरम् ॥ ५२ ॥

संग्राममिति प्रलयाय विध्वंसाय संग्रामं सन्निपततः समागच्छतः वेलां मर्य्यादां सदाचारमतिक्रामतः अशेषदिग्व्यापिनः कालस्य यमस्य आतिथ्यम् अतिथिसत्कारं भुङ्क्ते इति तथोक्तस्य शमनसदनोद्यतस्येति भावः वृन्दारासुरसैन्यसागरयुगस्य देवासुरसैन्यसमुद्रद्वयस्य बहलः महान् क्रोशनः अव्यक्तशब्दमयः शैलानां पर्वतानाम् उत्ताला उन्नता या तट्यः प्रदेशाः तासां विघट्टने विश्लेषणे विदारणे वा पटुः समर्थः ब्रह्माण्डस्य जगतः कुक्षिम्भरिः उदरपूरकः कोलाहलः कलरवः बभूव । संग्रामं प्रलयायेत्यत्र संग्रामप्रलयायेति अशेषदिग्व्यापिन इत्यत्रारोहदिग्व्यापिन इति कालातिथ्यभुजो बभूव बहलः कोलाहलः क्रोशन इत्यत्र कालातिथ्यवृषप्रदान बहलः कोलाहलः क्रोधिन इति च पाठान्तरम् । शार्दूलविक्रीड़ितं वृत्तं सूर्य्याश्वैर्यदि मः स जौ सततगाः शार्दूलविक्रीड़ितमिति तल्लक्षणात् ॥ ५२ ॥

इति पञ्चदशः सर्गः ।

---

# षोड़शः सर्गः।

अथान्योन्यं विमुक्तास्त्रशस्त्रजालैर्भयङ्करैः।
युद्धमासीत्सुनासीरसुरारिबलयोर्महत् ॥ १ ॥
पत्तिः पत्तिमभीयाय रणाय रथिनं रथी।
तुरङ्गस्थं तुरङ्गस्थो दन्तिस्थं दन्तिनि स्थितः ॥ २ ॥
युद्धाय धावतां धीरं वीराणामितरेतरम्।
वैतालिकाः कुलाधीशा नामान्यलमुदाहरन् ॥ ३ ॥
पठतां बन्दिवृन्दानां प्रवीरा विक्रमावलिम्।

अथेति। अथानन्तरं सुनासीरस्य इन्द्रः सुरारिस्तारकः तयोर्बलयोः सैन्ययोः अन्योन्यं परस्परं भयङ्करैः विमुक्तैः विक्षिप्तैः अस्त्राणां शराणां शस्त्राणां तलवारादीनां जालैः समूहैः महत् अत्यन्तं युद्धमासीत्। महदित्यत्र द्वयोरिति पाठान्तरम्। अनुष्टुब्वृत्तमस्मिन् सर्गे ॥ १ ॥

पत्तिरिति। रणाय संग्रामाय पत्तिः पदातिः पत्तिं पादचारिणं रथी रथारूढ़ः रथिनं तुरङ्गस्थः अश्वारूढ़ः तुरङ्गस्थं दन्तिनि हस्तिनि स्थितः दन्तिस्थं हस्त्यारूढ़म् अभीयाय अभ्यधावत् ॥ २ ॥

युद्धायेति। कुलाधीशाः कुलाचार्य्याः कुलाभिज्ञा इति यावत् वैतालिकाः स्तुतिपाठकाः इतरेतरं परस्परं युद्धाय धीरं सावष्टम्भमित्यर्थः धावतां अभिद्रवतां वीराणां नामानि अयममुकनामा वीरो धावतीत्येवं रूपाणि अलम् अतिशयेन उदाहरन् समकीर्त्तयन् ॥३॥

पठतामिति। युद्धोत्सुकाः रणतत्पराः प्रवीराः महाभटाः

क्षणं विलम्ब्य चित्तानि ददुर्युद्धोत्सुकाः पुरः ॥ ४ ॥
सङ्ग्रामानन्दवर्धिणी विग्रहे पुलकाञ्चिते ।
आसीत्कवचविच्छेदो वीराणां मिलतां मिथः ॥ ५ ॥
निर्दयं खड्गभिन्नेभ्यः कवचेभ्यः समुत्थितैः ।
आसन् व्योमदिशस्तूलैः पलितैरिव पाण्डुराः ॥ ६ ॥
खड्गा रुधिरसंलिप्ताश्चण्डांशुकरभासुराः ।

विक्रमावलिं पराक्रमपरम्पराम् अमुकोऽमुकयुद्धं जितवान् अमुकेनायं पराजित इत्येवं रूपामिति भावः पठतां स्तुवतां वन्दिवृन्दानां वैतालिकगणानां पुरः अग्रतः क्षणं किञ्चित् कालं विलम्ब्य युद्धव्यापारे मनोनिवेशात् तद्युद्धसमाधानकालमतीत्येति यावत् चित्तानि मनांसि तेषां विक्रमावलिपाठश्रवणे इति शेषः ददुः दत्तवन्तः । पठतां वन्दिवृन्दानां प्रवीरा विक्रमावलीमित्यत्र पठिता वन्दिवृन्देन प्रवीरवीरुदावलीति पुर इत्यत्र अपीति च पाठान्तरम् । वन्दिवृन्देन प्रवीराणां वीरुदावली स्तोत्रावली पठिता । अतः युद्धोत्सुका अपि वीरा इति शेषः क्षणं विलम्ब्य तच्छ्रवणोत्सुकतया किञ्चित्कालम् अतीत्य चित्तानि मनांसि युद्धे इति शेषः ददुरित्यर्थः ॥ ४ ॥

संग्रामेति । संग्रामे य आनन्दः उत्साहः तेन वर्द्धिष्णौ वर्द्धनशीले स्फीतवतीत्यर्थः पुलकाञ्चिते रोमहर्षसमन्विते मिथः अन्योन्यं मिलतां सङ्गच्छतां युध्यमानानामित्यर्थः वीराणां विग्रहे शरीरे कवचविच्छेदः वर्मविरहः आसीत् परस्परं वर्मच्छेदः कृत इति भावः । पुलकाञ्चिते इत्यत्र पुलकाङ्किते इति पाठान्तरम् ॥ ५ ॥

निर्दयमिति । व्योमदिशः आकाशं दिशश्चेत्यर्थः निर्दयं निष्ठुरं यथा तथा खड्गैः भिन्नेभ्यः छिन्नेभ्यः कवचेभ्यः वर्मभ्यः समुत्थितैः समुड्डीनैः तूलैः कार्पासैः पलितैरिव जराजनितशौक्ल्यैरिव पाण्डुराः धवला आसन् समुत्थितैरित्यत्र समुच्छ्रितैरिति पाठान्तरम् ॥ ६ ॥

खड्गा इति । वीराणां खड्गाः असयः रुधिरैः रक्तैः संलिप्ताः

इतस्ततोऽपि वीराणां विद्युतां वैभवं दधुः ॥ ७ ॥
विसृजन्तो मुखैर्ज्वाला भीमा इव भुजङ्गमाः ।
विसृष्टाः सुभटै रुष्टैर्व्योम व्यानशिरे शराः ॥ ८ ॥
बाढं वपूंषि निर्भिद्य धन्विनां निघ्नतां मिथः ।
अशोणितमुखा भूमिं प्राविशन्दूरमाशुगाः ॥ ९ ॥
निर्भिद्य दन्तिनः पूर्वं पातयामासुराशुगाः ।
पेतुः प्रवरयोधानां प्रीतानामाहवोत्सवे ॥ १० ॥

अतएव इतस्ततः चण्डांशोः सूर्य्यस्य करा इव किरणा इव भासुराः दीप्तिमन्तः अथवा इतस्ततः चण्डांशोः सूर्य्यस्य करैः भासुराः दीप्यमाना इत्यर्थः विद्युतां वैभवं प्रभावं सादृश्यमित्यर्थः दधुः प्रापुः । अत्रासम्भवद्वस्तुसम्बन्धरूपा निदर्शना । तदुक्तं दर्पणे । सम्भवन्वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शनेति । विद्युतामित्यत्र वैद्युतमिति पाठान्तरम् ॥ ७ ॥

विसृजन्त इति रुष्टैः क्रुद्धैः सुभटैः सुवीरैः विसृष्टाः विमुक्ताः शराः भीमा भयङ्करा भुजङ्गमा इव मुखैः अग्रभागैः वदनैश्च ज्वालाः अग्निशिखाः विसृजन्तः विक्षिपन्तः सन्तः व्योम आकाशं व्यानशिरे व्यापुः आच्छादयामासुरित्यर्थः । रुष्टैरित्यत्र तुष्टैरिति पाठान्तरम् । उपमालङ्कारः ॥ ८ ॥

वाढ़मिति । मिथः अन्योन्यं निघ्नतां विध्यतां धन्विनां धनुर्धराणाम् आशुगाः शराः वपुषि शरीरे वाढं दृढ़मित्यर्थः निर्भिद्य अशोणितमुखा शोणिताविप्राप्ताः सन्तः वेगातिशयादिति भावः भूमिं पृथिवीं दूरम् अत्यर्थं प्राविशन् । वाढ़मित्यत्र गाढ़मिति पाठान्तरम् ॥ ९ ॥

निर्भिद्येति । आहवः युद्धमेव उत्सवः तस्मिन् प्रीतानां प्रवरयोधानां महावीराणाम् आशुगाः शराः पूर्वं प्राक् निर्भिद्य विद्धा दन्तिनः गजान् पातयामासुः पेतुः पश्चात् स्वयमिति शेषः ॥१०॥

ज्वलदग्निमुखैर्बाणैर्नीरन्ध्रैरितरेतरम् ।
उच्चैर्वैमानिका व्योम्नि कीर्णे दूरमपासरन् ॥ ११ ॥
विभिन्नं धन्विनां बाणैर्व्यथार्तमिव विह्वलम् ।
ररास विरसं व्योम श्येनप्रतिरवच्छलात् ॥ १२ ॥
चापैराकर्णमाकृष्टैर्विमुक्ता दूरमाशुगाः ।
अधावन् रुधिरास्वादलुब्धा इव रणैषिणाम् ॥ १३ ॥
गृहीताः पाणिभिर्वीरैर्विकोशाः खड्गराजयः ।
कान्तिजालच्छलादाजौ व्यहसन् संमदादिव ॥ १४ ॥

ज्वलदिति । इतरेतरम् अन्योन्यं ज्वलन् अग्निर्मुखे येषां तादृशैः नीरन्ध्रैः घनैः बाणैः शरैः उच्चैरतिशयेन व्योम्नि आकाशे कीर्णे आच्छादिते सति वैमानिकाः विमानेन व्योमचारिण इत्यर्थः दूरम् अपासरन् पलायाञ्चक्रिरे इत्यर्थः ॥ ११ ॥

विभिन्नमिति । धन्विनां धानुष्काणां बाणैः शरैः विभिन्नम् आहतमित्यर्थः व्योम आकाशं व्यथार्त्तमिव वेदनार्दितमिव विह्वलं कातरं सत् श्येनानां पक्षिविशेषाणां प्रतिरवच्छलात् निर्घोषमिषेण विरसं कटु यथा तथा ररास दध्वान । अपह्नुति प्राणितोत्प्रेक्षालङ्कारः । उक्तञ्च दर्पणे । प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिरिति ॥ १२ ॥

चापैरिति । आकर्णं कर्णपर्य्यन्तम् आकृष्टैः चापैः धनुर्भिः दूरं विमुक्ताः विक्षिप्ताः आशुगाः शराः रणैषिणां योद्धॄणां रुधिरस्य रक्तस्य आस्वादे लुब्धा इव अधावन् अभ्यद्रवन् । उत्प्रेक्षालङ्कारः ॥ १३ ॥

गृहीता इति आजौ युद्धे समित्याजि समिद्युध इत्यमरः । वीरैः पाणिभिः गृहीताः विकोशाः कोशात् स्वाधारविशेषात् निष्काशिता इत्यर्थः खड्गराजयः असिनिचयाः कान्तिजालच्छलात्

खङ्गाः शोणितसंदिग्धा नृत्यन्तो वीरपाणिषु।
रजोवने रणेऽनन्ते विद्युतां वैभवं दधुः ॥ १५ ॥
कुन्ताश्चकाशिरे चण्डमुल्लसन्तो रणार्थिनाम्।
जिह्वाभोगा यमस्येव लेलिहाना रणाङ्गणे ॥ १६ ॥
प्रज्वलत्कान्तिचक्राणि चक्राणि वरचक्रिणाम्।
चण्डांशुमण्डलश्रीणि रणव्योमनि बभ्रमुः ॥ १७ ॥

प्रभासमूहव्याजात् सम्मदादिव हर्षादिव व्यहसन् विशेषेण हसन्ति स्म विकासं प्रापुरित्यर्थः। अपह्नवोत्प्रेक्षा। कान्तिजालच्छलादाजेरित्यत्र कान्त्याननच्छलादाजेरिति सम्मदादिवेत्यत्र सम्मदा इवेति च पाठान्तरम् ॥ १४ ॥

खड्गा इति। रजोभिः रेणुभिः घने सान्द्रे अनन्ते अपारे रणे संग्रामे वीराणां पाणिषु भुजेषु नृत्यन्तः नृत्यं कुर्वन्तः शोणितसंदिग्धाः रक्तलिप्ताः खड्गाः विद्युतां वैभवं प्रभावं सादृश्यमित्यर्थः दधुः प्रापुः। रजोघने रणे इत्यत्र रजोघनरणे इति वैभवमित्यत्र विभ्रममिति च पाठान्तरम्। अत्र एकस्य धर्मं कथमन्यो लभत इति तद्सम्भवन् विम्बप्रतिविम्बभावबोधनात् निदर्शनालङ्कारः ॥ १५ ॥

कुन्ता इति। रणार्थिनां युयुत्सूनाम् उल्लसन्तः उद्भासमानाः कुन्ताः अस्त्रविशेषाः रणाङ्गणे संग्रामचत्वरे यमस्य लेलिहाना पुनः पुनर्लिहन्तः जिह्वाभोगा रसनाविस्तारा इव चण्डम् उत्कटं यथा तथा चकाशिरे शुशुभिरे। रणाङ्गणे इत्यत्र रणचये इति पाठान्तरम् उत्प्रेक्षालङ्कारः ॥ १६ ॥

प्रज्वलदिति। वरचक्रिणां चक्रास्त्रधारिणां वीराणां प्रज्वलन्ति कान्तिचक्राणि प्रभापुञ्जानि येषां तथोक्तानि अतएव चण्डांशुमण्डलस्येव सूर्य्यमण्डलस्येव श्रीः शोभा येषां तथाभूतानि सन्ति रणव्योमनि संग्रामगगने बभ्रमुः भ्रमन्ति स्म। उपमालङ्कारः ॥ १७ ॥

केचिद्धीरैः प्रणादैश्च वीराणामभ्युपेयुषाम् ।
निपेतुः चोभतो वाहादपरे मुमुहुर्मदात् ॥ १८ ॥
कश्चिदभ्यागते वीरे जिघांसौ मुदमादधौ ।
परावृत्य गते चुब्धे विषसादाहवप्रियः ॥ १९ ॥
बहुभिः सह युद्वा वा परिभ्रम्य रणोल्वणाः ॥
उद्दिश्य तानुपेयुः केऽपि ये पूर्वहता रणे ॥ २० ॥
अभितोऽभ्यागतान् योद्धुं वीरान् रणमदोद्धतान् ।
प्रत्यनन्दन् भुजादण्डरोमोद्गमभृतो भटाः ॥ २१ ॥

केचिदिति । केचित् वीराः अभ्युपेयुषाम् अभिधावतां वीराणां धीरैः गम्भीरैः प्रणादैः सिंहनादैः चोभतः संत्रासात् वाहात् वाहनात् निपेतुः । अपरे वीराः मदात् मद्यपानजनितात् विकारात् मुमुहुः । धीरैरित्यत्र घोरैरिति पाठान्तरम् ॥ १८ ॥

कश्चिदिति । आहवप्रियः युद्धदुर्मदः कश्चित् वीरः जिघांसौ हन्तुमिच्छौ वीरे अभ्यागते अभिधावति सति मुदं हर्षम् आदधौ प्राप । किन्तु चुब्धे अशक्ते अतएव परावृत्य गते सति विषसाद विषण्णो बभूव ॥ १९ ॥

बहुभिरिति । केऽपि रणोल्वणा युद्धदुर्मदाः वीराः बहुभिः सह युद्वा परिभ्रम्य वा ये रणे पूर्वं हताः यैः सह पूर्वमयोधीति भावः तानेव उद्दिश्य नाम्ना आहूयेत्यर्थः उपेयुः उपगच्छन्ति स्म । सह युद्वेत्यत्र सह युध्वान इति उद्दिश्य तानित्यत्र नामग्राहमिति रणे इत्यत्र वयमिति च पाठान्तरम् ॥ २० ॥

अभित इति भुजादण्डेषु बाहुदण्डेषु रोमोद्गमभृतः रोमाञ्चधारिणः भटाः वीराः अभितः समन्तम् अभ्यागतान् उपस्थितान् रणमदेन उद्धतान् वीरान् प्रत्यनन्दन् । अभितोऽभ्यागतान् योद्धुं वीरान् रणमदोद्धतान् । प्रत्यनन्दन् भुजादण्डरोमोद्गमभृतो भटा

शस्त्रभिन्नेभकुम्भेभ्यो मौक्तिकानि च्युतान्यधुः।
अध्याहवक्षेत्रमुप्तकीर्तिबीजाङ्कुरश्रियम् ॥ २२ ॥
वीराणां विषमैर्घोषैर्विद्रुता वारणा रणे।
शास्यमाना अपि त्रासाद्भेजुर्धूताङ्कुशा दिशः ॥ २३ ॥
रणे बाणगणैर्भिन्ना भ्रमन्तो भिन्नयोधिनः।
निममज्जुर्मिलद्रक्तनिम्नगासु महागजाः ॥ २४ ॥

इत्यत्र अभितोऽभ्यागतान् वीरान् योधी रणमदोल्लसान्। प्रत्यग्रम् तद्भुजादण्डे रोमोद्गमभृतो मदादिति पाठान्तरम् ॥ २१ ॥

शस्त्रेति। अध्याहवक्षेत्रं रणक्षेत्रेषु विभक्त्यर्थेऽव्ययीभावः। शस्त्रैर्भिन्नेभ्यः विदीर्णेभ्यः इभकुम्भेभ्यः हस्तिकुम्भेभ्यः च्युतानि पतितानि मौक्तिकानि उप्तानि कृतवपनानि यानि कीर्त्तिबीजानि तेषाम् अङ्कुराः प्ररोहाः तेषां श्रीः शोभा ताम् अधुः प्रापुः। अध्याहवक्षेत्रसुप्तकीर्त्तिबीजाङ्कुरश्रियमित्यत्राहवक्षेत्रमभ्युप्तकीर्त्तिबीजोत्करश्रियमिति पाठान्तरम् ॥ २२ ॥

वीराणामिति। रणे संग्रामे वीराणां विषमैः विकटैः घोषैः नादैः विद्रुताः पलायिताः वारणा गजाः शास्यमाना अपि निवार्य्यमाणा अपि हस्तिपकै रिति शेषः धूतानि निरस्तानि अङ्कुशानि यैः तथोक्ताः अङ्कुशाघातमगणयन्त इति भावः त्रासात् भयात् दिशः भेजुः पलायिता इत्यर्थः ॥ २३ ॥

रणे इति। रणे बाणगणैः शरनिचयैः भिन्ना विक्षताः तथा भिन्ना विन्ना योधिनः स्वपृष्ठस्थाः वीराः येषां तथाभूताः महागजाः भ्रमन्तः घूर्णमानाः सन्तः मिलन्त्यः सङ्गच्छन्त्यः या रक्तनिम्नगाः शोणितनद्यः तासु निममज्जुः निपेतुः। मिलद्रक्तनिम्नगासु महागजा इत्यत्र गलद्रक्तनिमग्नाः सुमहागजा इति पाठान्तरम् ॥ २४ ॥

अपारेऽस्रक्सरित्पूरे रथेषूच्चैस्तरेष्वपि ।
रथिनोऽभिरिपुं क्रुद्धा हुङ्कृतैर्व्यसृजञ् शरान् ॥ २५ ॥
खड्गनिर्लूनमूर्धानो व्यापतन्तोऽपि वाजिनः ।
प्रथमं पातयामासुरसिना दारितानरीन् ॥ २६ ॥
वीराणां शस्त्रभिन्नानि शिरांसि निपतन्त्यपि ।
अधावन्दन्तदष्टोष्ठभीमान्यभिरिपुं क्रुधा ॥ २७ ॥
शिरांसि वरयोधानामर्धचन्द्रहृतान्यलम् ।

अपारे इति । रथिनः उच्चैस्तरेषु समुन्नतेषु अपि रथेषु अपारे अगाधे असृक्सरित्पूरे रक्तनदीस्रोतसि निमग्नेष्विति शेषः रिपुं शत्रुम् अभि अभिलक्ष्येत्यर्थः क्रुद्धाः सन्तः हुङ्कृतैः हुङ्कारध्वनिभिः सहेति शेषः शरान् व्यसृजन् अमुञ्चन् अपारेऽसृक्सरित्पूरे इत्यत्रापारेऽस्त्रसरित्पूरे इति पाठे स एवार्थः । अभिरिपुमित्यत्र अभिक्रुधेति क्रुद्धा हुङ्कृतैरित्यत्र क्रुद्धहुङ्कृतैरिति च पाठान्तरम् ॥२५॥

खड्गेति । खड्गेन निर्लूनाः छिन्नाः मूर्द्धानः येषां तथोक्ताः व्यपतन्तः विशेषेण आसम्यक् पतन्तः अपि वाजिनः अश्वाः प्रथमं प्राक् असिना दारितान् छिन्नान् अरीन् स्वपृष्ठस्थानिति शेषः पातयामासुः पश्चात् स्वयंपेतुरिति प्रथममिति पदेन द्योत्यते । व्यापतन्तोऽपीत्यत्र निपतन्तोऽपीति पाठान्तरम् ॥ २६ ॥

वीराणामिति । वीराणां शस्त्रैर्भिन्नानि दन्तैः दष्टा ओष्ठा येषां तादृशानि अतएव भीमानि भयङ्कराणि शिरांसि निपतन्ति अपि क्रुधा रिपुं शत्रुम् अभि प्रति अधावन् अभिगच्छन्ति स्म । दन्तदष्टोष्ठभीमान्यभिरिपुमित्यत्र दन्तदष्टोष्ठभीषणान्यरिष्विति पाठान्तरम् ॥ २७ ॥

शिरांसीति । वरयोधानां महावीराणाम् अलं सम्यक् अर्द्ध-

आदधाना भृशं पादैः श्येना व्यानशिरे नभः ॥ २८ ॥
क्रोधादभ्यापतद्दन्तिदन्तारूढ़ाः पदातयः ।
अश्वारोहा गजारोहप्राणान् प्रासैरपाहरन् ॥ २९ ॥
शस्त्रच्छिन्नगजारोहा विभ्रमन्त इतस्ततः ।
युगान्तवातचलिताः शैला इव गजा बभुः ॥ ३० ॥
मिलितेषु मिथो योद्धुं दन्तिषु प्रसभं भटाः ।
अघ्नन्युद्ध्यमानाश्च शस्त्रैः प्राणान् परस्परम् ॥ ३१ ॥
रुषा मिथो मिलद्दन्तिदन्तसङ्घर्षजोऽनलः ।

चन्द्रैः शरविशेषैः हृतानि छिन्नानि शिरांसि पादैश्चरणैः आदधानाः स्पृशन्तः श्येनाः पक्षिविशेषाः नभः आकाशं भृशम् अतिशयेन व्यानशिरे व्यापुः ॥ अर्द्धचन्द्रहृतान्यत्रामित्यत्रार्द्धचन्द्रहृतान्यपीति आदधाना इत्यत्रादधाना इति च पाठान्तरम् ॥ २८ ॥

क्रोधादिति । अभ्यापततां सम्मुखमागच्छतां दन्तिनां हस्तिनां दन्तान् आरूढ़ाः पदातयः अश्वारोहाश्च क्रोधात् प्रासैस्तदाख्यैरस्त्रविशेषैः गजारोहाणां हस्तिपकानां प्राणान् अपाहरन् व्यनाशयन् । पदातय इत्यत्र न्वराजिष्विति पाठान्तरम् ॥ २९ ॥

शस्त्रेति । शस्त्रैः छिन्ना गजारोहाः हस्तिपका येषां तथाभूताः गजाः इतस्ततः विभ्रमन्तः विचरन्तः सन्तः युगान्ते प्रलयकाले वातैः चलिताः शैला इव पर्वता इव बभुः राजन्ति स्म ॥ ३० ॥

मिलितेष्विति । मिथः परस्परं योद्धुं मिलितेषु सङ्गच्छत्सु दन्तिषु गजेषु भटाः वीराः प्रसभं बलात् युध्यमानाः सन्तः परस्परं प्राणान् अघ्नन् व्यनाशयन् युध्यमानाश्चेत्यत्र सहयुध्वान इति पाठान्तरम् ॥ ३१ ॥

रुषेति । रुषा क्रोधेन मिथः अन्योन्यं मिलतां सङ्गच्छतां दन्तिनां

योधाञ् शस्त्रहृतप्राणानदहत्सहसारिभिः ॥ ३२ ॥
आक्षिप्ता अपि दन्तीन्द्रैः कोपनैः पत्तयः परम् ।
तदसूनहरन् खड्गघातैः स्वस्य पुरः प्रभोः ॥ ३३ ॥
उत्क्षिप्य करिभिर्दूरान्मुक्तानां योधिनां दिवि ।
प्रापि जीवात्मभिर्दिव्या गतिर्वा विग्रहैर्मही ॥ ३४ ॥
खड्गैर्धवलधारालैर्निहत्य करिणां करान् ।

दन्तानां सङ्घर्षेण जायत इति तथोक्तः अनलः अरिभिः शत्रुभिः शस्त्रैः हृताः प्राणा येषां तथाविधान् योधान् अदहत् भस्मीचकार । रुषा मिथ इत्यत्र गजारूढानिति पाठान्तरम् ॥ ३२ ॥

आक्षिप्ता इति । कोपनैः क्रुद्धैः दन्तीन्द्रैः गजपतिभिः परम् अत्यर्थम् आक्षिप्ताः आक्रान्ता अपि पत्तयः पादचारिणो भटाः स्वस्य निजस्य प्रभोर्हस्तिपकस्येति यावत् पुरः अग्रतः खड्गघातैः असिप्रहारैः तेषां दन्तीन्द्राणाम् असून् प्राणान् अहरन् अनाशयन् । उत्क्षिप्ता अपि हस्तीन्द्रैः कोपनैः पत्तयः करैः । तद्रिपूनहरन् खड्गपातैः स्वस्य पुरः प्रभोरिति पाठे कोपनैः हस्तीन्द्रैः करैः शुण्डादण्डैः उत्क्षिप्ता उद्धृता अपि पत्तयः पदातयः स्वस्य प्रभोः पुरः अग्रतः तद्रिपून् तस्य प्रभोः रिपून् शत्रून् अहरन्नित्यन्वयः ॥ ३३ ॥

उत्क्षिप्येति । करिभिः गजैः उत्क्षिप्य शुण्डैरुद्धृत्य दूरात् मुक्तानां विक्षिप्तानां योधिनां भटानां जीवात्मभिः दिवि स्वर्गे दिव्या गतिः प्रापि प्राप्ता, विग्रहैः शरीरैः मही वा पृथिवी एव प्रापीत्यनेनान्वयः । हतो वा प्राप्स्यसे स्वर्गमिति भगवद्गीतायामर्जुनं प्रति युद्धहतस्य स्वर्गगतिलाभ कथनादिति भावः । दिवीत्यत्र दिव इति दिव्यागति र्वा विग्रहैर्महीत्यत्र दिव्याङ्गनाकण्ठपरिग्रह इति पाठान्तरम् अर्थस्तु सुगम एवेति ॥ ३४ ॥

खड्गैरिति । भटाः योधाः धवलधारालैः तीक्ष्णधारैरिति

तैर्भुवापि समं विद्वान् सन्तोषं न भटा ययुः ॥ ३५ ॥
आक्षिप्याभिदिवं नीताः पत्तयः करिभिः करैः।
दिव्याङ्गनाभिरादातुं रक्ताभिर्द्रुतमीषिरे ॥ ३६ ॥
धन्विनस्तुरगारूढा गजारोहाञ् शरैः क्षतान्।
प्रत्यैच्छन्मूर्च्छितान् भूयो योद्धुमाश्वसतश्चिरम् ॥ ३७ ॥

भावः खड्गैः भुवा पृथिव्या समं सह विद्वान् प्रहृतान् करिणां हस्तिनां करान् शुण्डादण्डान् निहत्यापि पातयित्वापि तैः तत्कार्य्यकरणैरिति भावः सन्तोषं तृप्तिं न ययुः न प्रापुः अन्येषामपि घातने प्रवृत्तिसद्भावादिति भावः। तैर्भुवापि समं विद्वान् सन्तोषं न भटा ययुरित्यत्र येर्भुवापि समं वृद्धं शस्त्रया तान् पत्तयो हरन्निति पाठान्तरम् ॥ ३५ ॥

आक्षिप्येति। करिभिर्हस्तिभिः करैः शुण्डादण्डै राक्षिप्य आकृष्य अभिदिवं स्वर्गमभि नीताः प्रापिताः पत्तयः पदातयः दिव्याङ्गनाभिः रक्ताभिरनुरागिणीभिः सतीभिः द्रुतं शीघ्रम् आदातुं ग्रहीतुम् आयत्तीकर्त्तुमिति यावत् ईषिरे अभिलषिताः। आक्षिप्याभिदिवमित्यत्र उत्क्षिप्याभि दिवमिति द्रुतमीषिरे इत्यत्र हृतमम्बरमिति च पाठे नीता इति समापिका क्रिया। ततश्च रक्ताभिरनुरागिणीर्दिव्याङ्गनाभि रादातुं तान् पत्तीनिति शेषः अम्बरम् अन्तरीक्षं हृतं व्याप्तं भावे क्तप्रत्ययः ॥ ३६ ॥

धन्विन इति। तुरगारूढ़ा धन्विनः धनुर्धराः शरैः क्षतान् प्रहृतान् अतएव मूर्च्छितान् मोहं गतान् भूयः पुनः चिरं दीर्घकालात् परमिति यावत् योद्धुम् आश्वसतः जीवतः अभिलषत इति भावः प्रत्यैच्छन् प्रतीक्षाञ्चक्रिरे। प्रत्यैच्छन्नित्यत्र प्रत्यैक्षन्निति पाठान्तरम् ॥ ३७ ॥

क्रुद्धस्य दन्तिनः पत्तिर्जिष्णोरसिना करम्।
निर्भिद्य दन्तमुसलावारुरोह जिघृक्षया ॥ ३८ ॥
खड्गेन मूलतो हत्वा दन्तिनो रदनद्वयम्।
प्रातिपक्ष्ये प्रविष्टोऽपि पदातिर्निरगाद्द्रुतम् ॥ ३९ ॥
करेण करिणा वीरः सुगृहीतोऽपि कोपिना।
असिनासूञ्जहाराशु तस्यैव स्वयमक्षतः ॥ ४० ॥
तुरङ्गी तुरगारूढं प्रासेनाहत्य वक्षसि।

क्रुद्धस्येति। पत्तिः पादचारी भटः क्रुद्धस्य कोपनस्य जिष्णोः जयशीलस्य दन्तिनः हस्तिनः करं शुण्डम् असिना खड्गेन निर्भिद्य छित्वा जिघृक्षया ग्रहीतुमिच्छया दन्तौ मुसलाविव तौ मुसलाकारदशनौ आरुरोह। दन्तमुसलावित्यत्र दन्तमुसलानिति पाठान्तरम् ॥ ३८ ॥

खड्गेनेति। प्रातिपक्ष्ये विपक्षसैन्यमध्ये प्रविष्टोऽपि पदातिः पादचारी भटः खड्गेन दन्तिनः विपक्षीयगजस्य रदनद्वयं दन्तयुगलं मूलतः मूलात् हत्वा छित्त्वा द्रुतं शीघ्रं निरगात् निश्चक्राम शत्रुसैन्यादिति शेषः। शत्रुसैन्यप्रविष्टस्य पुनः प्रत्यावर्त्तनं असम्भवमिति अपिशब्देन द्योत्यते। खड्गेन मूलत इत्यत्र खड्गेनामूलत इति रदनद्वयमित्यत्राङ्घ्रिचतुष्टयमिति प्रातिपक्ष्ये इत्यत्र प्रपतिष्णोरिति च पाठान्तरम् ॥ ३९ ॥

करेणेति। वीरः कश्चिदिति शेषः कोपिना क्रुद्धेन करिणा हस्तिना करेण शुण्डादण्डेन सुगृहीतोऽपि समाक्रान्तोऽपि स्वयमक्षतः सन् असिना तलवारेण तस्यैव करिणः असून् प्राणान् आशु शीघ्रं जहार ॥ ४० ॥

तुरङ्गीति। तुरङ्गी अश्वारोही तुरगारूढं प्रतिवीरं वक्षसि

पततस्तस्य नाज्ञासीत्प्रासघातं स्वकी हृदि ॥ ४१ ॥
द्विष्टा प्रासहृतप्राणो वाजिपृष्ठदृढ़ासनः ।
हस्तोद्धृतमहाप्रासो भुवि जीवन्निवाभ्रमत् ॥ ४२ ॥
तुरङ्गसादिनं शस्त्रहृतप्राणं गतं भुवि ।
अबद्धोऽपि महावाजी न साश्रुनयनोऽत्यजत् ॥ ४३ ॥
भल्लेन शितधारेण भिन्नोऽपि रिपुणाश्वगः ।
नामूर्च्छत्कोपतो हन्तुमियेष प्रपतन्नपि ॥ ४४ ॥

प्रासेन अस्त्रविशेषेण आहत्य प्रहृत्य पततः तस्य प्रासघातेनेति शेषः स्वके हृदि आत्महृदये प्रासघातं प्रासास्त्रप्रहारं न अज्ञासीत् ॥ ४१ ॥

द्विषेति । द्विषा शत्रुणा प्रासेन हृताः प्राणा यस्य तथाविधः अपि रत्नाध्याहार्य्यः वाजिनः अश्वस्य पृष्ठे दृढ़ं निश्चलम् आसनम् अवस्थानं यस्य तथोक्तः तथा हस्तेन उद्धृत उत्तोलितः महान् प्रासो येन तथाभूतः सन् जीवन्निव भुवि रणाङ्गणे इति यावत् अभ्रमत् विचचार । अश्वभ्रमणवशात् भ्रमन् शवोऽपि अशव इव लक्ष्यते स्मेति भावः । भुवीत्यत्र भटे इति पाठान्तरम् ॥ ४२ ॥

तुरङ्गसादिनमिति । अबद्धः अश्रृङ्खलसंयत अपि महावाजी महान् अश्वः साश्रुनयनः सजलनेत्रः सन् प्रभुस्नेहादिति भावः शस्त्रैः हृताः प्राणाः यस्य तथोक्तम् अतएव भुवि गतं पतितं तुरङ्गसादिनं स्वारोहिणमिति यावत् न अत्यजत् न त्यक्त्वा ययावित्यर्थः । अबद्धोऽपीत्यत्र अन्ताद्य इति न साश्रुनयन इत्यत्र नात्मस्वनयन इति पाठान्तरम् ॥ ४३ ॥

भल्लेनेति । अश्वगः अश्वारोही रिपुणा शत्रुणा शितधारेण तीक्ष्णधारेण भल्लेन तदाख्येनास्त्रेण भिन्नः विद्धः अतएव प्रपतन् अपि न अमूर्च्छत् न मोहमापेदे प्रत्युत कोपतः कोपात् हन्तुं शत्रु-

मिथः प्रासाहतौ वाजिच्युतौ भूमिगतौ रुषा।
शक्त्या युयुधतुः कौचित् केशाकेशि भुजाभुजि ॥ ४५ ॥
रथिनो रथिभिर्बाणैर्हृतप्राणा दृढ़ासनाः।
क्षतकार्मुकसन्धानाः सप्राणा इव मेनिरे ॥ ४६ ॥
न रथी रथिनं भूयः प्राहरच्छस्त्रमूर्च्छितम्।
प्रत्याश्वसन्तमन्विच्छन्नातिष्ठद्युधि लोभतः ॥ ४७ ॥

मिति शेषः इयेष आचकाङ्क्ष। भल्लेनेत्यत्र खड्गेनेति प्रपतन्नपीत्यत्र च पतन्नपीति पाठान्तरम् ॥ ४४ ॥

मिथ इति। कौचित् वीरौ मिथः अन्योन्यं प्रासेन आहतौ प्रहृतौ ततः वाजिच्युतौ अश्वात् भ्रष्टौ अतएव भूमिगतौ भूतलस्थौ सन्तौ रुषा कोपेन शक्त्या यथाशक्ति केशाकेशि केशेषु केशेषु च समाकृष्य यद्युद्धं तत् तथा भुजाभुजि भुजाभ्यां भुजाभ्यां प्रहृत्य यद्युद्धं तत् यथातथा युयुधतुः युद्धं चक्रतुः। मिथः प्रासाहताविमिथः प्रहारत इति पाठान्तरम् ॥ ४५ ॥

रथिन इति। रथिनः रथिभिः बाणैः हृता प्राणा येषां तथाभूताः अतएव क्षतं विनष्टं कार्मुकसन्धानं धनुर्योजनं येषां तथोक्ता अपि दृढ़ं निश्चलम् आसनम् अवस्थानम् येषां तादृशाः रथादपतिता इति भावः अतएव सप्राणा इव जीविता इव मेनिरे अमन्यन्त लोकैरिति शेषः। क्षतेत्यत्र कृतेति पाठे कृतं कार्मुकसन्धानं धनुषि शरयोजनं यैः तथोक्ताः तादृश पूर्वभावे स्थिता इति भावः ॥ ४६ ॥

नेति। रथी शस्त्रैः शस्त्रप्रहारैरित्यर्थः मूर्च्छितं रथिनं भूयः पुनः न प्राहरत्। प्रत्याश्वसन्तं प्रत्युज्जीवन्तम् अन्विच्छन् आकाङ्क्षन् लोभतः तादृशवीरेण युद्धलोभात् युधि अतिष्ठत् तस्थौ प्रतीक्षाञ्चक्रे इति यावत्। अन्विच्छन्नित्यत्र मत्वेनमिति अतिष्ठद् युधि लोभत इत्यत्र नागमद् युद्धलोभत इति च पाठान्तरम् ॥ ४७ ॥

अन्योन्यं रथिनौ कौचिद्धतप्राणौ दिवं गतौ ।
एकामप्सरसं प्राप्य युयुधाते वरायुधौ ॥ ४८ ॥

मिथोऽर्धचन्द्रनिर्लूनमूर्धानौ रथिनौ रुचा ।
खेचरौ भुवि नृत्यन्तौ स्वकबन्धावपश्यताम् ॥ ४९ ॥

रणाङ्गणे शोणितपङ्कपिच्छिले कथं कथञ्चिन्ननृतुर्धृतायुधाः ।
नदत्सु तुर्येषु परेतयोषितां गणेषु गायत्सु कबन्धराजयः॥५०॥

इति सुररिपुवृत्ते युद्धे सुरासुरसैन्ययो
रुधिरसरितां मज्जद्दन्तिव्रजेषु तटेष्वलम् ।

अन्योन्यमिति । कौचित् वरायुधौ श्रेष्ठशस्त्रधारिणौ रथिनौ अन्योन्यं हृताः प्राणा याभ्यां तथोक्तौ अतएव दिवं स्वर्गं गतौ सन्तौ अपिरत्नाध्याहार्य्यः । एकाम् अप्सरसं सुरसुन्दरीं प्राप्य युयुधाते युद्धं कृतवन्तौ ॥ ४८ ॥

मिथ इति । कौचित् रथिनौ मिथः परस्परम् अर्द्धचन्द्रेण निर्लूनः छिन्नः मूर्द्धा ययोस्तथाभूतौ अतएव खेचरौ देवत्वं प्राप्तौ रुचा कान्त्या समन्वितौचेति शेषः भुवि रणभूमौ नृत्यन्तौ स्वकबन्धौ निजौ अपमूर्द्धकलेवरौ अपश्यतां दृष्टवन्तौ । रथिनौ रुचेत्यत्र रुषितौ रुषेति पाठान्तरम् ॥ ४९ ॥

रणाङ्गणे इति । शोणितपङ्केन सरक्तकर्दमेन पिच्छिले मसृणे रणाङ्गणे संग्रामभूमौ तूर्य्येषु रणवाद्यभेदेषु नदत्सु ध्वनत्सु तथा परेतयोषितां प्रेतनारीणां गणेषु गायत्सु च धृतायुधाः शस्त्रपाणयः कबन्धराजयः कबन्धनिचयाः कथं कथञ्चित् अतिकष्टेन ननृतुः नृत्यं चक्रुः । वंशस्थविलं वृत्तं वदन्ति वंशस्थमुदीरितं जराविति लक्षणात् ॥ ५० ॥

इतीति । इतीत्थं सुरासुरसैन्ययोः युद्धे वृत्ते चलिते रुधिर-

अरुणनयनः क्रोधाद्भीमभ्रमद्भृकुटीमुखः
सपदि ककुभामीशानभ्यागमत्स युयुत्सया ॥ ५१ ॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
सुरासुरसैन्यसङ्ग्रामवर्णनं नाम
षोड़शः सर्गः ।

---

सरितां रक्तनदीनां तटेषु अलं सम्यक् मज्जन्तः दन्तिव्रजाः हस्तिसमूहा येषु तादृशेषु सत्सु च सुररिपुस्तारकः क्रोधात् अरुणे रक्ते नयने यस्य तथोक्तः तथा भीमं यथा तथा भ्रमन्ती। भ्रूकुटी भ्रूकौटिल्यं यस्य तादृशं मुखं यस्य तादृशः सन् सपदि सद्यः युयुत्सया योद्धुमिच्छया ककुभां दिशाम् ईशान् दिक्पालान् इन्द्रादीन् अभ्यागमत् अभिदुद्राव। क्रोधाद्भीमेत्यत्र क्रोधापीनेति पाठान्तरम्। हरिणी वृत्तं न स मरसलागः षड्वेदैर्हयैर्हरिणीमतेति तल्लक्षणात् ॥ ५१ ॥

इति षोड़शः सर्गः ।

---

# सप्तदश: सर्ग: ।

———०:०:०———

दृष्ट्वाभ्युपेतमथ दैत्यपतिं पुरस्ता-
त्सङ्ग्रामकेलिकुतुकेन घनप्रमोदम् ।
योद्धुं मदेन मिमिलु: ककुभामधीशा
बाणान्धकारितदिगम्बरगर्भमेत्य ॥ १ ॥

देवद्विषां परिवृढो विकटं विहस्य
बाणावलीभिरमरान्विकटान्ववर्ष ।
शैलानिव प्रवरवारिधरो गरिष्ठा-
नद्भिः पराभिरथ गाढ़मनारताभिः ॥ २ ॥

दृष्ट्वेति । अथ असुरपते: सम्मुखागमनानन्तरं ककुभां दिशाम- धीशा: दिक्पाला इन्द्रादय: सङ्ग्रामे केलिकुतुकेन रणक्रीड़ाकुतूहलेन घन: सान्द्र: प्रमोद: हर्ष: यस्य तथोक्तं बाणै: शरै: अन्धकारित: आच्छादित: दिशाम् अम्बरस्य आकाशस्य गर्भ: उदरम् अवकाश इत्यर्थ: येन तथाभूतं दैत्यपतिम् असुरेश्वरं तारकं पुरस्तात् अग्रत: अभ्युपेतम् उपस्थितं दृष्ट्वा एत्य आगत्य मदेन हर्षेण योद्धुं मिमिलु: समवेता: बभूवु: । वसन्ततिलकं वृत्तमस्मिन् सर्गे तदुक्तं ज्ञेयं वसन्त- तिलकं तभजा जगौग इति । दैत्यपति मित्यत्र तस्य पतिमिति पाठान्तरम् ॥ १ ॥

देवद्विषामिति । अथानन्तरं देवद्विषाम् असुराणां परिवृढ: प्रभु: तारक: विकटं विहस्य उच्चैर्हसित्वेत्यर्थ: प्रवरवारिधर: महा- मेघ: पराभि: अत्यन्ताभि: अनारताभि: अनवरताभि: अद्भि: जलै: गरिष्ठान् अतिशयगुरून् शैलानिव पर्वतानिव बाणावलीभि:

जम्भद्विषत्प्रभृतिदिक्पतिचापमुक्ता
बाणाः शिता दनुजनायकबाणसङ्घान् ।
अङ्काय तार्क्ष्यनिवहा इव नागपूगान्
सद्यो विचिच्छिदुरलं कणशो रणान्ते ॥ ३ ॥

तान् प्रज्वलत्फलमुखैर्विषमैः सुरारि-
नामाङ्कितैः पिहितदिग्गगनान्तरालैः ।
आच्छादितस्तृणचयानिव हव्यवाह-
श्चिच्छेद सोऽपि सुरसैन्यशराञ् शरौघैः ॥ ४ ॥

शरनिकरैः विकटान् प्रबलान् अमरान् गाढं दृढं यथा तथा ववर्षं छादयामास । उपमालङ्कारः । अमरान् विकटानित्यत्राभितः कुपित इति प्रवरवारिधर इत्यत्र प्रबलवारिधर इति अद्भिः पराभि-रित्यत्रात्मस्तुतिभिरिति च पाठान्तरम् ॥ २ ॥

जम्भेति । रणान्ते रणसीमायां जम्भद्विषत् जम्भारातिरिन्द्रः प्रभृतिः प्रमुखः येषां तथोक्ता ये दिक्पतयः दिक्पालाः तेषां चापैर्धनुर्भिर्मुक्ताः विक्षिप्ताः शितास्तीक्ष्णाः बाणाः शराः तार्क्ष्यनिवहाः गरुडव्रजाः सद्यः झटिति नागपूगान् भुजङ्गसङ्घानिव अङ्काय झटिति अलम् अतिशयेन दनुजनायकस्य दैत्यपतेस्तारकस्य बाणसङ्घान् शरनिकरान् कणशः विचिच्छिदुः खण्डयामासुरित्यर्थः । उपमा-लङ्कारः । दनुजनायकेत्यत्रासुरराजकेति पाठान्तरम् ॥ ३ ॥

तानिति । आच्छादितः सुराणां शरजालैरिति शेषः सोऽपि असुरराजः हव्यवाहः अग्निः तृणचयानिव तृणराशीनिव प्रज्वलत् फलं फलकं मुखे येषां तैः विषमैः दारुणैः सुरारिस्तारकः तस्य नामाङ्कितैः नामचिह्नितैः पिहितम् आच्छादितं दिशां गगनस्य च अन्त-रालं यैः तथाभूतैः शरौघैः शरनिवहैः तान् सुरसैन्यानां शरान् चिच्छेद अखण्डाकारेत्यर्थः । उपमालङ्कारः । तान् प्रज्वलत्फल-मुखैर्विषमैः सुरारीत्यत्र तैः प्रज्वलत्फलमुखैर्विशिखैः सुरारिरिति

दैत्येश्वरो ज्वलितरोषविशेषभीमः
सद्यो मुमोच युधि यान्विशिखान् सहेलः ।
ते प्रापुरुद्भटभुजङ्गमभीमभावं
गाढं बबन्धुरपि तांस्त्रिदशेन्द्रमुख्यान् ॥ ५ ॥

ते नागपाशविशिखैरसुरेण बद्धाः
श्वासानिलाकुलमुखा विमुखा रणस्य ।
दिङ्नायका बलरिपुप्रमुखाः स्मरारि-
सूनोः समीपमगमन्विपदन्तहेतोः ॥ ६ ॥

आच्छादितस्तृणचयैरिव हव्यवाह इत्यत्र प्राच्छादयं स्तृणचयैरिव हव्यवाहमिति च पाठान्तरे प्रज्वलतफलमुखैः नामाङ्कितैः स्वस्वनामचिह्नितैः पिहितदिग्गगनान्तरालैः तैः विशिखैः शरैः तृणचयैर्हव्यवाहमग्निमिव सुरारिं तारकं प्राच्छादयन् सुरा इति शेषः । सोऽपि शरौघैः सुरसैन्यशरान् चिच्छेदेति योजना ॥ ४ ॥

दैत्येश्वर इति । ज्वलितेन दीपितेन रोषेण विशेषभीमः अति भयङ्करः सहेलः हेलया अवज्ञया सह वर्त्तमानः देवानगणयन्नेवेत्यर्थः सद्यः झटिति युधि यान् विशिखान् शरान् मुमोच तत्याज ते विशिखाः उद्भटा विकटा ये भुजङ्गमाः तेषां भीमभावं भीषणत्वं प्रापुः उद्भटभुजङ्गमा इव भीषणा बभूवुरित्यर्थः । अत्र एकस्य धर्मं कथमन्यो लभते इति विशिख भुजङ्गमयोर्बिम्बप्रतिबिम्ब प्रत्यायनात् निदर्शनालङ्कारः । तदुक्तं दर्पणे । सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शनेति । तान् त्रिदशेन्द्रमुख्यान् देवप्रवरान् इन्द्रादीन् गाढं सुदृढं यथा तथा बबन्धुरपि बद्धान् चक्रुरपि नागपाशस्वरूपेणेति भावः । सहेल इत्यत्र सहेलमिति पाठान्तरम् ॥ ५ ॥

ते इति । असुरेण तारकेण नागपाशविशिखैः बद्धाः संयताः बलरिपुरिन्द्रः प्रमुखो येषां तथोक्ताः ते दिङ्नायकाः दिशामधीशाः

दृष्टिप्रपातवशतोऽपि पुरारिसूनो-
स्ते नागपाशघनबन्धविपत्तिदुःखात् ।
इन्द्रादयो मुमुचिरे स्वयमस्य देवाः
सेवां व्यधुर्निकटमेत्य महाजिगीषोः ॥ ७ ॥

उद्दीप्तकोपदहनोऽथ सुरेन्द्रशत्रु-
रङ्गाय सारथिमवोचत चण्डबाहुः ।
बद्धा मया सुरपतिप्रमुखाः प्रसह्य
बालस्य धूर्जटिसुतस्य निरीक्षणेन ॥ ८ ॥

श्वासानिलेन निश्वासवायुना आकुलानि मुखानि येषां तथाभूताः दीर्घं निश्वसन्त इत्यर्थः अतएव रणस्य विमुखाः रणपराङ्मुखा इत्यर्थः रणस्येति सम्बन्धविवक्षया षष्ठी । विपदन्तहेतोः विपन्नाशार्थं स्मरारिसूनोः कुमारस्य समीपम् अगमन् । श्वासानिलाकुलमुखा इत्यत्र श्वासाकुलाकुलमुखा इति रणस्येत्यत्र रणान्तादिति च पाठान्तरम् ॥ ६ ॥

दृष्टीति । ते इन्द्रादयः देवाः पुरारिसूनोः कुमारस्य दृष्टिप्रपात-वशतः अपि दृष्टिपातमात्रेण एव नागपाशैः घनः निविड़ः यः बन्धः स एव विपत्तिः विपत् तया यत् दुःखं तस्मात् मुमुचिरे मुक्ता बभूवुः । ततश्च स्वयं अस्य महाजिगीषोः कुमारस्य निकटम् एत्य आगत्य सेवां स्तुतिमिति यावत् व्यधुः चक्रुः । व्यधुर्निकटमेत्येत्यत्र व्यधुश्च पुनरेत्येति पाठान्तरम् ॥ ७ ॥

अथ युग्मेनाह । उद्दीप्तेत्यादि । अथ सुराणां नागपाश-विमोचनानन्तरं चण्डबाहुः उग्रभुजबल इत्यर्थः सुरेन्द्राणां शत्रुः तारकः उद्दीप्तः कोपदहनः क्रोधाग्निर्यस्य तथाभूतः सन् अङ्गाय झटिति सारथिम् अवोचत अब्रवीत् मया प्रसह्य बलात् बद्धाः नागपाशेनेति शेषः सुरपतिप्रमुखाः इन्द्रादयः देवाः बालस्य शिशोः

मुक्ता बभूवुरधुना तदिमान्विहाय
कर्तास्म्यसुं समरभूमिपशूपहारम् ।
तत्स्यन्दनं सपदि वाहय शम्भुसूनुं
द्रष्टास्मि दर्पितभुजाबलमाहवाय ॥ ९ ॥
तत्स्यन्दनः सपदि सारथिसम्प्रणुन्नः
प्रक्षुब्धवारिधरधीरगभीरघोषः ।
चण्डश्चचाल दलिताखिलशत्रुसैन्य-
मांसास्थिशोणितविपङ्कविलुप्तचक्रः ॥ १० ॥

धूर्जटिसुतस्य हरसूनोः निरीक्षणेन कृपावलोकनेन मुक्ता बभूवुः, तत् तस्मात् अधुना साम्प्रतम् इमान् देवान् विहाय त्यक्त्वा असुं कुमारं समरभूमौ ये पशवः शृगालादयः तेषां उपहार्य्यते उपहारी-क्रियते इति उपहारः उपढौकनं कर्त्तास्मि एनं विनाश्य पशुभ्यः भक्षणीयत्वेन दास्यामीति यावत् । तत् तस्मात् सपदि शीघ्रं स्यन्दनं रथं वाहय चालय, दर्पितभुजाबलं भुजबलदर्पितमित्यर्थः शम्भुसूनुम् आहवाय संग्रामाय द्रष्टास्मि द्रक्ष्यामि । उद्दीप्तकोपदहन इत्यत्र उद्यत्प्रकोपदहन इति पाठान्तरम् ॥ ८ ॥ ९ ॥

तदिति । सारथिना सपदि तत्क्षणात् सम्प्रणुन्नः सञ्चालितः प्रक्षुब्धस्य प्रकर्षेण चलितस्य वारिधरस्येव मेघस्येव धीरः घनः गभीरः घोषो घर्घरध्वनिर्यस्य तथाभूतः चण्डः भीषणः दलितानां निहतानाम् अखिलानां अशेषाणां शत्रुसैन्यानां मांसास्थिशोणितैः यः विपङ्कः पङ्कविशेषः तेन विलुप्तानि नष्टानि गूढ़ानीत्यर्थः चक्राणि यस्य तथोक्तः तस्य तारकस्य स्यन्दनः रथः चचाल । प्रक्षुब्धेत्यत्र प्रारब्धेति चण्ड इत्यत्र चण्डमिति विपङ्कविलुप्तचक्र इत्यत्र सुपङ्कविलुप्तवेग इति च पाठान्तरम् ॥ १० ॥

दृष्ट्वा रथं प्रलयवातचलद्गिरीन्द्र-
कल्पं दलद्बलविरावविशेषरौद्रम्।
अभ्यागतं सुररिपोः सुरराजसैन्यं
क्षोभं जगाम परमं भयवेपमानम्॥ ११॥
प्रक्षुभ्यमाणमवलोक्य दिगीशसैन्यं
शम्भोः सुतं कलहकेलिकुतूहलोत्कम्।
उद्दामदोःकलितकार्मुकदण्डचण्डः
प्रोवाच वाचमुपगम्य स कार्तिकेयम्॥ १२॥
रे शम्भुतापसशिशो! वत मुञ्च मुञ्च
दोर्दर्पमत्र विरम त्रिदिवेन्द्रकार्यात्।

दृष्ट्वेति। सुरराजसैन्यं देवेन्द्रसेना प्रलये कल्पान्ते यः वातः वायुः तेन चलन् यः गिरीन्द्रः पर्वतराजः तस्मादीषदूनः तं दलतां वेगवशेन चूर्णीभवतां बलानां सैन्यानां विरावेण आर्त्तनादेन विशेष-रौद्रम् अतिभीषणम् अभ्यागतं समागतं सुररिपोः तारकस्य रथं दृष्ट्वा भयेन वेपमानं कम्पमानं सत् परमं क्षोभम् उद्वेगम् अधैर्य्यमित्यर्थः जगाम प्राप। विरावेत्यत्र विरामेति पाठान्तरम्॥ ११॥

प्रक्षुभ्यमाणमिति। उद्दामाभ्यां दोर्भ्यां बाहुभ्यां कलितेन धृतेन कार्मुकदण्डेन चण्डः भीषणः स तारकः प्रक्षुभ्यमाणं भयविचलितं दिगीशानां दिक्पालानां सैन्यम् अवलोक्य कलहकेलौ रण-क्रीड़ायां यत् कुतूहलम् आनन्दः तेन उत्कः उत्सुकः तं शम्भोःसुतं कार्त्तिकेयम् उपगम्य वाचं प्रोवाच॥ १२॥

रे इति। रे इति अवज्ञासूचकं सम्बोधनम्। शम्भुतापस-शिशो! तपस्वि शङ्करतनय! वतेति खेदसूचकमव्ययं क्षुद्रस्त्वं कथं मया व्यापाद्यसे इति भावः। अत्र मयि दोर्दर्पं बाहुबलगर्वं मुञ्च मुञ्च त्यज त्यज, त्रिदिवेन्द्रकार्य्यात् देवेन्द्रसाहाय्यात् विरम निवर्त्तस्व।

शस्त्रैः किमत्र भवतोऽनुचितैरतीव
बालत्वकोमलभुजातुलभारभूतैः ॥ १३ ॥
एवं त्वमेव तनयोऽसि गिरीशगौर्योः
किं यासि कालविषयं विषमैः शरैर्मे ।
संग्रामतोऽपसर जीव पितुर्जनन्या-
स्तूर्णं प्रविश्य वरमङ्कतलं विधेहि ॥ १४ ॥
सम्यक्स्वयं किल विमृश्य गिरीशपुत्र !
जम्भद्विषोऽस्य जहिहि प्रतिपक्षमाशु ।

भवतः अतीव अनुचितैः अयोग्यैः बालत्वेन कोमलयोर्भुजयोः अतुलभारभूतैः अत्यन्तभारवद्भिरित्यर्थः शस्त्रैः अत्र संग्रामे किम्? न किमपि प्रयोजनमस्तीत्यर्थः। त्वं शिशुः विशेषेण तापसस्तः तव शस्त्रधारणमनुचितम् अशक्यञ्चेति निष्कर्षः। शम्भुतापसेत्यत्र शम्भुतान्तवेति दोर्दर्पमित्यत्र दोर्द्वयमिति त्रिदिवेन्द्रेत्यत्र त्रिदिवेशेति शस्त्रैरित्यत्र शस्त्रदिति अनुचितैरतीवेत्यत्रानुचितैश्चरितैरिति बालत्वकोमलभुजातुलभारभूतैरित्यत्र बालाब्जकोमलभुजाक्रमभीरुभूतैरिति च पाठान्तरम् ॥ १३ ॥

एवमिति। एवं मया सह योद्धुं प्रवृत्त इत्यर्थः त्वं गिरीशगौर्याः तनयः असि भवसि एव सत्यमित्यर्थः अपरस्य एतादृशसाहसकार्ये प्रवृत्त्यसम्भवादिति भावः। तथापि बालस्त्वं मे मम विषमैः दारुणैः शरैः किं कथं कालविषयं शमनसदनं यासि गच्छसि। अतः संग्रामतः रणात् अपसर पलायस्व जीव प्राणिहि, तूर्णं शीघ्रं पितुः जनन्याः मातुश्च प्रविश्य समीपं गत्वेत्यर्थः अङ्कतलं क्रोड़ं वरम् उत्कृष्टम् उज्ज्वलमित्यर्थः विधेहि कुरु। एवं त्वमेवेत्यत्र एकस्त्वमेवेति संग्रामत इत्यत्र तत्रासत इति तूर्णमित्यत्र पूर्णमिति च पाठान्तरम् ॥ १४ ॥

सम्यगिति। हे गिरीशपुत्र! त्वं स्वयं सम्यक् विमृश्य विविच्य

एष स्वयं पयसि मज्जति दुर्विगाह्ये
पाषाणनौरिव निमज्जयते पुरा त्वाम् ॥ १५ ॥
इत्थं निशम्य वचनं युधि तारकस्य
कम्प्राधरो विकचकोकनदारुणाक्षः ।
क्षोभात्त्रिलोचनसुतो धनुरीक्षमाणः
प्रोवाच वाचमुचितां परिमृश्य शक्तिम् ॥ १६ ॥
दैत्याधिराज ! भवता यदवादि गर्वा-
त्तत्सर्वमप्युचितमेव तवैव किं तु ।
द्रष्टास्मि ते प्रवरबाहुबलं वरिष्ठं
शस्त्रं गृहाण कुरु कार्मुकमाततज्यम् ॥ १७ ॥

अस्य जम्भद्विषः इन्द्रस्य प्रतिपक्षं शत्रुं मामिति शेषः आशु शीघ्रं जहिहि परित्यज किल निश्चितं शीघ्रं मम साम्मुख्यं त्यक्त्वा पलायस्वेति भावः । एषः जम्भरिपुः स्वयं दुर्विगाह्ये अगाधे इति यावत् पयसि पाषाणनौरिव शिलातरिरिव मज्जति निमग्नोभवति त्वां चकारोऽत्राध्याहार्य्यः पुरा निमज्जयते निमज्जयिष्यतीत्यर्थः निकटागामिके पुरेत्यमरः । अत्र पुरायोगे भविष्यति लट् । दुर्विगाह्ये इत्यत्र दुर्विगाहे इति पाठान्तरम् । उत्प्रेक्षालङ्कारः ॥ १५ ॥

इत्थमिति । त्रिलोचनसुतः हरकुमारः युधि युद्धे तारकस्य इत्थम् एवम्प्रकारं सगर्वमिति भावः वचनं निशम्य श्रुत्वा क्षोभात् मनोविचलनात् कम्प्राधरः कम्पिताधरोष्ठः तथा विकचे विकसिते कोकनदे रक्तोत्पले इव अरुणे रक्ते अक्षिणी यस्य तथाभूतः धनुरीक्षमाणः पश्यन् शक्तिं तदाख्यमस्त्रं परिमृश्य स्पृष्ट्वा उचिताम् अनुरूपां वाचं प्रोवाच उक्तवान् । क्षोभादित्यत्र कोपादिति परिमृश्येत्यत्र परिमृज्येति च पाठान्तरम् । उपमालङ्कारः ॥ १६ ॥

दैत्याधिराजेति । हे दैत्याधिराज ! भवता गर्वात् अहङ्कारात्

इत्युक्तवन्तमवदत्त्रिपुरारिपुत्रं
दैत्यः क्रुधौष्ठमधरं किल निर्विभिद्य ।
युद्धार्थमुद्भटभुजाबलदर्पितोऽसि
बाणान् सहस्व मम सादितशत्रुपृष्ठान् ॥ १८ ॥

दुःप्रेक्षणीयमरिभिर्धनुराततज्यं
सद्यो विधाय विषमान्विशिखान्व्यधत्त ।
स क्रोधभीमभुजगेन्द्रनिभं स्वचापं
चण्डं प्रपञ्चयति जैत्रशरैः कुमारे ॥ १९ ॥

यत् अवादि उक्तं तत्सर्वम् अपि तवैव नान्यस्येति एवकारार्थः उचितमेव योग्यमेव किन्तु ते तव वरिष्ठं श्रेष्ठं प्रवरम् उत्कृष्टं बाहुबलं द्रष्टाम्मि द्रक्ष्यामि, शस्त्रं खड्गाणं, कार्मुकं धनुः आतता विस्तृता ज्या यत्र तथाभूतम् अधिज्यमित्यर्थः कुरु ॥ १७ ॥

इतीति । दैत्यः तारकः इति उक्तवन्तं त्रिपुरारिपुत्रं कुमारं क्रुधा कोपेन ओष्ठम् अधरं च निर्विभिद्य दंशित्वेव अवदत् । रे शिशो इति अध्याहार्य्यं युद्धार्थम् उद्भटेन उत्कटेन भुजयोर्बलेन दर्पितः गर्वितः असि, ततः सादितानि खण्डितानि शत्रूणां पृष्ठानि यैः तादृशान् मम बाणान् शरान् सहस्व । सादितशत्रुपृष्ठानित्यत्र शोणितरक्तपृष्ठानिति पाठान्तरम् ॥ १८ ॥

दुःप्रेक्षणीयेति । सः तारकः सद्यः तत्क्षणात् अरिभिः शत्रुभिः दुःप्रेक्षणीयं दुर्दर्शनीयं धनुः आततज्यम् अधिमौर्वीकं विधाय कृत्वा ज्यया सङ्गमय्येत्यर्थः क्रोधेन भीमः भीषणः यः भुजगेन्द्रः नागराजः तन्निभं तत्सदृशं चण्डम् उग्रं स्वचापं स्वं धनुः जैत्रशरैः जयसाधनैः बाणैः प्रपञ्चयति योजयति कुमारे विषमान् दारुणान् विशिखान् शरान् व्यधत्त निहितवान् प्रयुक्तवानित्यर्थः । स क्रोधभीमभुजगेन्द्रनिभमित्यत्र सक्रोधभीमभुजगेन्द्रनिभमिति पाठे सक्रोधेत्यादि समस्तं पदम् । चण्डं प्रपञ्चयति जैत्रशरैः कुमारे इत्यत्र चण्डप्रभं यदपि

कर्णान्तमेत्य दितिजेन विकृष्यमाणं
कोदण्डमेतदभितः सुषुवे शरौघान् ।
व्योमाङ्गणे लिपिकरान् किरणप्ररोहैः
सान्द्रैरशेषककुभां पलितं करिष्णून् ॥ २० ॥

बाणैः सुरारिधनुषः प्रसृतैरनन्तै-
र्निर्घोषभीषितभटो लसदंशुजालैः ।
अन्धीकृताखिलसुरेश्वरसैन्य ईश-
सूनुः कुतोऽपि विषयं न जगाम दृष्टेः ॥ २१ ॥

अंतरं कुमार इति पाठे कुमार इति पाठस्तु असङ्गतएवेति चिन्त्यम् । उपमालङ्कारः ॥ १९ ॥

कर्णान्तमिति । दितिजेन तारकेण विकृष्यमाणम् एतत् कोदण्डं धनुः कर्णान्तम् एत्य आगत्य आकर्णकृष्टं सदित्यर्थः अभितः सर्वतः सान्द्रैः घनैः किरणानां मयूखानां प्ररोहैः अङ्कुरैः व्योमाङ्गणे गगनचत्वरे लिपिकरान् चित्रकर्मकरानित्यर्थः तथा अशेषककुभां सर्वदिशां पलितं जराजनितं शौक्ल्यं करिष्णून् प्रतीयमानोत्प्रेक्षा । शरौघान् शरसमूहान् सुषुवे जनयामास ॥ २० ॥

बाणैरिति । ईशस्य शम्भोः सूनुः तनयः सुरारेस्तारकस्य धनुषः प्रसृतैः निःसृतैः लसन्ति स्फुरन्ति अंशुजालानि मयूखनिवहा येषां तथाभूतैः अनन्तैः अशेषैः असंख्यैरित्यर्थः बाणैः शरैः निर्घोषेण रवेण बाणानामिति भावः भीषिता भयं प्रापिता भटाः योधा यस्य तथाभूतः तथा अन्धीकृतानि आच्छादितानि अखिलानि समस्तानि सुरेश्वरसैन्यानि यस्य तादृशः सन् कुतोऽपि दृष्टेः विषयं न जगाम शराच्छन्नदेहतया अदर्शनोऽभूदित्यर्थः । निर्घोषभीषित भट इत्यत्र निर्घोषभीषितभटैरिति सुरेश्वरसैन्य ईश इत्यत्र सुरेश्वरसैन्यकोऽसाविति सूनुः कुतोऽपीत्यत्र अन्धाकृतिः स इति च पाठान्तरम् ॥ २१ ॥

देवेन मन्मथरिपोस्तनयेन गाढ-
माकर्णकृष्टमभितो धनुराततज्यम् ।
बाणानसूत निशितान्युधि यान् सुजैत्रा-
स्तैः सायका बिभिदिरे सहसा सुरारेः ॥ २२॥
रेजे सुरारिशरदुर्दिनके निरस्ते
सद्यस्तरां निखिलखेचरखेदहेतौ ।
देवः प्रभाप्रभुरिव स्मरशत्रुसूनुः
प्रद्योतनः सुघनदुर्धरधामधामा ॥ २३ ॥
तत्राथ दुःसहतरं समरे तरस्वी
धामाधिकं दधति धीरतरं कुमारे ।

देवेनेति । मन्मथरिपोः हरस्य तनयेन कुमारेण देवेन गाढं दृढं यथातथा आकर्णकृष्टम् आततज्यं विस्तृतमौर्वीकं धनुः युधि युद्धे अभितः समन्तात् यान् निशितान् बाणान् शरान् असूत उत्पादयामास तैः सुरारेः तारकस्य सुजैत्राः अतिजयसाधनानि सायकाः शराः सहसा सद्यः बिभिदिरे खण्डिताः । निशितानित्यत्र विविधानिति सुजैत्रा इत्यत्र विजैत्रैरिति च पाठान्तरम् ॥ २२ ॥

रेजे इति । निखिलानां सकलानां खेचराणां व्योमविहारिणां खेदहेतौ क्लेशकारणे सुरारेस्तारकस्य शरदुर्दिनके शरवर्षणे इति यावत् निरस्ते विध्वंसिते सति सद्यस्तरां झटिति देवः स्मरशत्रुसूनुः कुमारः प्रभाप्रभुरिव सूर्य इव प्रकर्षेण द्योतते दीप्यते इति तथोक्तः तथा सुघनानां सान्द्राणां दुर्धराणां दुःसहानामित्यर्थः धाम्नां तेजसां धाम स्थानम् आश्रयः सन्नित्यर्थः रेजे शुशुभे । सद्यस्तरामित्यत्र सद्यः क्षयमिति पाठान्तरम् ॥ २३ ॥

तत्रेति । अथानन्तरं तत्र समरे संग्रामे कुमारे कार्त्तिकेये दुःसहतरम् अतिदुःसहं घोरतरम् अत्युग्रम् अधिकं महत् धाम तेजः

मायामयं समरमाशु महासुरेन्द्रो
मायाप्रचारचतुरो रचयाञ्चकार ॥ २४ ॥

अज्ञाय कोपकलुषो विकटं विहस्य
व्यर्थां समर्थ्य वरशस्त्रयुधं कुमारे ।
जिष्णुर्जगद्विजयदुर्ललितः सहेलं
वायव्यमस्त्रमसुरो धनुषि न्यधत्त ॥ २५ ॥

सन्धानमात्रमपि यस्य युगान्तकाल-
भूतभ्रमं परुषभीषणघोरघोषः ।
उद्भूतधूलिपटलैः पिहिताम्बराशः
प्रच्छन्नचण्डकिरणो व्यसरत्समीरः ॥ २६ ॥

इयति आश्चर्यति सति तरस्वी महाबलः महासुरेन्द्रस्तारकः आशु शीघ्रं मायाप्रचारे चतुरः सत्वरः सन् मायामयं कपटमयं समरं युद्धं रचयाञ्चकार कल्पयामास । मायाप्रचारचतुर इत्यत्र मायाप्रपञ्चचतुर इति पाठान्तरम् ॥ २४ ॥

अज्ञायेति । जगतां विजयेन दुर्ललितः दुर्विनीतः जिष्णुः विजयी सः असुरः अज्ञाय सद्यः कोपेन कलुषः मलिनात्मा सन् कुमारे वरशस्त्रयुधं प्रवरास्त्रयुद्धं व्यर्थां विफलाम् अकिञ्चित्करीमित्यर्थः समर्थ्य सम्भाव्य विकटं विहस्य उच्चैर्हसित्वेत्यर्थः सहेलं सावज्ञं धनुषि वायव्यं वायुदैवतम् अस्त्रं न्यधत्त निहितवान् युयोजेत्यर्थः ॥ २५ ॥

सन्धानमात्रमिति । यस्य अस्त्रस्य सन्धानमात्रमपि धनुषि संयोगमात्र एवेत्यर्थः परुषः श्रुतिकटुः भीषणः भयङ्करः घोरः गम्भीरः घोषः नादः यस्य तथाभूतः उद्भूतैः उत्क्षिप्तैः धूलिपटलैः रजसां चयैः पिहिता आच्छादिता अम्बरमाकाशम् आशा दिशश्च येन तथोक्तः अतएव प्रच्छन्नः समावृतः चण्डकिरणः सूर्यो येन तथाभूतः समीरः

कुन्दोज्ज्वलानि सकलातपवारणानि
धूतानि तेन मरुता सुरसैनिकानाम् ।
उड्डीयमानकलहंसकुलोपमानि
मेघाभधूलिमलिने नभसि प्रसस्रुः ॥ २७ ॥

विध्वस्य तेन सुरसैन्यमहापताका
नीता नभःस्थलमलं नवमल्लिकाभाः ।
स्वर्गापगाजलमहौघसहस्रलीलां
व्यातेनिरे दिवि सिताम्बरकैतवेन ॥ २८ ॥

वायुः युगान्तकालस्य प्रलयकालस्य भूतः सञ्जातः भ्रमः भ्रान्तिर्यस्मिन् तद् यथा तथा व्यसरत् वर्द्धते स्म । सन्धानमात्रमपि यस्येत्यत्र सन्धानमात्र समस्येति उद्धूतधूलिपटलैरित्यत्र उद्भूतधूलिपटल इति पिहिताम्बराश्च इत्यत्र पिहिताम्बरान्त इति व्यसरदित्यत्र व्यवहृदिति च पाठान्तरम् ॥ २६ ॥

कुन्दोज्ज्वलानीति । सुरसैनिकानां कुन्दवत् कुन्दपुष्पवत् उज्ज्वलानि श्वेतानि सकलानि आतपवारणानि आतपत्राणि तेन मरुता वायुना धूतानि कम्पितानि अतएव उड्डीयमानानाम् उत्पततां कलहंसानां कुलोपमानि कुलसदृशानि सन्ति मेघाभैः मेघमलिनैरिति भावः धूलिभिः रजोभिः मलिने नभसि आकाशे प्रसस्रुः प्रसृतानि बभूवुः छिन्नानि जातानीति भावः । कलहंसेत्यत्र वरहंसेति मेघाभेत्यत्र संघाभेति च पाठान्तरम् ॥ २७ ॥

विध्वस्येति । नवमल्लिकाभाः नूतनमल्लिकासदृश्य सुरसैन्यानां महत्यः पताकाः वैजयन्त्यः तेन वायुना अलम् अतिशयेन विध्वस्य खण्डयित्वा नभःस्थलम् अन्तरीक्षं नीताः सत्यः दिवि आकाशे सिताम्बरकैतवेन श्वेतवस्त्रच्छलेन स्वर्गापगायाः मन्दाकिन्याः जलस्य ये महान्तः ओघाः प्रवाहाः तेषां सहस्रस्य लीलां विलासं व्यातेनिरे

धूतानि तेन सुरसैन्यमहागजानां
सद्यः शतानि विधुराणि दलत्कुथानि ।
पेतुः क्षितौ कुपितवासववज्रलून-
पक्षस्य भूधरकुलस्य तुलां वहन्ति ॥ २९ ॥
तास्ताः खरेण मरुता रथराजयोऽपि
दोधूयमाननिपतिष्णुतुरङ्गमाश्च ।
विस्रस्तसारथिकुलप्रवराः समन्ताद्
व्यावृत्य पेतुरवनौ सुरवाहिनीनाम् ॥ ३० ॥

विस्तारयामासुः प्रापुरित्यर्थः । अत्र कथमेकस्य लीलामपरोऽलङ्कुर्यादिति बिम्बानुबिम्बप्रत्यायनात् निदर्शनालङ्कारः । नभःस्थलमित्यत्र नभस्तलमिति दिवि सिताम्बरकैतवेनेत्यत्र दिविचरीं चिरविभ्रमेणेति च पाठान्तरम् ॥ २८ ॥

धूतानीति । सुरसैन्येषु ये महान्तः गजास्तेषां शतानि तेन वायुना धूतानि कम्पितानि विधुराणि कातराणि दलन् छेदं गच्छन् कुथः पृष्ठास्तरणकम्बलविशेषः येषां तथाभूतानि अतएव कुपितस्य वासवस्य इन्द्रस्य वज्रेण कुलिशेन लूनाश्छिन्नाः पक्षा यस्य तादृशस्य भूधरकुलस्य पर्वतवृन्दस्य तुलां सादृश्यं वहन्ति दधानानि सन्ति क्षितौ पृथिव्यां पेतुः पतन्ति स्म । उपमालङ्कारः ॥ २९ ॥

ता इति । सुरवाहिनीनां देवचमूनां ताः ताः रथानां राजयः सङ्घाः खरेण उग्रेण मरुता वायुना दोधूयमानाः पुनः पुनः कम्प्यमानाः अतएव निपतिष्णवः निपतनोन्मुखाः तुरङ्गमा अश्वा यासां तथोक्ताः तथा विस्रस्ताः विच्युताः सारथिकुलप्रवराः सारथिश्रेष्ठा यासां तथाविधाः सत्यः समन्तात् व्यावृत्य विपर्यस्ता भूत्वेत्यर्थः अवनौ पृथिव्यां पेतुः पतन्ति स्म । तास्ता इत्यत्र भ्रष्टा इति दोधूयमाननिपतिष्णुतुरङ्गमाश्चेत्यत्र दोधूयमाननिपतिष्णुतुरङ्गमध्ये इति विस्र-

हित्वायुधानि सुरसैन्यतुरङ्गवाहा-
वातेन तेन विधुराः सुरसैन्यमध्ये ।
शस्त्राभिघातमनवाप्य निपेतुरुर्व्यां
स्वीयेषु वाहनवरेषु पतत्सु सत्सु ॥ ३१ ॥

तेनाहतास्त्रिदशसैन्यपदातयोऽपि
स्रस्तायुधाः सुविधुराः परुषं रसन्तः ।
वात्याविवर्त्तदलवद् भ्रममेत्य दूरं
निःपेतुरम्बतलाद्वसुधातलेऽस्मिन् ॥ ३२ ॥

स्तसारथि कुलप्रवरा इत्यत्र पितस्तसारथिवरप्रकारा इति व्याहत्य पेतु-रित्यत्र व्याहत्तिमापुरिति च पाठान्तरम् । २० ।

छित्वेति । सुरसैन्येषु तुरङ्गवाहा अश्वारोहिणः तेन वातेन विधुराः व्याकुलाः सन्तः सुरसैन्यानां मध्ये आयुधानि अस्त्राणि छित्वा त्यक्त्वा शस्त्राभिघातं शस्त्रप्रहारम् अनवाप्य अप्राप्य अपिरलाध्याहार्यः । स्वीयेषु निजेषु वाहनवरेषु अश्वश्रेष्ठेषु पतत्सु सत्सु उर्व्यां पृथिव्यां निपेतुः निपतन्ति स्म । सुरसैन्यतुरङ्गवाहा इत्यत्र सुरसैन्यतुरङ्गधारा इति वातेन तेन विधुरा इत्यत्र वेगेन तेन विधुता इति च पाठान्त-रम् ॥ ३१ ॥

तेनेति । तेन वायुना आहताः ताड़िताः त्रिदशसैन्येषु पदा-तयः अपि सुविधुरा अतिव्याकुलाः स्रस्तानि हस्तेभ्यः च्युतानि आयुधानि येषां तथाभूताः तथा परुषं कठोरं रसन्तः नदन्तः सन्तः । वात्याया विवर्त्तेन विघूर्णनेन दलवत् पत्रवत् दूरम् अत्यर्थं भ्रमं घूर्णनं एत्य प्राप्य अस्मिन् वसुधातले रणक्षेत्रे अम्बरतलात् आकाशात् निःपेतुः निपतन्ति स्म वात्याविवर्त्तदलवद्भ्रममेत्येत्यत्र वायोर्हिंदन्त-दलइन्दमिवेत्येति वसुधातलेऽस्मिन्नित्यत्र वसुधातलेऽपिते इति पाठा-न्तरम् । उपमालङ्कारः ॥ ३२ ॥

इत्थं विलोक्य सुरसैन्यमथो अशेषं
दैत्येश्वरेण विधुरीकृतमस्त्रयोगात्।
स्वर्लोकनाथकमलाकुशलैकहेतु-
र्दिव्यं प्रभावमतनोदतनुः स देवः ॥ ३३ ॥

तेनोज्झितं सकलमेव सुरेन्द्रसैन्यं
स्वास्थ्यं प्रपद्य पुनरेव युधि प्रवृत्तम्।
दृष्ट्वासृजद्दहनदैवतमस्त्रमिद्ध-
मुद्दीप्तकोपदहनः सहसा सुरारिः ॥ ३४ ॥

वर्षातिकालजलदद्युतयो नभोऽन्ते
गाढ़ान्धकारितदिशो घनधूमसङ्घाः।

इत्थमिति। अथो देवसैन्यपतनानन्तरं स्वर्लोकनाथस्य सुरपतेः कमलायाः श्रियाः कुशलस्य मङ्गलस्य स्थापनस्येति भावः एकः अद्वितीयः हेतुः कारणं अतनुः महान् स देवः कुमारः इत्थम् अनेन प्रकारेण दैत्येश्वरेण तारकेण अस्त्रयोगात् वायव्यास्त्रप्रभावात् अशेषं समस्तं सुरसैन्य विधुरीकृतं विपर्य्यस्तं विलोक्य दिव्यं प्रभावम् अतनोत् विस्तारयामास। अथो अशेषमित्यत्राशेषमेवेति कुशलैकहेतुरित्यत्र कलैकहेतुरिति अतनुरित्यत्रातनुमिति च पाठान्तरम् ॥३३॥

तेनेति। तेन वायव्यास्त्रेण उज्झितं वियुक्तं दिव्यप्रभावादिति भावः सकलमेव सुरेन्द्रसैन्यं स्वास्थ्यं पूर्वावस्थामित्यर्थः प्रपद्य प्राप्य पुनरेव युधि युद्धे प्रवृत्तं समुद्यतं दृष्ट्वा सुरारिः तारकः सहसा उद्दीप्तकोपदहनः उज्ज्वलितकोपाग्निः सन् इद्धं दीप्तं दहनदैवतम् आग्नेयमित्यर्थः अस्त्रम् असृजत् तत्याज। तेनोज्झितमित्यत्र तेनान्वितमिति युधीत्यत्र युधे इति उद्दीप्तकोपदहनः इत्यत्र उच्चैः प्रकोपदहन इति च पाठान्तरम् ॥ ३४ ॥

वर्षेति। वर्षासु अतिकाला अतिकृष्णा ये जलदा मेघाः तेषां

सद्यः प्रसस्रुरसितोत्पलदामभासो
दृग्गोचरत्वमखिलं न हि सन्नयन्तः ॥ ३५ ॥
दिक्चक्रवालगिलनैर्मलिनैस्तमोभि-
र्लिप्तं नभःस्थलमलं घनवृन्दसान्द्रैः ।
धूमैर्विलोक्य मुदिताः खलु राजहंसा
गन्तुं सरः सपदि मानसमीषुरुच्चैः ॥ ३६ ॥
जज्वाल वह्निरतुलः सुरसैनिकेषु
कल्पान्तकालदहनप्रतिमः समन्तात् ।

द्युतिरिव द्युतिर्येषां तथाभूताः गाढं यथा तथा अन्धकारिता आच्छादिता दिशो यैः तादृशाः तथा असितोत्पलानां नीलोत्पलानां दामानि माल्यानि तेषामिव भासः प्रभाः येषां तथाभूताः घनाः सान्द्राः धूमसङ्घाः धूमराजयः अखिलं समस्तं जगत् दृशां दृष्टीनां गोचरत्वं विषयत्वं नहि सन्नयन्तः नैव प्रापयन्तः दर्शनशक्तिं नाशयन्त इत्यर्थः नभोऽन्ते गगनावकाशे सद्यः तत्क्षणात् आग्नेयास्त्रसन्धानमात्रेणैवेत्यर्थः प्रसस्रुः विस्तारं जग्मुः। वर्षातिकालेति तत्काल-जातेति गाढान्धकारितदिश इत्यत्र तत्रान्धकारितदिश इति नहि सन्नयन्त इत्यत्र द्युसदां हरन्त इति च पाठान्तरम् ॥ ३५ ॥

दिक्चक्रेति । दिशां चक्रवालं मण्डलं गिलन्ति ग्रसन्ति आच्छादयन्तीति तथोक्तैः घनानां मेघानां वृन्दानीव सान्द्राः घनाः तैः तमोभिः तिमिररूपैः मलिनैः धूमैः नभःस्थलम् अलम् अत्यर्थं लिप्तम् आवृतं विलोक्य खलु दृष्ट्वैव मुदिताः राजहंसाः सपदि सद्यः मानसं सरः गन्तुम् उच्चैरत्यर्थम् ईषुः इच्छन्ति स्म दिक्चक्रवालगिलनैरित्यत्र दिक्चक्रवालमिलितैरिति नभःस्थलमित्यत्र नभस्तलमिति मुदिता इत्यत्र पिहिता इति च पाठान्तरम् ॥ ३६ ॥

जज्वालेति । सुरसैनिकेषु देवसेनासु कल्पान्ते प्रलये यः काल-

आशामुखानि विमलान्यखिलानि कीला-
जालैरलं कपिलयन् सकलं नभोऽपि ॥ ३७ ॥

उज्जागरस्य दहनस्य निरर्गलस्य
ज्वालावलीभिरतुलाभिरनारताभिः ।
कीर्णं पयोदनिवहैरिव धूमसङ्घै-
र्व्योमाभ्यलक्ष्यत कुलैस्तड़िताभिवोच्चैः ॥ ३८ ॥

गाढ़ाद्भयाद्वियति विद्रुतखेचरेण
दीप्तेन तेन दहनेन सुदुःसहेन ।
दन्दह्यमानमखिलं सुरराजसैन्य-
मत्याकुलं शिवसुतस्य समीपमाप ॥ ३९ ॥

दहनः कालाग्निः तत्प्रतिमः तन्निभः अतुलः असमः महान् वह्निः कीलाजालैः शिखासमूहैः वह्नेर्द्वयोर्ज्वालावर्चिर्हेति शिखास्त्रियामित्यमरः विमलानि निर्मलानि अखिलानि आशामुखानि दिङ्मुखानि तथा सकलं नभोऽपि अन्तरीक्षञ्च अलम् अतिशयेन कपिलयन् पिङ्गलीकुर्वन् समन्तात् जज्वाल दिदीपे । आशामुखानि विमलान्यखिलानीत्यत्राशामुखान्यपिदधन्निखिलानीति पाठान्तरम् ॥ ३७ ॥

उज्जागरस्येति । पयोदानां मेघानां निवहैरिव धूमसङ्घैः धूमनिचयैः कीर्णं व्याप्तं नभः आकाशम् उज्जागरस्य उद्दीप्तस्य निरर्गलस्य निर्बाधस्य दहनस्य अग्नेः अतुलाभिः असमाभिः अनारताभिः सन्तताभिः ज्वालावलीभिः शिखाराजिभिः उच्चैः महद्भिः तड़ितां विद्युतां कुलैरिव अभ्यलक्ष्यत अदृश्यत । उत्प्रेक्षालङ्कारः ॥ ३८ ॥

गाढ़ादिति । गाढ़ात् अत्यन्तात् भयात् वियति आकाशे विद्रुताः पलायिताः दाहभयादिति भावः खेचराः व्योमचारिणः यस्मात् तादृशेन दीप्तेन सुदुःसहेन तेन दहनेन अग्निना दन्दह्यमानं पुनः पुनरतिशयेन वा दह्यमानम् अखिलं समस्तं सुरराजस्य सैन्यम् अति-

इत्यग्निना घनतरेण ततोऽभिभूतं
तद्देवसैन्यमखिलं विकलं विलोक्य ।
सस्मेरवक्त्रकमलोऽन्धकशत्रुसूनु-
र्बाणासनेन समधत्त स वारुणास्त्रम् ॥ ४० ॥
घोरान्धकारनिकरप्रतिमो युगान्त-
कालानलप्रबलधूमनिभो नभोऽन्ते ।
गर्जारवैर्विघटयन्नवनीधराणां
शृङ्गाणि मेघनिवहो घनमुज्जगाम ॥ ४१ ॥
विद्युल्लता वियति वारिदवृन्दमध्ये
गम्भीरभीषणरवैः कपिशीकृताशा ।

शयेन आकुलं सत् शिवसुतस्य कुमारस्य समीपं आप आजगाम । गाढ़ाद् भयाद् वियति विद्रुतखेचरेण दीप्तेनेत्यत्र तद्भ्रान्तो वियति चाद्भुत सञ्चरेण दीर्घेणेति पाठान्तरम् ॥ ३९ ॥

इतीति । ततः अनन्तरम् इति एवम्प्रकारेण घनतरेण प्रबल-तरेण अग्निना अभिभूतम् अतएव विकलम् अखिलं तत् देवसैन्यं विलोक्य सः अन्धकशत्रुसूनुः कुमारः सस्मेरं वक्त्रकमलं वदनपद्मं यस्य तथाभूतः सन् वाणासनेन धनुषा वारुणास्त्रं समधत्त संहित-वान् । बाणासनेनेत्यत्र बाणासनेऽथेति पाठान्तरम् ॥ ४० ॥

घोरेति । नभोऽन्ते गगनावकाशे घोरं निविड़ं यत् अन्धकारं तत् प्रतिमः अतएव कालानलस्य प्रलयाग्नेः प्रबलः उत्कटः यः धूमः तन्निभः तत्सदृशः मेघनिवहः जलदनिचयः गर्जारवैः गर्जन-ध्वनिभिः अवनीधराणां पर्वतानां शृङ्गाणि विघटयन् विश्लेषयन् सन् घनं सान्द्रं यथा तथा उज्जगाम उदियाय । विघटयन्नित्यत्र विघसयन्निति पाठान्तरम् ॥ ४१ ॥

विद्युल्लतेति । अथ मेघोदयानन्तरं वियति आकाशे वारिदानां

घोरा युगान्तचलितस्य भयङ्कराय
कालस्य लोलरसनेव चमत्चकार ॥ ४२ ॥
कादम्बिनी विरुरुचे विषकण्ठकाभि-
रुत्तालकालरजनीजलदावलीभिः ।
व्योम्न्युच्चकैरचिररुक्परिदीपिताशा-
दृष्टिच्छदा विषमघोषविभीषणा च ॥ ४३ ॥
व्योम्नस्तलं पिदधतां ककुभां मुखानि
गर्जारवैरविरतैस्तुदतां मनांसि ।

मेघानां वृन्दस्य समूहस्य मध्ये गम्भीरभीषणरवैः घोरा भीषणा कपिशीकृता पिञ्जरीकृता आशा यया तथोक्ता विद्युल्लता युगान्ते प्रलयकाले चलितस्य जगद्ग्रासोद्यतस्येत्यर्थः कालस्य भयङ्करा लोला चञ्चला रसनेव जिह्वेव चमत्चकार विस्मयं जनयामास । वारिदवृन्दमध्ये इत्यत्र वारिदवृन्दवर्गे इति भयङ्करायेत्यत्र भयङ्करस्येति पाठान्तरम् । ॥ ४२ ॥

कादम्बिनीति । विषाणि जलानि कण्ठे यासां ताभिः विषं तुङ्कवले तोये इति विश्वः उत्तालाभि रुन्नताभिः कालरजन्याः प्रलयरात्रेः जलदावलिभिः मेघराजिभिः दृष्टिच्छदा दृष्टिप्रावरणी तथा अचिररुग्भिः विद्युद्भिः परिदीपिता आशा दिशः यया तादृशी विषमेण घोषेण गर्जनेन विभीषणा विशेषेण भयप्रदर्शिनी च कादम्बिनी माला रचनाविशेषः उच्चकैः मह्हति व्योम्नि आकाशे विरुरुचे विदिद्युते । यद्यपि कादम्बिनीशब्दः कादम्बिनी मेघमालेत्यमराभिधानात् मेघमालावाचकः तथाप्यत्र केवलमालामभिधत्ते उक्ताश्च विशिष्ट वाचकानां पदानां सति हि पृथग् विशेषण समवधाने विशेष्यमात्रपरतेति ॥ ४३ ॥

व्योम्न इति । व्योम्नः आकाशस्य तलं ककुभां दिशां मुखानि

अम्भोभृतामतितरामनणीयसीभि-
र्धारावलीभिरभितो ववृषे समूहैः ॥ ४४ ॥
घोरान्धकारपटलैः पिहिताम्बराणां
गम्भीरगर्जनरवैर्व्यथितासुराणाम् ।
वृष्ट्या तया जलमुचां वरुणास्त्रजानां
विश्वोदरम्भरिरपि प्रशशाम वह्निः ॥ ४५ ॥
दैत्योऽपि रोषकलुषो निशितैः क्षुरप्रै-
राकर्णकृष्टधनुरुत्पतितैः स भीमैः ।
तद्भीतिविद्रुतसमस्तसुरेन्द्रसैन्यो
गाढं जघान मकरध्वजशत्रुसूनुम् ॥ ४६ ॥

च पिदधताम् आच्छादयताम् अविरतैः अनवरतैः गर्जारवैः गर्जनध्वनिभिः मनांसि तुदतां व्यथयताम् अम्भोभृतां पयोदानां समूहैः अनणीयसीभि रतिमहतीभिः धारावलीभिः अतितराम् अतिशयेन अभितः समन्तात् ववृषे वृष्टम् ॥ ४४ ॥

घोरेति । घोरैः सान्द्रैः अन्धकारपटलैः तिमिरचयैः पिहितम् आवृतम् अम्बरम् आकाशं यैः तथोक्तानां गम्भीरगर्जनरवैः व्यथिता असुराः यैः तादृशानां वरुणास्त्रजानां जलमुचां मेघानां तया वृष्ट्या विश्वस्य जगतः उदरम्भरिः कुक्षिम्भरिरपि जगद्व्यापकोऽपीत्यर्थः वह्निः प्रशशाम शान्तिं प्राप ॥ ४५ ॥

दैत्य इति । स दैत्योऽपि रोषेण क्रोधेन कलुषः मलिनः तथा तेभ्यः क्षुरप्रेभ्यः या भीति भयं तेन विद्रुतं पलायितं समस्तं सुरेन्द्रसैन्यं यस्य तथाभूतः सन् निशितैः तीक्ष्णैः अतएव भीमैः भयङ्करैः आकर्णकृष्टात् धनुषः उत्पतितैः क्षुरप्रैः तदाख्यैः अस्त्रविशेषैः मकरध्वजशत्रोः हरस्य सूनुं कुमारं गाढं दृढं यथा तथा

देवोऽपि दैत्यविशिखप्रकरं सचापं
बाणैश्चकर्त्त कणशो रणकेलिकारी ।
योगीव योगविधिशुष्कमना यमाद्यैः
सांसारिकं विषयसङ्गममोघवीर्यम् ॥ ४७ ॥

भ्रूभङ्गभीषणमुखोऽसुरचक्रवर्त्ती
सन्दीप्तकोपदहनोऽथ रथं विहाय ।
क्रीड़त्करालकरवालकरोऽसुरेन्द्र-
स्तं प्रत्यधावदभितस्त्रिपुरारिसूनुम् ॥ ४८ ॥

जघान विव्याध । तद्भीतिविद्रुतसमस्तसुरेन्द्रसैन्य इत्यत्र तद्भीतिविद्रुतसमस्तसुरेन्द्रसैन्यैरिति पाठान्तरम् ॥ ४६ ॥

देव इति । रणकेलिकारी संग्रामविहारी देवः कुमारोऽपि योगविधिना समाधिनियमेन शुष्कं निर्मलं मनो यस्य तादृशः योगी यमाद्यैः यमनियमप्रभृतिभिः सांसारिकं विषयसङ्गमिव बाणैः अमोघवीर्य्यम् अव्यर्थबलं सचापं सकार्मुकं दैत्यस्य विशिखप्रकरं शरसमूहं कणशः चकर्त्त चूर्णयामासेत्यर्थः । रणकेलिकारीत्यत्र रणकेलिकार इति योगविधिशुष्कमना इत्यत्र योगविनिषक्तमना इति विषयसङ्गमित्यत्र विषयवर्गमिति च पाठान्तरम् ॥ ४७ ॥

भ्रूभङ्गेति । अथानन्तरं भ्रुवोर्भङ्गेन भीषणं मुखं यस्य तथोक्तः सन्दीप्तः समुज्ज्वलितः कोपदहनः क्रोधानलः यस्य तादृशः तथा क्रीड़न् स्फुरन् करालः भीमः करवालः खड्गः करे यस्य तथाभूतः असुर चक्रवर्त्ती असुरेन्द्रः तारकः रथं विहाय तं त्रिपुरारिसूनुं कुमारम् अभितः प्रति प्रत्यधावत् अभिदुद्राव । असुरेन्द्र इत्यत्र दधान इति तं प्रत्यधावदित्यत्र चर्माभ्यधावदिति च पाठान्तरे चर्म दधान इत्यन्वयः ॥ ४८ ॥

अभ्यापतन्तमसुराधिपमीशपुत्रो
दुर्वारबाहुविभवं सुरसैनिकैस्तम् ।
दृष्ट्वा युगान्तदहनप्रतिमां मुमोच
शक्तिं प्रमोदविकसद्वदनारविन्दः ॥ ४९ ॥
उद्योतिताम्बरदिगन्तरमंशुजालैः
शक्तिः पपात हृदि तस्य महासुरस्य ।
हर्षाश्रुभिः सह समस्तदिगीश्वराणां
शोकोष्णबाष्पसलिलैः सह दानवानाम् ॥ ५० ॥
शक्त्या हतासुमसुरेश्वरमापतन्तं
कल्पान्तवातहतभिन्नमिवाद्रिशृङ्गम् ।

अभ्यापतन्तमिति । प्रमोदेन हर्षेण विकसत् प्रसादं गच्छत् वदनारविन्दं मुखकमलं यस्य तथाभूतः ईशस्य शम्भोः पुत्रः सुराणां सैनिकैः दुर्वारः निवारयितुमशक्यः बाह्वोर्विभवः सामर्थ्यं यस्य तादृशं तम् असुराधिप तारकम् अभ्यापतन्तम् अभिधावन्तं दृष्ट्वा युगान्ते प्रलयकाले यः दहनः अग्निः तत्प्रतिमां शक्तिं तदाख्यमस्त्रं मुमोच तत्याज । असुराधिपमित्यत्रासुरेश्वरमिति तमित्यत्र तैरिति च पाठान्तरम् ॥ ४९ ॥

उद्योतितेति । शक्तिः अंशुजालैः प्रभासमूहैः उद्योतितम् उद्भासितम् अम्बरम् आकाशं दिगन्तरं दिशामवकाशश्च यस्मिन् तद् यथा तथा तस्य महासुरस्य तारकस्य हृदि वक्षसि समस्तदिगीश्वराणां सर्वेषां दिक्पालानां हर्षाश्रुभिः आनन्दवाष्पैः सह तथा दानवानां शोकोष्णबाष्पसलिलैः शोकोष्णाश्रुभिः सह पपात । शोकोष्णेत्यत्र शोकोत्थेति पाठान्तरम् ॥ ५० ॥

शक्त्येति । त्रिदशेन्द्रमुख्याः इन्द्रादयः देवाः आपतन्तम् आगच्छन्तम् असुरेश्वरं शक्त्या हृता नाशिता असवः प्राणा यस्य तथोक्तम्

दृष्ट्वा प्ररूढ़पुलकाञ्चितचारुदेहा
देवाः प्रमोदमगमंस्त्रिदशेन्द्रमुख्याः ॥ ५१ ॥

यत्रापतत्स दनुजाधिपतिः परासुः
संवर्तकालनिपतच्छिखरीन्द्रतुल्यः ।
तत्रादधात्फणिपतिर्धरणीं फणाभि-
स्तद्भूरिभारविधुराभिरधोव्रजन्तीम् ॥ ५२ ॥

स्वर्गापगासलिलसीकरिणी समन्तात्-
सौरभ्यलुब्धमधुपावलिसेव्यमाना ।
कल्पद्रुमप्रसववृष्टिरभून्नभस्तः
शम्भोः सुतस्य शिरसि त्रिदशारिशत्रोः ॥ ५३ ॥

अमएव कल्पान्तवातेन प्रलयपवनेन हतं ताड़ितम् अतएव भिन्नं भेदं गतम् अद्रिशृङ्गमिव पर्वतशिखरमिव दृष्ट्वा प्ररूढ़ेन सञ्जातेन पुलकेन रोमाञ्चेन चारवः मनोज्ञाः देहाः येषां तथाभूताः सन्तः प्रमोदं हर्षम् अगमन् प्रापुः । शक्रया हृतासुमित्यत्र शक्ताथ तार-मिति त्रिदशेन्द्रमुख्या इत्यत्र त्रिदिवेशमुख्या इति च पाठान्तरम् ॥५१॥

यत्रेति । स दनुजानां दैत्यानामधिपतिः परासुः प्राप्तपञ्चत्वः अतएव संवर्त्तकाले प्रलयकाले निपतन् यः शिखरीन्द्रः शैलेन्द्रः तेन तुल्यः सन् यत्र अपतत् पपात, तत्र फणिपतिः शेषः तस्य तारकस्य भूरिभारेण प्रभूतगौरवेण विधुराभिः कातराभिः फणाभिः अधोव्रजन्तीं रसातलगामिनीं धरणीम् अदधात् यत्नेन दधारेति यावत् । संवर्त्तकालनिपतच्छिखरीन्द्रतुल्य इत्यत्र संवर्त्तवात निपतच्छिखरीन्द्र-कल्प इति पाठान्तरम् ॥ ५२ ॥

स्वर्गेति । स्वर्गापगाया मन्दाकिन्याः सलिलसीकरिणी जलकणशालिनी समन्तात् सर्वतः सौरभ्येण सौगन्ध्येन लुब्धाभिर्मधुपावलिभिः भ्रमरराजिभिः सेव्यमाना अनुगम्यमाना नभस्तः आकाशात् कल्प-

पुलकभरविभिन्नवारबाणा
भुजविभवं बहु तारकस्य शत्रोः ।
सकलसुरगणा महेन्द्रमुख्याः
प्रमदमुखच्छविसम्पदोऽभ्यनन्दन् ॥ ४५ ॥
इति विषमशरारेः सूनुना जिष्णुनाजौ
त्रिभुवनवरशल्ये प्रोद्धृते दानवेन्द्रे ।

कुमार्यां प्रसववृष्टिः पुष्पवृष्टिः त्रिदशारेः देवशत्रोः तारकस्य शत्रोः शम्भोः सुतस्य कुमारस्य शिरसि अभूत् पपातेति यावत् ॥ ५३ ॥

पुलकेति । महेन्द्रः मुख्यः प्रधानं येषां तथोक्ताः सकलसुरगणाः सर्वे देवाः पुलकानां रोमाञ्चानां भरेणातिशयेन भिन्नानि भेदं गतानि स्फुटितानीत्यर्थः वारबाणानि वर्माणि येषां तथोक्ताः तथा प्रमदेन प्रकृष्टहर्षेण मुखानां छविसम्पत् औज्ज्वल्यसमृद्धिर्येषां तादृशाः हर्षोत्फुल्लमुखा इत्यर्थः तारकस्य शत्रोः कुमारस्य भुजविभवं बाहुबलं बहु यथा तथा सगौरवमित्यर्थः अभ्यनन्दन् प्रशशंसुरित्यर्थः । पुलकभरविभिन्नवारबाणा इत्यत्र पुलकभरविभिन्नचारुदेहा इति सकलसुरगणा इत्यत्र सुरवरगणा इति प्रमदमुखच्छविसम्पद इत्यत्र प्रमदमुखद्युतिसम्पद इति च पाठान्तरम् । पुष्पिताग्रा वृत्तम् अयुजि न युग रेफतो यकारो युजि तु न जौ जरगाश्च पुष्पिताग्रेति तल्लक्षणात् ॥ ५४ ॥

इतीति । इति इत्थं विषमशरस्य कामस्य अरिः शत्रुः हरः तस्य सूनुना जिष्णुना विजयवता कुमारेण आजौ युद्धे त्रिभुवनस्य वरं महत् शल्यं तस्मिन् महाशल्यभूते इत्यर्थः दानवेन्द्रे तारके प्रकर्षेण सम्यक् उद्धृते उन्मूलिते सति अथानन्तरं बलरिपुः इन्द्रः नाकस्य स्वर्गस्य आधिपत्यं प्रपद्य प्राप्य सुराणां देवानां चूडारत्नैः शिरोमणिभिः घृष्टौ अग्रपादौ पादाग्रे यस्य तथाभूतः देववृन्दैः

बलरिपुरथ नाकस्याधिपत्यं प्रपद्य
व्यजयत सुरचूड़ारत्नघृष्टाग्रपादः ॥ ५६ ॥

श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये तारकासुरवधो नाम सप्तदशः सर्गः ।

समाप्तम् ।

प्रयात इत्यर्थः व्यजयत विशेषेण जयति स्म सर्वोत्कर्षेण तस्थावित्यर्थः । त्रिभुवनवरशल्ये इत्यत्र त्रिभुवन खलशल्ये इति प्रोद्धृते इत्यत्र प्रेरिते इति च पाठे प्रेरिते शमनसदनं नीते इत्यर्थः । मालिनीवृत्तं ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥ ५५ ॥

इति सप्तदशः सर्गः ।

इति बि, ए उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्येण विरचिता कुमारसम्भवस्य उत्तरखण्डव्याख्या समाप्ता ।